अत्र 'यादवतः' इति यमकचमत्काराय कविना द्वितीयपादे तथा च तृतीयचतुर्थ-पादयोरपि नैकशब्दसंयोजनेन स शब्दो निर्मितस्तच्छब्दस्य साम्यं वा निरुपितं तेन। सन्ति किन्तु तादृशान्यपि यमकस्थलानि काव्येऽस्मिन्येषु तस्यैव शब्दस्याव्यवहितप्रयोगः मनसि वदान्यं चमत्कारं जनयति—

**रुषितं सखि सादममुष्य लसत्तनुतेतनुते तनुतेऽत नु ते।**
**न न वाननवाननवाननवानिह ते चरणे मृतिमेष्यति सः ॥ २.२६ ॥**

अत्र द्वितीयपादे 'तनुते' तृतीयपादे 'वानन' इति पदयोरनयोरावृत्तिर्नूनं शाब्दीं शोभा-मुत्पादयति। अत्र समासो यथा—

लसन्ती तनुः यस्य तस्य भावो लसत्तनुता। कम्रवपुस्त्वमित्यर्थः। तया लसत्तनुतया इता प्राप्ता नुतिः स्तुतिर्ययेति तत्सम्बोधनं 'लसत्तनुतेतनुते। 'णु स्तुतौ' इति धातोः 'स्त्रियां क्तिन्' इति क्तिनि नुतिरिति रूपम्। वाननवाननवान्। वानं शुष्कम्। 'वनु याचने' इति धातोः भावे (पा० ३.३.१८) इति सूत्रेण घञ्। वानं शुष्कं तव कोपेन म्लानं नवम् आननं मुखम् अस्याऽस्तीति तथा वाननवाननवान्।

एतादृक्प्रयोगनैपुण्यं नूनं कवेः शब्दतच्छास्त्रे च महद्वैदुष्यं प्रमाणयति। तत्तद्धातूनां तत्तत्प्रत्ययसंयोगजन्यशब्दानां तत्तदर्थेषु शक्तिरिति शास्त्राध्ययनाधीनमेव। इह खलु कवे-स्तच्चातुर्यं स्पष्टं पदे पदे।

काव्येऽस्मिन् क्वचिच्छब्दप्रयोगसौन्दर्यं नूनं चमत्कारमुत्पादयति—

**अलिर्मिलत्परागतः सरोरुहात्परागतः।**
**मुखं मुदाऽपरागतस्तदीयमाप रागतः ॥**

**सरः श्रियोऽन्तरङ्गतः सरोजनृत्तरङ्गतः।**
**भयं महत्तरङ्गताः तनूजनस्तरङ्गतः ॥ २.४२-४४ ॥**

कवेर्वर्णनानुसारिपदप्रयोगनैपुण्यं नहि केवलमस्य शब्दशास्त्रवैदग्ध्यमपि तु पुरस्करोति सहृदयत्वमपि। केचन तादृशा अपि प्रयोगा इह भजन्ते नेत्रेन्द्रियविषयतां ये खल्वप्रयुक्ता एवास्मदैनन्दिनवाग्व्यवहारे। किन्तु तेषामुपयोगः सर्वत्रावश्यकः—

**पदवाऽपदवापदवापदवा रयतोऽद्रिवनं विललाप च सा। ३.४२**

पदाभ्यां चरणाभ्यां वाति चलतीति पदवा। 'वा गतिगन्धनयोः' इत्यस्मात् क्विप्। अस्य दैनन्दिनवाग्व्यवहारे व्याप्तिर्नैव व्याहन्यते। अपदवापत् = अपगता दवापत् दवाग्निरेव आपत् इति दवापत्। शब्दानामेतेषामर्थगाम्भीर्यमपि शब्दशास्त्राध्ययनविरहितानां कृते न्यूनमेव।

काव्येऽस्मिन् पदे पदे कवेरस्य व्याकरणज्ञानं परिचीयते। सहैव कोषेषु तस्यानितर-साधारणत्वमपि। किन्तु यमकपक्षपाती काव्यकृदयं क्वचिद् व्याकरणनियमं तिरस्करोति। यथा—

**अथ शबरो हास्यन्तं स्वासूंस्तदसूंश्च रिपुतरोहा.... ॥ ३.३७ ॥**

रिपुतरोहेत्यत्र 'ब्रह्मभ्रूणवृत्रेषु क्विबित्यनेन न क्विबुपपत्तिरिति प्रयोगोऽयमधिरोहति चिन्त्यपदवीम् । ग्रन्थकृच्छब्दसाधुत्वोपपत्तये रिपुतरः हा इति शब्दं कृत्वेति कथञ्चित् सङ्गतिः करणीया । एवं क्वचित्सन्धावपि यमकभङ्गप्रसङ्गः । यथा—

**योऽदम्भी मान्यायादधिकोऽथ रिपुर्यमेत्य भीमान्यायात् ।**
**वैदर्भी मान्या या त्रिजगति कन्या बभूव भीमान्यायात् ॥ १.१६ ॥**

इह चतुर्थे भीमान्यायादिति पदे (भीमात् न्यायात्) सन्धौ नकारस्य द्वित्वप्राप्तेः यमकभङ्ग इति सङ्गतिरस्य भजते विद्वद्विवेकाधीनताम् ।

## नलोदयस्य कर्ता

संस्कृतवाङ्मयाराधनैकव्रतिनः कवयः संसारमसारं मत्वा स्वजीवनवृत्तादिलेखने नोत्सहन्ते स्म; इति न केवलं नलोदयकर्तुः परिचयज्ञाने प्रमाणाभावोऽपितु तत्तत्कवीनां जीवनवृत्तादिविषये तथात्वमेवेति सुविदितमेव विपश्चिताम् । नलोदयकारस्य तु न केवलं जीवनवृत्तादि तस्य नाम अपि अज्ञातमेवेति विशेषः । कविनाऽनेन यद्यपि तस्य आश्रयदाता रामाख्यो[१] राजा कश्चन निर्दिष्टः काव्येऽस्मिन्न किन्तु स्वविषयकं किञ्चिदिति कः खलु काव्यस्याऽस्य नलोदयाभिधस्य कर्तेति प्रश्नोऽयमधिरोहति विवादपदवीम् । तत्तत्पुस्तकालयेषूपलब्धतत्तन्नलोदयमातृकासु कालिदासाऽभिनवकालिदासरविदेववासुदेवकेशवादित्यादिकवीनां[२] कर्तृत्वेनाऽस्योल्लेखात् कस्यचिदेकस्य कर्तृत्वनिर्धारणे प्रमाणाभावः । यमककाव्येष्वन्यतमत्वं भजमानं काव्यमिदं नलोदयाख्यं कदाचित्त्रिंशट्टीकाकृतां व्याख्याविषयत्वं भेज इति तत्तत्प्रदेशीयपाण्डुपुस्तकेषु तत्तत्कवीनां नलोदयकर्तृत्वेनाऽत्रोल्लेखः । अतो नलोदयमातृकाः प्रमाणतयाऽभ्युपगम्य कवेः कस्यचित् कर्तृत्वनिर्धारणापेक्षया प्रमाणान्तरमेव शरणमिह विदुषाम् ।

काव्यमिदं कालिदासप्रणीतमिति कासुचिन्मातृकासूल्लेखः ।[३] परम्परया मल्लिनाथपूर्ववर्तिनोऽपि कदाचिदेतदेव व्यवहरन्ति स्म; इति तद्भावभावितो मल्लिनाथोऽपि प्रसिद्धः काव्यतत्त्ववेत्ता कालिदासस्यैव कृतित्वमिह निरदिशत् ।[४] किन्तु कालिदासोऽयं रघुवंशादिग्रन्थकर्ता तदन्यो वेति न निर्देशः । परम्परया कालिदासकृतित्वेन व्यवहारमस्य वीक्ष्य साम्प्रतिका नलोदयसम्पादका अपि काव्यमिदं कालिदासप्रणीतमिति मत्वा तत्कृतिभिः सह[५]

---

१. अस्ति स राजा नीते रामाख्यो यो गतीः परा जानीते । नलो० १.५

२. NCC, Vol. IX

३. Ibid.

४. OML, Ms N0. 11846, colophon at the end of first canto reads: इति श्रीकालिदासकृतौ नलोदये महोपाध्यायकुलाचलमल्लिनाथसूरिविरचितायां नलोदयव्याख्यायां प्रथमाश्वासः ।

५. UTL, pp. 93

स्वतन्त्रं[१] वेदं प्रकाशतां नीतवन्तः । किन्तु नहि कथमप्यस्य साम्यं रघुवंशादिभिरिति नलोदय-रघुवंशादिकर्त्रोः एकत्वकल्पनं व्यर्थम् । रघवंशशाकुन्तलादिषु कालिदासकृतित्वेन प्रसिद्धासु कृतिष्वादौ शिवस्य वन्दनं नलोदये च कृष्णस्येत्युभयोः सम्प्रदायविरोधोऽनेन सिद्धः । अपि च नलोदयकर्तुराश्रयदो रामाख्यो यो हि राजा न स कालिदासकृतिषु कुत्रापि स्थानमवापेति काव्यस्यास्य कालिदासकृतित्वेन प्रतिष्ठापनं भ्रान्तिमूलकम् । अतश्चाधुनिकैः समीक्षकैः नीरक्षीरविवेकपुरस्सरं नलोदयादिकाव्यानां प्रसिद्धिलोभादेव कालिदासपक्षे निक्षेप इति निर्णीतम् ।[२]

ननु यमकबोधिन्यां[३] नलोदये मङ्गलाचरणत्वेन प्रकल्पितपद्येषु प्रथमश्लोकस्य शिवपरत्वं प्रतिपादितमिति तत्कर्तृ रघुवंशादिग्रन्थप्रणेतुश्चोभयोः सम्प्रदायसाम्यमुभयत्राप्यादौ शिवस्तुतेरिति चेन्न, रामर्षिणा प्रतिपादितार्थस्य परोक्षरूपत्वात् कृष्णस्य चेह प्रत्यक्षाराधनादुभयोः सम्प्रदायविरोधसिद्धेः ।

संस्कृतसाहित्ये कालिदासस्य वदान्यत्वात् तत्पश्चाद्वर्तिनोऽपि केचन कवयः कालिदासोऽभिनवकालिदासो वेत्युपाधिपात्रतां प्राप्नुवन् । कालिदासपदभाजां किन्तु तेषां रचनाव्यवहारोऽप्युपाधिमूलक इति तेषां केषाञ्चिद् वास्तविकं नाम शिष्यतेऽज्ञातमेव । तेलुगू-अकादेम्यां[४]संरक्षितेषु केषुचित्पाण्डुग्रन्थेषु नलोदयमिदमभिनवकालिदासकृतित्वेन निर्दिष्टम् । अभिनवकालिदास इत्ययमुपाधिरिति स्फुटं प्रतिभाति किन्तु कोऽयमासीदभिनव-कालिदास इत्युपाधिभाक् नेति कश्चन निर्देशः । कृष्णमाचारियर्महोदयेन सप्तसङ्ख्याका अभिनवकालिदासनाम्ना प्रसिद्धाः कवयो निर्दिष्टाः[५] । तेष्वेको विजयनगराधीशस्य राज-शेखररस्याऽसीत् सभाकविर्येन नैके ग्रन्थाः प्रणीताः[६] । कवेरस्य आश्रयदाता राजशेखरो भजते साम्यं नलोदयकर्तृ राजादित्येन[७] । किन्तु नलोदयकर्तुराश्रयदाता राजा रामोऽस्य चाभिनव-कालिदासस्य राजशेखर इत्युभयोराश्रयदातृभेदात् कवेरस्य नलोदये कर्तृत्वकल्पनमपास्तम् ।

सागरविश्वविद्यालयस्य संस्कृतविभागीयपुस्तकालये संरक्षणं प्राप्ता नलोदयमातृका केशवादित्यं नलोदयकर्तृत्वेनोपदिशति ।[८] गुर्जरप्रदेशे पुण्यपत्तनस्थभण्डारकरसंशोधन-

---

१. सर्वेषु खलु प्राचीननलोदयसंस्करणेषु कालिदासस्यैव कृतित्वं स्वीकृतम् । एतदर्थं पूनाविश्वविद्यालयस्य जयकरग्रन्थालये विश्वनाथपुस्तकालयेऽन्यत्र च संरक्षिता ग्रन्था आकलनीयाः ।

२. Mirashi, V.V, Kalidasa, pp. 107.

३. यमकबोधिनी—१.१

४. NCC, Vol. IX

५. HCSL,pp. 506

६. Ibid.

७. नलोदये,१८

८. The commantary of first conto ends with: इति श्रीमदभिनवशशिविराज-मानकेशवादित्य....

मन्दिरे चोपलब्धाः काश्चन मातृका अपि केशवादित्यमेव नलोदयकर्तारं मन्वते[१]। पीटर्सन-महोदयस्य[२] सूचनानुसारेण आफ्रेक्टः[३] सूचयति यन्नलोदयस्य केशवादित्यकृता काचिट्टीकाऽपि वर्तते। किन्तु न तस्य कापि टीका लभ्यत इति तन्मतनिरासपूर्वकं स्थापयति के. कुञ्जनीराजा।[४] अतो न केशवादित्यष्टीकाकारो नलोदयस्याऽपितु कर्तृत्वेनैव ग्रन्थस्याऽस्योल्लेखस्तस्य कासुचिन्मातृकास्विति निष्कर्षः।

कवेरस्य नलोदयकर्तृत्वेन कथितस्य तत्तन्मातृकासु न सर्वत्राऽपि तु क्वचिदेवाऽन्येन केनचित् कविना सहोल्लेखः। यथा सागरविश्वविद्यालयस्य संस्कृतविभागीयपाण्डुपुस्तके प्रथमोल्लासान्ते केशवादित्यस्योल्लेखः अन्यत्र च तस्मिन्नेव ग्रन्थे 'इति नलोदये' इति कविनामानुल्लेख एव। भण्डारकरप्राच्यविद्यासंशोधनमन्दिरे संरक्षितयोः मातृकयोः[५] चतुर्थोल्लासान्ते 'इति केशवादित्यविरचितनलोदये' इति रूपेण केशवादित्यस्य काव्यरचयितृत्वेनोल्लेखोऽन्यत्र च तयोरेव मातृकयोः कालिदासस्येति। तस्मिन्नेव सङ्ग्रहेऽन्यस्मिन् पाण्डुग्रन्थे[६] प्रथमोल्लासान्ते रविदेवस्य[७] द्वितीयतृतीयोल्लासयोरन्ते कालिदासस्य[८] चतुर्थोल्लासान्ते च केशवादित्यस्योल्लेखः[९]। मातृका एता यद्यपि केशवादित्यं नलोदयकर्तारं स्वीकुर्वन्ति किन्तु मध्ये कस्यचिदन्यस्यापीहोल्लेखान्नह्येतासां प्रामाण्यमङ्गी- करणीयम्।

नलोदयकर्तृत्वेन स्मृतेषु कविषु रविदेववासुदेवयोरेव समीक्षानिकषे दृश्यते किञ्चित् स्थैर्यम्। यतो ह्यनयोर्न केवलं नलोदयमातृकासु ग्रन्थेष्वन्येष्वपि यमककवित्वेनोल्लेखो लभ्यते। अतश्च अनयोरेव कश्चन नलोदयकर्तृपदमर्हतीति निर्विवादं वक्तुं शक्नुमः। किन्तु रविदेवो वासुदेवो वा नलोदयस्य प्रणेता इत्ययं पुनः महान् प्रश्नः। बहुषु खलु नलोदयपाण्डुग्रन्थेषु रविदेवोऽस्य कर्तृत्वेन स्मृतः। नलोदयस्य यमकबोधिनीति टीकायाः प्रणेता रामर्षिः रविदेवमेव काव्यकर्तारं मनुते[१०]। टीकाया अस्या मातृकासु क्वचिदयं भट्टनारायणसुतः क्वचिच्च नारायणसुतः कथित इति कवेरस्य पितुर्नाम भट्टनारायणः नारायणो वेति शक्यते

१. Ncc, Vol. IX

२. Peterson's Report, iv, pp. 395

३. CKSL,pp. 30

४. Ibid, Aufrect mentions a commentary on the Nalodaya by Keśavāditya on the authority of peterson's Report; but...there is no commentary on it by Keśvāditya.

५. Mss N0. 311/1884-86 and 410/1887-91

६. Ms N0. 409/1877-91

७. इति श्रीनलोदयाख्ये महाकाव्ये कविश्रीरविदेवकृते....

८. इति श्रीकालिदासकृतौ नलोदये...तथा च इति श्रीनलोदयकाव्ये कालिदासकृतौ...

९. इति श्रीकेशवादित्यविरिचते नलोदयकाव्ये.....

१०. Ncc, Vol. IX

वक्तुं यमकबोधिनीकृदुक्तिप्रामाण्यात्[१] । भट्टनारायणो नारायणभट्टो नारायणो वाऽयं यद्यपि यमककाव्यप्रणेतृषु स्थानं न लभते किन्तु रविदेवनामा कश्चन कविः श्रीकण्ठकविना तत्कृते रघूदये स्मृतः—

**व्यवहारविदेवायं न्यञ्चोऽत्र पदे सदब्जरविदेवाय ।**
**तत्सारविदेवायन्याये यमके नमोऽस्तु रविदेवाय ॥**[२]

रघूदयकर्तुरुक्तिरियं रविदेवं महाकवित्वकोटौ स्थापयति । श्रीकण्ठकविना नलोदयप्रभावेणैव रघूदयं व्यरचि । अथ च तस्यैवानुकृत्या स्वकाव्यशीर्षक 'उदयम्' इति पदं प्रायोजीत्यपि समीक्षकाः केचन वदन्ति[३] । रविदेव इतीदं न कस्यचित् स्वतन्त्रं नाम 'रविसुतवासुदेव' इत्यस्य संक्षेप इतीयमपि धीः कस्यचित्[४] । किन्तु पश्चाद्वर्तिभिर्भृशं खण्डितमिदं मतम् । अतो रविदेव-शब्दः न कस्यचित् नाम्नः संक्षेपोऽपितु कस्यचिद् विदुषः स्वतन्त्रं नामेति पर्यवस्यति । सन्ति तादृश्योऽपि काश्चन मातृका यासु वासुदेवः नलोदयकर्तृत्वेन निर्दिष्टः[५] । वासुदेवकृतित्वेन प्रसिद्धेषु शौरिकथोदयत्रिपुरदहनयुधिष्ठिरविजयग्रन्थेषु नलोदयस्य प्रभावोऽपि स्पष्टं लक्ष्यते । अतो नलोदयस्य कर्ताऽयमेव युधिष्ठिरविजयादिग्रन्थप्रणेता वासुदेव इति केषाञ्चिन्मतिः ।

नलोदयकाव्ये कवेराश्रयदातृत्वेन प्रतिष्ठितो राजा रामः शौरिकथोदयेऽपि प्रतिष्ठापितो दृश्यते[६] । त्रिपुरदहनस्याऽपि कासुचिन्मातृकासु राज्ञोऽस्योल्लेखः[७] । किन्तु युधिष्ठिरविजये न रामोऽपितु कुलशेखरनामा कश्चन राजा स्मृतः[८] इत्यनेन पुनः कविभेदशङ्केह

---

१. Tanjore, Ms N0. 15531 (3811), BORI Mss No. 185/1879-80, 411/1887-91,336/1895-98, 310/1884-86. commentary Avacūri also records that Ravideva is the author of Nalodaya. BORI Mss N0. T 12/1886-92, 350/1892-95, 713/1886-92.

२. NLD. pp 12

३. Ibid.

४. Ibid.

५. ORI Ms. Nos. 10677, 639, co 2445, 10677, 101. K. Kunjani Raja quotes a stanza from the commentary *vivaraṇa* which attributes this poem to son of Ravi.
रवितनुभूयमितायाः कृतेर्गतिः शब्दचित्रभूयमितायाः ।
जनहासाय मितायाः धियश्च विवृता मयाऽधुना यमितायाः ॥

६. शौरिकथोदये १.६, जयति सुधामा रामः । नलोदये १.५, अस्ति स राजा नीते रामाख्यो यो गतीः परा जानीते ।

७. रामसमत्वादेव स्रष्टा रामाख्यमकृत मत्वा देवः,NLD.pp. 13

८. युधिष्ठिरविजये १.६-तस्य च वसुधामवतः काले कुलशेखरस्य वसुधामवतः ।

जागर्ति रामकुलशेखरयोर्नामभेदात् । तथापि टीकाकाराणां वचः प्रामाण्यात् कुलशेखरोऽपि तस्यैव राज्ञो रामस्य नामेति तयोरेकत्वं प्रत्यपादि समीक्षकैः[१] ।

न केवलमेतत्, भाषादिगतं साम्यमपि ग्रन्थेष्वेतेषु विद्यत एव। नलोदये प्रतिविषयाऽरम्भे 'अथ' शब्दस्य प्रयोगो यथा दृश्यते तथैव युधिष्ठिरविजयादिष्वपि । ग्रन्थेष्वेतेषु छन्दोविधानमपि कामं समत्वं भजते। अतो रामनाथ-अय्यरमहोदयेन नलोदयस्य कर्ता युधिष्ठिरविजयादिग्रन्थप्रणेता वासुदेव एव न कश्चिदन्य इति स्वीकृतम् ।[२]

शौरिकथोदयस्य भूमिकायां तत्सम्पादकः कार्लसुनेसनोऽपि नलोदयोऽपि वासुदेवकविना प्रणीत इति स्थापयति ।[३] महाशयेन तेन नलोदय-शौरिकथोदययोः शब्दप्रयोगसाम्यं न्यरूपि—

१. 'नृ'-प्रातिपदिकस्य 'ना' इति प्रथमाविभक्त्येकवचनीयं रूपं स्वल्पमेव प्रयुज्यते संस्कृतकाव्येषु । शब्दोऽयं नलोदये शौरिकथोदये चोभयत्रापि प्रयुक्तः ।[४]

२. आर (ऋ गतावित्यस्माल्लिटि रूपम्) इतीदं रूपमप्युभयत्रापि प्रयुक्तम् ।[५]

३. 'नुन्न'- शब्दस्य प्रयोगोऽप्युभयत्र दृश्यते नलोदय-शौरिकथोदययोः ।[६]

४. रहण-शब्दोऽपि नलोदयेऽथ च शौरिकथोदय इत्युभयत्रापि प्रयुक्तः ।[७]

शब्दानामेतेषां प्रयोगः न केवलं शौरिकथोदयेऽपितु युधिष्ठिरविजये त्रिपुरदहनेऽपि दृश्यते । 'नुन्न' इति शब्दस्य प्रयोगो युधिष्ठिरविजये यथा—

नुन्नरथाश्वस्तेन....[८]

एवमेव त्रिपुरदहनेऽपि शब्दस्यास्य प्रयोगो लभ्यते । 'ना' शब्द 'आर' शब्दश्चोभयत्र युधिष्ठिरविजये[९] त्रिपुरदहने[१०] च प्रयुक्तौ । वासुदेवकृतित्वेन प्रसिद्धासूपर्युक्तासु युधिष्ठि-

१. CKSL, pp.20: कुलशेखर इत्यभिषेककृतं नाम पित्रादिकृतं तु रामवर्मेति.

२. JRAS. 1925 pp. 263-275; JMS pp. 302-311; JMS xvi pp. 134.

३. *Śaurikathodaya*, Ed. by Dr. Carl Suneson, published from the University of stockholm, 1986.

४. योऽजनि ना गोपीतः...नलोदये १.२.
मत्तः को ना मान्यः त्रैलोक्ये विद्यतेऽधिको ना मान्यः, शौरि० ३.३०

५. मूर्तिं मारसमानां योऽदधदायुः सहस्रमार...नलोदये १.११.

६. यन्नुन्नमुदलसन्नामानः, नलोदये-१.३
भिन्नमनुन्नमनेन प्रभुणा चरणाम्बुजेन नुन्नमनेन, शौरि. १.२१.

७. सहकारवृते समये सहका रहणस्य...नलोदये-२.१०
यो कृतपरशुग्रहणं रावणनिधनाद् व्यधाच्च परशुग्रहणम्, शौरि. ५.४८

८. ६.४३

९. ८.७,१५

१०. १.७३, २.४७,५०

रविजयादिकृतिषु यत्साम्यं[१] तन्नूनं नलोदयमपि कवेर्वासु वस्य कृतिरिति स्मारयति। तत्तच्छब्दानां चतुर्ष्वपि ग्रन्थेषूपलब्धेस्तत्तत्काव्यसङ्घटनानां च साम्यात् समीक्षका नलोदयं यद्यपि वासुदेवकृतित्वेन स्वीकुर्वन्ति किन्तु रविदेवादीनां नलोदयमातृकासु तत्कर्तृत्वेन स्मृत-कवीनां कर्तृत्वनिरासाय प्रमाणान्यन्वेष्टव्यानि। कविरयं वासुदेवः नलोदयकाव्यप्रभावादेव तत्तच्छब्दप्रयोगलोलुपः सञ्जात इत्यपि सम्भाव्यते।

किञ्च नलोदयमातृकासु तत्तत्कवीनां नामोल्लेखस्य कारणं, तत्तट्टीकाकृतां काव्य-कर्तृनामभ्रमश्चेत्यादयो नैके विषया अद्यापि समीक्षकमुखं निरीक्षन्ते। अतो यावन्नैते विषया भजन्ते समाधानपदवीं न तावद् वासुदेवस्य कृतित्वमिह निर्विवादं भविष्यति।

प्रसिद्धो भारतीयवाङ्मयवेत्ता ए. के. वार्डरः काव्येऽस्मिन्न वासुदेवस्याऽपितु रवि-देवस्य कृतित्वं वदति[२]। सुनेसनमहोदयेन शौरिकथोदयेन सह नलोदयस्य यत् साम्यं प्रादर्शि तत्समेषां चित्रकाव्यानां कृते सममेवेत्यपि तस्य निष्कर्षः[३]। वस्तुतस्तु नलोदयस्य काव्य-सौन्दर्यं कवेर्वर्णनानैपुण्यं च वासुदेवकृतित्वेन विख्यातं युधिष्ठिरविजयादिकाव्यत्रयमति-शेते। अतश्च रामनाथअय्यरमहोदयः वासुदेवग्रन्थेष्वन्तिमोऽयं ग्रन्थः नलोदयं नाम काव्यमिति निर्णीतवान्।[४] युधिष्ठिरविजयादिप्रणयनलब्धप्रतिभेन कविना वासुदेवेनान्ते नलोदयं नाम काव्यं व्यरचीति तस्य सिद्धान्तः। युधिष्ठिरविजयं कवेरस्य प्रथमं काव्यं, त्रिपुरदहनं द्वितीयं, शौरिकथोदयं तृतीयं नलोदयं च चतुर्थमिति तत्तत्काव्यकरणाभ्यासजन्यशे-मुषीवैचक्षण्यात् पूर्वकाव्यापेक्षया चारुत्वाधिक्यमत्र स्वाभाविकम्। वस्तुतस्तु युधिष्ठिरविज-यादौ[५] यत्प्रकृत्यादिवर्णनं न तत्कथमप्यनुत्कृष्टं नलोदयीयवर्णनाऽपेक्षया। त्रिपुरदहनस्या-ऽलङ्कारयोजनाऽपि भजते मनोहारित्वं[६] तत्तत्स्थलेष्विति वार्डरमहोदयस्य काव्यसौन्दर्याधि-करणेनेह वासुदेवकृतित्वानङ्गीकारत्वमसमीचीनं तत्तत्काव्येषु तत्तद्वर्णनस्य प्रभावोत्पादक-त्वादिति नलोदयं काव्यत्रयस्य युधिष्ठिरविजयादेः प्रणेतुर्वासुदेवस्यैव कृतिरिति कथमपि सिद्ध्यति।

किञ्च नहि वासुदेवकृतित्वेन विख्यातेषु काव्येषु कुत्रचिदपि नलोदयस्य तत्कर्तुर्वो-ल्लेख इति नहीयं कथमपि तस्य पूर्ववर्तिकविना विरचिता कृतिर्भवितुमर्हति। अतो वासुदेव-स्यैवेयं चतुर्थी कृतिरिति प्रतिष्ठापितं समीक्षकैः।[७]

---

१. Vide, NLD pp. 15-16. A list of striking similarities among these four poems has been given by editor.

२. IKL, Vol. v, pp. 387

३. Ibid.

४. QJMS,XIV, pp 3022-311.

५. ऋतुवर्णनम् २.४२-६१, जलक्रीडावर्णनम् ७७-८८ इत्यादीनि मनोहराणि।

६. सन्देहालङ्कारयोजना-१.५, रूपकयोजना ३.३

७. NLD pp. 17

किन्तु वासुदेवकृतिषु नलोदयस्याऽनुल्लेखात् तस्यैव कवेः कृतिरियमथवा भाषाप्रयोगकाव्यसौन्दर्यादिसाम्याद् वासुदेवकृतित्वेन व्यवहारोऽस्याः कियदौचित्यं भजत इति विद्वद्विवेकाधीनम् । नलोदयकर्तृत्वेन तत्तत्कविनामोल्लेखकारणज्ञानमेव काव्यस्याऽस्य कर्तृज्ञाने समाधानमिति तथा प्रयासो विधेयः विद्वद्भिरिति मे धीरिति दिक् ।

## नलोदयस्य कालः

नलोदये न तत्कृता किञ्चिदपि स्वजीवनवृत्तविषयकं निरदेशीति तत्रोक्तो राजा राम एव ग्रन्थस्याऽस्य कालनिर्धारणे शरणं विदुषाम् । यद्यपि कुलशेखरविरचितमुकुन्दमालायां[१] रविलोकवीरयोरुल्लेखादेतावता नलोदयेन सम्बन्धोऽस्य स्थापयितुं शक्यते किन्तु मुकुन्दमालाकृत् कुलशेखरः वासुदेवसमकालिककुलशेखरतो भिन्न इति बहुविधतर्कप्रदर्शनपुरस्सरं स्थाप्यन्ति तत्तत्त्वविदः ।

कविहृदयदर्पणटीकायां राज्ञोऽस्य रामाख्यस्य रामवर्मेति नाम निर्दिष्टम्[२] । राजादित्य-[३] शब्दस्य व्याख्याने यद्यपि टीकाकृत्सु वैमत्यं[४] तथाऽपि टीकायामस्यां नलोदयीयायां शब्दोऽयं रामस्यैव विशेषणत्वेन स्वीकृतः[५] राजादित्य इत्यस्यैव रामवर्मणोऽभिषेकप्रयुक्तं प्रजाभिर्नीयमानं नामान्तरमेव । विवरणकारस्याऽपि तथैवाऽभिप्रायः ।[६]कुलशेखर इत्यपि राज्ञोऽस्याऽभिषेककृतं नामेति[७] 'रामवर्मकुलशेखरः' 'रामवर्मराजादित्य' इति वा कथञ्चिदस्य नाम आयाति ।

केरलीयराजवंशपरम्परायां महोदयपुरस्य राज्ञां 'कुलशेखर' इत्ययमासीदुपाधिरिति[८] नैके कुलशेखरास्तत्र बभूवुः । तेषु किन्तु द्वित्रा एव स्ववैदुष्यवैशिष्ट्यात् प्रसिद्धिं गताः । रामवर्माकुलशेखरः महोदयपुरस्याऽन्तिमो राजा नलोदयप्रणेतुराश्रयदाता भवितुमर्हति । तस्य पूर्ववर्तिनोः रविरामराजादित्यस्य आदित्यनकोटरणादित्यस्य च नाम्नी नलोदयेऽभिहितराजादित्येन भजेते सादृश्यमिति नलोदयकारेण कदाचित् तदाश्रयदाता रामस्तत्पूर्ववर्तिनोः

---

१. यस्य प्रियौ श्रुतिधरौ रविलोकवीरौ मित्रे द्विजन्मवरपारशवावभूतम् ।
तेनाऽम्बुजाक्षचरणाम्बुजषट्पदेन राज्ञा कृता कृतिरियं कुलशेखरेण ॥ भाषाग्रन्थावली क्र. ९८, त्रिवेन्द्रम्.

२. यस्य च रामवर्मणः सम्बन्धिनि_NLD.1.5, pp. 73

३. नलोदये,१८

४. For example, Subodhinī explains this term as: राज्ञां क्षत्रियाणामादित्यः राजादित्यः । अथवा राजादित्यनामा नलभ्राता ।Mallinātha: Ms. N0./1846 at OML: राजादित्याख्यरामानुजाश्रिता भूः । Dīpikā: सराजादित्यात् राजादित्यो रामभ्राता तत्सहितात् ।

५. NLD. pp. 76,

६. ORT, Ms. No. 10677 राजादित्य इत्यमुष्यैवाऽभिषेकप्रयुक्तं नाम ।

७. CKSL, pp. 20

८. Ibid, pp. 1

रविरामराजादित्यकुलशेखर-आदित्यनकोटरणादित्ययोः कश्चन राजादित्य इति शब्देनाभिहितः स्यात् ।

राज्ञोऽस्य राजधानी महोदयपुरमेवाऽऽसीदिति युधिष्ठिरविजयटीकासु प्रतिपादितम्[१] । कुलशेखरविरचितसुभद्राधनञ्जयमिति नाटकस्य प्रस्तावनायां कवेरस्य महाभारते वैदुष्यं सूचितम्[२] । तथा च तन्नाटकेषु व्यङ्ग्यव्याख्यालेखकेन तत्त्वमिदं समर्थितम्[३] । युधिष्ठिरविजये कुलशेखरः पुराणाचार्यः परमेश्वर इत्यपरनामा भारतगुरुश्च स्तुतौ[४] । तन्मुखेन प्रसिद्धो नाट्यकारः कुलशेखरो नेतरो रामवर्मकुलशेखराद् यस्य आश्रयः यमककविना वासुदेवेन सेवित इति विश्वासो जागर्ति ।

किन्त्वनेनापि नहि सिद्धयति कुलशेखरस्य रामवर्मणः कालादिविषयकं किञ्चित् । कुलशेखरस्य नाटकेषु व्यङ्ग्यव्याख्यालेखकेन ध्वनेः ध्वनिशब्देनैव व्यवहारः कृतः इत्यतो राज्ञोऽस्य कुलशेखरस्य आनन्दवर्धनतः परवर्तित्वं सिद्धयतीतीत्थं तर्कयन् के. कुञ्जनीराजाक्राइष्टाब्दस्य नवमशतकं तस्य कालं मनुते[५] ।

इतरे तु जल्हणकृतसूक्तिमुक्तावल्यां कुलशेखरकृताऽऽश्चर्यमञ्जर्याः प्रशस्तौ पठितं पद्यं[६] राजशेखरकृतं मत्वा काव्यस्याऽस्य कालः दशमस्य ईस्वीयवर्षस्याऽऽरम्भ इति वदन्ति[७] । किन्तु टी. गणपतिशास्त्री त्रिपुरदहनस्य भूमिकायां दशमशतकस्योत्तरार्धस्य द्वादशशतकस्य च पूर्वार्धस्य मध्यकाले कुलशेखरस्य स्थितिरादर्तव्येति साध्नोति ।[८] शास्त्रिवर्यस्य मतमिदं परवर्तिभिः समीक्षकैर्निरस्तमिति नेदमुपयुक्तं भाति ।

---

१. CKSL. pp.26.

२. Sanskrit Dramas of Kulśekhara : A study, N.P.Unni, Trivendrum 1977, pp. 15, 24

३. Ibid

४. युधिष्ठिरविजये १.६-७
तस्य च वसुधामवतः काले कुलशेखरस्य वसुधामवतः ।
वेदानामध्यायी भारतगुरुरभवदाद्यनामध्यायी ॥
यं प्राप रमाचार्यं देवी च गिरां पुराणपरमाचार्यम् ।
यमशुभसन्तोदान्तं परमेश्वरमुपदिशन्ति सन्तो हान्तम् ॥

५. CKSL, pp. 12

६. दूरादपि सतां चित्ते लिखित्वाऽऽश्चर्यमञ्जरीम् । कुलशेखरवर्माग्र्यश्चकाराऽऽश्चर्यमञ्जरीम् । CKSL, pp 15

७. CarlSuneson, Śaurikathodaya, University of stockholm, 1986, pp. 19

८. Trivendrum Sanskrit Series No-11, preface.

कुलशेखरप्रणीतनाटकानां व्यङ्ग्यव्याख्यां दशमशतकानन्तरं लिखिता: केचन ग्रन्था उद्धृता वैजयन्तीजयमङ्गलादय:। तद्दृष्ट्वा समीक्षका: केचन कुलशेखरोऽयं १०५० ईस्वीयवर्षात् पश्चाद् ११५० ईस्वीयवर्षाच्च पूर्वमासीदिति वदन्ति ।[१]

[२]ए. के. वार्डर—[३]के. कुञ्जनीराजयोर्मतसमीक्षानन्तरं समीक्षका: स्थापयन्ति यन्महोदयपुरस्य राजा रामकुलशेखर एव नलोदयकर्त्रा तदाश्रयदातृत्वेन निर्दिष्ट:। अनेन अस्य राज्यमपि विभज्य परिवारजनेभ्यो दत्तमासीद् यद्धि नलोदयोक्त्या कथञ्चित् सङ्गच्छते ।[४] राजाऽयं स्वीयां राजधानीं विहाय पुत्राय राजपदं च दत्वा कुत्रचिदन्यत्र गतवानिति श्रूयते । अतश्च नलोदये राजादित्यशब्देन रामवर्मकुलशेखरपूर्ववर्तिनो: कश्चन अभिप्रेत:। एवं रामवर्मणो राज्ञोऽस्य कुलशेखराऽभिधस्य काल: ईस्वीयवर्षस्य एकादशशतकं सिद्धयतीति दिक् ।[५]

## नलोदयस्य टीकासम्पत्

व्यपेत-अव्यपेत-व्यपेताव्यपेतयमकभेदा द्वित्रिचतुष्पादादिमध्यान्तयमकभेदप्रभेदत्वेन प्रयुक्ता नलोदय इति यमकप्रयोगनिपुणस्य कवेरस्य शब्दसम्पद्व्याख्याने तत्परत्वं शब्दतत्त्वविदां कारणं ग्रन्थस्याऽस्य व्याख्याराशिवृद्धे:। नलोदयस्य ज्ञातकर्तृका अज्ञातकर्तृकाश्च प्रायशस्त्रयस्त्रिंशद् व्याख्या लभ्यन्ते। यासु केवलं चतस्रा एव प्रकाशतां गता:। अन्यास्तिस्र: संस्करणेऽस्मिन् प्रकाश्यन्ते। ग्रन्थस्याऽस्य चतस्र: प्रकाशितपूर्वा व्याख्या: सन्ति—

### १—मैथिलप्रज्ञाकरमिश्रकृता सुबोधिनी—

नलोदयटीकासु प्रधानतां प्राप्तेयं कदाचिद् दशवारं प्रकाशिता। अस्या: कर्ता प्रज्ञाकरमिश्र: मैथिलो ब्राह्मण आसीदिति ग्रन्थान्ते स्वपरिचयं विवृण्वान: स स्वयमेव वक्ति। व्याख्येयमिदानीं दुर्लभेति संस्करणेऽस्मिन्नपि सङ्गृहीता।

### २—कृष्णकृता सुबोधिनी—

टीकेयं १८६९ खीष्टाब्दे ग्रन्थलिप्यां प्रकाशिताऽनन्तरं च तेलुगूलिप्याम्। टीकाकार: प्रज्ञाकरमिश्ररस्य व्याख्यापद्धतिमनुसरति।

---

१. Sanskrit Dramas of Kulśekhara, N.P. Unni, pp. 40

२. NLD. pp.21

३. Ibid pp, 22

४. नलोदये,१ ७, अपि यो दायादाय स्यात् क्षयदोऽहसि—

५. NLD. pp. 22.

**३—भास्करानन्दसरस्वतीकृता नलोदयटीका—**

मैथिलप्रज्ञाकरमिश्रविरचितया टीकया सह भास्करानन्दसरस्वतीकृता व्याख्येयं १९०२ खीष्टाब्दे वाराणसीतः प्रकाशनमवाप ।

**४—श्रीकण्ठकृता कविहृदयदर्पणव्याख्या—**

इयं १९९५ वर्षे नवदेहलीतः प्रकाशिता व्याख्या के. के. हरिहरननाम्ना विदुषा सम्पादनं प्राप । व्याख्याकारः पदे पदे पाणिनिसूत्राणि प्रमाणतयोद्धरतीति विशेषोऽस्याम् ।

संस्करणेऽस्मिन् सङ्गृहीतास्तिस्रो व्याख्या इदं प्रथमतया प्रकाशनं प्राप्नुवन्ति । अन्वयदीपिका वस्तुतो न कस्यामपि मातृकायां समग्रतयोपलभ्यते । तत्तन्मातृकासु विकीर्णेयमस्माभिरत्र सङ्गृहीतेति । रामर्षिविरचिता यमकबोधिनी गोविन्दभट्टविरचिता च दीपिका क्रमशः भण्डारकरप्राच्यविद्यासंशोधनमन्दिरे त्रिवेन्द्रम् पाण्डुलिपिपुस्तकालये च संरक्षणं प्राप्तवत्यौ तत एव सम्पादिते ।

नलोदयव्याख्यासु मल्लिनाथकृता नलोदयव्याख्या[१] (अपूर्णा) दिनकरविरचिता सुबोधिनी[२](अपूर्णा) कृष्णीयव्याख्या,[३] विवरणम्,[४] अर्थदीपिका,[५]अवचूरिः,[६] जडावबोधिनी[७] (अपूर्णा), प्रकाशिनी[८] (अपूर्णा), विनायकविरचितं नलोदयटिप्पणं,[९]त्रिवेङ्कटसूरिप्रणीता विबुधनन्दिनी,[१०]मनोरथकृता विबुधचन्द्रिका[११] इति मुख्याष्टीकाः सन्ति । मल्लिनाथसदृशोऽपि व्याख्याता ग्रन्थममुं व्याकृतवानिति विद्यतेऽस्य महते गौरवायेति दिक् ।

---

१. Ms. No 11846, OML Madras.

२. ORI, Ms. No. 4723.

३. ORI, Ms No. 3638, Calicut, Ms. No. 1270 and 384, Tanjore, No. 10114 (3818)

४. ORI, Ms. No. 10677

५. Bhātatīya Itihāsasamśodhaka Mandala, Pune, Mss. No. 36/1792, and 46/98, Tanjore, 4749 (3824) India Office Library, London, Ms, No, 3785

६. BORI, Mss. Nos., 712/1886-92;713/1886-92, 350/1892-95.

७. BORI, Ms, No, 243/viśrāma (i)

८. BORI, Ms, No, 351/1892-95

९. BORI Mss. No, 450/1895-95

१०. BORI Mss, No, Dc. 11850 and 11853.

११. Bombay University Library, Ms. No. 3783.

# प्रथम उल्लासः[1]

**हृदय सदा यादवतः पापाटव्या दुरासदाया दवतः ।**

**अरिसमुदायादवतस्त्रिजगन्मा गाः स्मरेण दायादवतः ॥१ ॥**

अन्वयः—हे हृदय ! त्रिजगत् सदा दुरासदायाः पापाटव्याः अरिसमुदायात् दवतः अवतः स्मरेण दायादवतः यादवतः मा गाः ॥१ ॥

**नृसिंहाश्रमकृता अन्वयदीपिका**

**नत्वा नृसिंहं जगदेकसाक्षिणं,**

**कृत्वा प्रणामं गुरवे महात्मने ।**

**स्तुत्वा गणेशं गौरीसुतं प्रभुं,**

**करोमि टीकां च नलोदयस्य वै ॥ १ ॥**

**नलोदयस्य काव्यस्य टीकेयं च प्रतन्यते ।**

**नृसिंहाख्येन मुनिना स्वबोधार्थं यथामति[2] ॥२ ॥**

हृदयेति—हे हृदय ! हे चित्त ! सदा सर्वदा यादवतः श्रीकृष्णात् मा गाः पृथङ् मा भूस्तत्रैव निन्तरं रमस्वेत्यर्थः । किम्भूतात् यादवतः ? यदोर्गोत्रापत्यं यादवः । यादवात् इति यादवतः । सार्वविभक्तिकस्तस् । किम्भूतात् पापाटव्याः दवतः पापानाम् अटवी पापाटवी तस्याः पापाटव्याः दवात् इति दवतः पापारण्यस्य दाहकात् । पापसमूहस्य दवाग्नेः । किम्भूतायाः पापाटव्याः ? दुरासदाया, दुःखेन आसादयितुं शक्यायाः दुस्सहाया इत्यर्थः । पुनः किम्भूतात् यादवतः ? अरिसमुदायात् त्रिजगत् अवतः अरीणां शत्रूणां समुदायः समूहः तस्मात् अरिसमुदायात् त्रिजगत् त्रैलोक्यम् अवतः । अव रक्षणेऽस्य धातोः प्रयोगः । अवतीति अवन् तस्मादवतः रक्षकात् । पुनः किम्भूतात् यादवतः ? स्मरेण दायादवतः दायं पैतृकं धनम् । दायमत्तीति दायादः । दायादो

---

१. पाण्डुग्रन्थेषु क्वचिदुल्लासनाम्ना क्वचिदुच्छ्वासनाम्ना क्वचिच्चाश्वासनाम्ना सर्गविभागो दृश्यते । अस्माभिस्तूल्लास एव स्वीकृत इह ग्रन्थे ।

२. 'सर्वेषामुपकारतः' इति 'झ' पुस्तके पाठः ।

विद्यते यस्यासौ दायादवान्। तस्माद् दायादवतः कामेन प्रद्युम्नेन पुत्रवतः इत्यर्थः ॥ १ ॥

रामर्षिमिश्रकृता यमकबोधिनी

**प्रणम्य परमानन्दं यदुनन्दनमादितः ।**
**नालोदयी मया टीका यथाविधि वितन्यते ॥१ ॥**
**बुद्ध्वा बुधान् यमकसागरपारकामान् श्रीशङ्करैकशरणः करुणार्द्रचेताः ।**
**टीकां सुपोतसदृशीं हि नलोदयस्य प्राज्ञप्रियामलघु रामऋषिः करोति ॥२ ।**
**वृद्धो व्यासरित्पतिर्गुणगणानर्थैकरत्नाकरः,**
**प्रख्यातो जनकोऽस्ति यस्य सरसी काव्यज्ञमौलिद्युतिः ।**
**श्रीमद्रामऋषिर्महामणिरभूच्छ्रीगोमतीसम्भवः,**
**येनैषा क्रियते नलोदयगृहाज्ञानान्धकारः कृतिः ॥ ३ ॥**
**पीत्वाघ्राय पयः पदाङ्कुरमृतस्पर्द्धि प्रकोपी यथा,**
**तादृङ् नो वमति स्वरूपममलं तत्पायसं यादृशम् ।**
**दृष्टवालोच्य च सत्कृतिं सुगुणिनां संसिद्धिसन्दोहकृत्,**
**जानन् नय्यति निर्मलां न वदति प्रायस्तथा दुर्जनः ॥४ ॥**
**इह ध्रुवं यद्यपि सज्जनानां नाधिक्यमस्त्यजगद्गङ्गनानाम् ।**
**तथाप्यहं तद्विनयानुवर्ती करोमि टीकां प्रणयप्रवर्ती ॥५ ॥**

कविरधुना प्रारीप्सितग्रन्थनिर्विघ्नसमाप्तिकामो यथेष्टं निर्दिष्टदेवतास्मरणलक्षणमङ्गलमाचरति। हृदयेति—हे हृदय ! हे मानस ! त्वं सदा सर्वदा यादवतः यदुवंशे भवः यादवः तस्मादिति यादवात् श्रीकृष्णात् त्रिजगत् त्रैलोक्यं मा गाः मा गच्छ। कृष्णं विहाय अन्यत्साधनं मा कुरुष्वेत्यर्थः। यदोरयं वंशजो यादवः तस्माद्। भगवत एव त्रैलोक्यसुखहेतुत्वादित्याह। विशेषणत्रयेण प्रथममुपरि लोकहेतुत्वमाह। कीदृशात् यादवतः ? दुरासदायाः पापाटव्याः दवतः। आसाद्यते प्राप्यते इत्यासदः फलम्। दुष्टः आसदः फलं दुःखरूपं यस्याः सा तथा। यद्वा अन्यैरुपायैरभिभवितुमशक्यायाः पापाटव्याः दवतः दवाग्नेः 'वनवह्नि दवो दाव 'इति हलायुधः। दग्धपापवनस्य शुद्धत्वात् पुण्येन उपरि लोकसुखित्वमिति भावः। इह लोके सुखहेतुत्वमाह। पुनः कीदृशात् ? अरिसमुदायात् अवतःशत्रुसमूहात् रक्षतः। भक्तानिति शेषः। परैरनभिभूतस्य निष्कण्टकत्वादिह लोके सुखित्वमिति भावः। पुनः कीदृशात् ? स्मरेण दायादवतः कामेन पुत्रवतः। दायादौ पुत्रबान्धवावित्यमरः। सर्वलोकेषु कामस्यैव सुखहेतुत्वात् तन्निष्ठमेव भवेति वाक्यार्थः। अथवा हे हृदय ! त्वं यावदतो मा गाः पृथङ् मा भूः। कीदृशात् ? अरिसमुदायात् त्रिजगद् अवतः इति। अन्यत् तथैव। अस्मिन्नाश्वासे आर्यावृत्तं पदान्तयमकालङ्कारः।

मनसो भगवदाश्रयणम् इति भद्रग्रन्थादौ श्रीमहादेवस्मरणेन च सिद्धिदर्शनात् तद्गुण-प्रतिपादकं द्वितीयमर्थमाह । हे हृदय ! त्वं स्मरेण दायादवतः शत्रुमतः श्रीमहादेवस्य आ समन्तात् गाः वाणी अय स्मर, गत्यर्थानां ज्ञानार्थत्वात् । दायान् भागान् आदत्ते गृह्णातीति दायादः शत्रुः । स विद्यते यस्य सः दायादवान् । त्रिभिः शत्रुभिः सात्विकादिभिः स्वभावैः जगन्ति मिमीते स तथा । तस्य मनसः सम्बोधने । हे त्रिजगन्म ! बहुभिः स्वभावैः भ्रमतो जगत्येव मिमीते न ईश्वरमिति तात्पर्यम् । किं विशिष्टस्य रुद्रस्य ? सदायादवतः दायेन सह वर्तमानः सदायः । अदनम् आदः भक्षणं संहरणमिति यावत् । स विद्यते यस्य स अदवान् । सदायश्च सः अदवांश्च सदायादवान् । तस्य सदायादवतः । पुनः कीदृशस्य रुद्रस्य ? यतो रुद्रात् पापाटवी आ समन्तात् दूरे सुदूरे बभूव । यतः इति अध्याहार्यम् पुनः कीदृशस्य रुद्रस्य ? अरिसमुदायादवतः अरीन् स्यति नाशयति इति अरिसम् । शक्तिलक्षणम् आयुधः । तेन मुद् यस्य स तथा । तेन अरिसमुदायेन इत्यर्थः । दायादवतः पुत्रवतः । पुनः कीदृशस्य ? अयात् शुभावहविधेः श्रेष्ठविधितो रक्षकात् भक्तानिति शेषः ॥१ ॥

**आत्रेयगोविन्दभट्टविरचिता नलोदयदीपिका**

**अपारविद्योदधिपारमेतुं सेतुं सुरेन्द्रादिशुभैकहेतुम् ।**
**हेरम्बहेतोर्धिषणाभिलाषं हेरम्बसेवां समुपाश्रयेऽहम् ॥ १ ॥**

**प्रायो नलोदयमिदं निपुणैकगम्यं**
**नानारसैकनिलयं यमकातिरम्यम् ।**
**व्याख्यां विना न सुखबोधविधायिकाव्यम्**
**व्याख्यायतेऽस्य तदिहाखिलगूढमर्थम् ॥ २ ॥**

**अस्यानवद्यतरपद्यमनोहरस्य व्याख्याकृतेऽहमधिकं प्रयते वरस्य ।**
**विश्वस्य मार्गमुपदर्शयतो नरस्य शम्भुः स तं न किमु दर्शयिता नरस्य ॥**
**३ ॥**

ग्रन्थारम्भे श्रीकृष्णस्मरणरूपं मङ्गलमाचरति चतुर्भिः । हृदयेति—हे हृदय ! रे मनस् ! यादवतः यदुवंशोद्भवात् श्रीकृष्णात् सदा अनवरतं मा गाः मा गमः । किम्भूताद् यादवतः ? दुरासदायाः पापाटव्याः दुस्तरस्य दुरितारण्यस्य दवतः दावाग्नेः । पुनः किम्भूताया दवतः ? अरिसमुदायात् शत्रुसमूहात् । त्रिजगत् जगत्रयम् अवतः रक्षतः । पुन किम्भूतात् यादवतः ? स्मरेण कामेन प्रद्युम्नाभिधेन दायादवतः पुत्रवतः । दायादौ सुतबान्धवावित्यमरः । यद्वा हे सत् हृत् ! समीचीनहृदय आयात् द्रव्यात् प्रीणयतः । अन्यत्समानम् ॥१ ॥

**प्रज्ञाकरमिश्रविरचिता सुबोधिनी**

**कङ्कणफणिमणिराजमणिं दीपधिया वदनमारुतैरसकृत् ।**
**निर्वापयति कुमारे सगिरिसुतो जयति सस्मितः शम्भुः ॥ १ ॥**

**नलोदयस्य सहसा दुरूहस्य सुबोधिनीम् ।**

**क्रियमाणस्य मे कुर्वद्रूपोऽस्तु शरणं शिवः ॥ २ ॥[१]**

प्रतिबन्धकविघ्नाविघाताय श्रीकृष्णस्मरणरूपमङ्गलमादौ निबध्नाति । हृदयेति—हे हृदय ! अन्तःकरण ! यादवतः यादवात् पञ्चम्यास्तसिल् त्वं मा गाः मा गच्छेः । कथं भूतात् ? पापाटव्याः पापारण्यस्य दुरासदायाः दुःखेन सोढुं शक्यायाः दवतः दवाग्नेः अरिसमुदायात् शत्रुसमूहात् त्रिजगत् त्रैलोक्यम् अवतः पालयतो रक्षतो वा । पुनः कीदृशात् ? स्मरेण कामेन दायादवतः पुत्रवतः । दायादौ सुतबान्धवावित्यमरः ॥ १ ॥

अनुवाद—हे हृदय ! तीनों लोकों की सदैव अति कष्ट से सहने योग्य पापवन से उत्पन्न दावानल रूपी शत्रुसमूह से रक्षा करने वाले, कामदेव से पुत्रवान् श्रीकृष्ण से दूर न हो ॥ १ ॥

**योऽजनि नागोपीतश्चचार यो वल्लवाङ्गनागोपीतः ।**

**भूर्येनागोपीतः कंसाद् यो द्वेषमेव नाऽऽगोऽपीतः ॥ २ ॥**

**अन्वयः—**यः अगोपीतः अजनि । यः ना वल्लनाङ्गनागोपीतः (सन्) चचार । यः कंसात् द्वेषमेव न इतः (अपितु) आगोऽपि । इतः येन भूः अगोपि ॥ २ ॥

**अन्वयदीपिका—**योजनीति—यः ना श्रीकृष्णः अगोपीतः देवक्याः सकाशात् अजनि । योऽथवा गोपीतः यशोदायाः सकाशात् अजनि प्रादुरभूत् जात इत्यर्थः । पुनः यः ना वल्लवाङ्गनागोपीतः सन् चचार । वल्लवानां गोपानाम् अङ्गनास्तासां गोभिरिन्द्रियैः चक्षुरादिभिः पीतः सन् निरीक्षितः सन् । वृन्दावने इतस्ततः चचार । गतिं करोति स्म । गो शब्दस्य अनेकार्थवाचित्वात् अत्र सर्वैरिन्द्रियैः पीत इत्यर्थः, अतीव स्नेहत्वात् ।येन श्रीकृष्णेन पृथ्वी अगोपि अरक्षि । वराहरूपेणेति शेषः । पुनः यः श्रीकृष्णः इतः कंसात् मातुलात् केवलं द्वेषमेव वैरमेव न इतः न प्राप्तः । तर्हि किम् ? आगोऽपि अपराधोऽपि इतः प्राप्तः । पित्रोः कारागृहे रक्षणात् ॥ २ ॥

**यमकबोधिनी—**श्रीकृष्णस्य भूतलेऽवतीर्णत्वात् सुलभतामाह—यः ना पुरुषः अर्थात् कृष्णः गोपीतः देवक्या अजनि जातः । गां वाणीं सत्येन पालयतीति गोपो वसुदेवः । तस्य स्त्रीपुंयोगे इष्टा यशोदा वा । यः वल्लवाङ्गनागोपीतः सन् चचार । वल्लवानां गोपानाम् अङ्गनाः वल्लवाङ्गनाः । वल्लवाङ्गनानाम् आभीररमणीनां गोभिः नेत्रैः पीतः अत्यादरेणावलोकितः सन् व्रजे पर्यटितवान् इत्यर्थः । येन यादवेन भूः पृथ्वी अगोपि अरक्षि । कंसादिदुष्टवधद्वारा भूमिः पालिता इत्यर्थः । ननु जुगुप्सितमातुलवधं कुतः कृतवान् तथा सति पापदर्शनादिति चेत् तत्राह-यः कंसाद् द्वेषमेव इतः प्राप्तः । कंसस्तस्य द्वेषमेव कृतवानित्यर्थः । इतः कारणात् आगोऽपि इतः न पापमपि न । तद्वधे इति शेषः । जिघांसन्तं जिघांसीयादिति वाक्यात् । पापापराधयोरागः इत्य-

१. सुबोधिनीटीकया सह प्रकाशिते नलोदये न विद्यते श्लोकोऽयम् ।

मरः। येन इतः कंसात् भूरगोपि। यो द्वेषमेव इतः आगोऽपि न इतः इति वा वाक्ययोजना। कवेरभिप्रायानुसारेण यथार्थव्याख्यैव युक्तेति न द्वितीयाद्यर्थ-परिश्रमो विहितः ग्रन्थविस्तरभयान्न साधनप्रपञ्चश्चेति सर्वत्र ज्ञातव्यम् ॥ २ ॥

**दीपिका**—योऽजनीति—यः ना यः पुमान् गोपीतः व्रजाङ्गनाया देवक्याः सकाशात् अजनि जातः। रक्षित्वेन जनेरुपचारात् अजनीतिप्रयोगः। यः वल्लवाङ्गनागोपीतः आभीर-नारीनेत्रैः सादरावलोकितः सन् चचार ससार। येन भूः भूमिरगोपि अरक्षि। यः इतः कंसाद् द्वेषमेव द्विर्भावमेव न इतः किन्तु आगोऽपि इतः प्राप्तः। मातुलघात एव अपराधः ॥ २ ॥

**सुबोधिनी**—य इति—यः ना पुरुषः गोपीतः यशोदातः अगोपीतो देवकीतो वा अजनि जातः। यः वल्लवाः आभीरास्तेषाम् अङ्गनास्तासां गोभिः नेत्रैः पीतः सादरावलोकितः सन् चचार। दिङ्नेत्रघृणि भूजले लक्षदृष्ट्या स्त्रियां पुंसि गौरित्यमरः। येन भूरगोपि अरक्षि। यः कंसाद् द्वेषमेव इतः प्राप्तः। येन नागः कालियः कुवलयापीडो वा इतः दूरीकृतः[1]। यद्वा इतोऽस्मात् कंसात् द्वेषमेव केवलं न अपितु आगोऽपि अपराधमपि इतः प्राप्तः ॥ २ ॥

**अनुवाद**—जो श्रीकृष्ण क्षत्राणी देवकी या गोपी यशोदा से उत्पन्न हुए। ग्वालों की वधुओं के नेत्रों से आदर पूर्वक देखे जाते हुए जिन्होंने वृन्दावन में विचरण किया। जिन्हें कंस से केवल द्वेष नहीं अपितु अपराध भी प्राप्त हुआ। इधर (कंस) से जिन्होंने पृथ्वी की रक्षा की। अथवा वराह रूप में जिन्होंने पृथ्वी की रक्षा की। जिन्होंने कालियनाग या कुवलयापीड हाथी को दूर किया ॥ २ ॥

**यदरिषु सन्ना मानस्थितयो यन्नुन्नमुदलसन्नामाऽनः।**
**यत्र ससन्नामा न स्युर्भवभाजश्च पठितसन्नामानः ॥ ३ ॥**

**अन्वयः**—यदरिषु मानस्थितयः सन्नाः नाम। यन्नुन्नम् अनः उदलसत्। यत्र ससन्नामाः पठितसन्नामानः भवभाजश्च न स्युः ॥ ३ ॥

**अन्वयदीपिका**—यदरिष्विति—सः कः? यदरिषु मानस्थितयः सन्नाः नष्टाः। यस्य अरयः यदरयः तेषु यदरिषु यस्य श्रीकृष्णवैरिषु अभिमानस्थितयः नष्टा इत्यर्थः। नाम इति प्रसिद्धम्। यन्नुन्नम् अनः उदलसत्। येन श्रीकृष्णेन नुन्नं पदा प्रेरितं सत् शकटम् उदलसत् ऊर्ध्वं लसितं विपरीतं पतितमित्यर्थः। यत्र श्रीकृष्णे ससन्नामाः पुनर्भव-भाजः न स्युः। नमनं नामः। सम्यङ् नामः सन्नामः। सन्नामेन सह वर्तमानाः ससन्नामाः सम्यक् कृतनमस्काराः। यद्वा सतां शिष्टानां नामः नमस्कारः सन्नामः। तेन सह वर्त्तमानाः भवभाजः भवं संसारं भजन्ते ते न भवन्ति। संसारिणो न भवन्तीत्यर्थः।

---

१. विद्यावती–नागो मतङ्गजे सर्पे इति वाक्यात् येन श्रीकृष्णेन नागोऽपि इतः। नागः कालियः कुवलयापीडो गजो वेति श्लिष्टार्थः। इतः कंसात् येन भूः अगोपि इत्यप्यन्वयः।

किम्भूता: सन्नामा: ? पठितसन्नामान: पठितानि रामकृष्णादीनि नामानि यैस्ते पठित-सन्नामान: । यद्वा यावन्ति वेदाक्षराणि तावन्ति हरिनामानि इति वचनात् वेदपाठका अपि वेदं पठन्त: पठित-सन्नामानो भवन्ति । तेऽपि भवभाजो न भवन्तीत्यर्थ: । । ३ ॥

**यमकबोधिनी**—भगवत्प्रभावं वर्णयन् नमस्कारादि-फलमाह यदरिष्विति द्वयेन । यदरिषु यस्य श्रीकृष्णस्य अरयस्तेषु मानस्थितय: सन्ना: गलिता: । यस्य शत्रुषु अभिमानमर्यादा: परिक्षीणा: । यद्वैरिणो भग्नाभिमाना बभूवुरित्यर्थ: । नामेति प्रसिद्धौ । यन्नुन्नं येन श्रीकृष्णेन पदा क्षिप्तम् अन: शकटम् उदलसत् उदपतत् । यत्र यादवे ससन्नामा: च पुन: पठितसन्नामानश्च भवभाजो न स्यु: । सम्यक् नमनं सन्नाम: तेन सह वर्तमाना: ससन्नामा: । श्रीकृष्णे सम्यक् नमस्कारपरा इत्यर्थ: । पठितानि सन्ति प्रशस्तानि नामानि यैस्ते भगवन्नामकीर्तका इत्यर्थ: । महाप्रभावस्य भगवत: प्रणामादिना संसारनिवृत्तिरिति वाक्यार्थ: ॥ ३ ॥

**दीपिका**—यदरिष्विति—यदरिषु मानस्थितय: अभिमाननिवसतय: सन्ना: नष्टा: । यन्नुन्नं यच्चरणोक्षिप्तमन: शकटमुदलसत् उल्ललास । नामेति प्रसिद्धौ । यत्र ससन्नामा अभिवन्दनसहिता: । यद्वा नमनं नाम: । सतां नाम: सन्नाम: सन्नामेन सहिता: ससन्नामा: भगवज्जनेषु सनतय: । च पुन: पठितसन्नामान: कथितशोभनाभिधाना: भवभाज: न स्यु: न भवेयु: ॥ ३ ॥

**सुबोधिनी**—यदरीति—यस्यारिषु मानस्थितयोऽभिमानादिस्थानमित्यर्थ: । यद्वा मानश्चित्त-समुन्नति: स्थितिर्मयादा । मानश्च स्थितयश्चेति द्वन्द्व: । सन्ना: अवसन्ना जाता इत्यर्थ: । नाम सम्भावनायाम् । अन: शकटं येन नुन्नं प्रेरितं सत् उदलसत् चचालेत्यर्थ: । यत्र कृष्णे ससन्नामा: नमनं नाम: संश्चासौ नामश्चेति सन्नाम: । सन्नामेन सह वर्तमाना: ससन्नामा: कृतसम्यङ्नमस्कारा: । सांसारिका न स्यु: । कीदृशा: ? पठितसन्नामान: सन्ना च तानि नामानि पठितानि वारं वारं गृहीतानि सन्नामानि गोविन्दादीनि यैस्ते पठितसन्नामान: । यद्वा यस्मिन् मा लक्ष्मी: ससन्ना सन्निकटा समीपे निकटासन्नसन्निकृष्टसनीडवत् इत्यमर: । तेनादूरदेशान्तरवर्त्तित्वविशिष्टा समीपस्थितेति यावत् । आसन्न इति आङ् उपसर्गसहित: । अयं निरुपसर्ग: । च पुन: पठितसन्नामानो भवभाजो न स्यु: ॥ ३ ॥

**अनुवाद**—जिन श्रीकृष्ण के वैरियों के अभिमान की स्थितियां नष्ट हो गईं । जिनके पादप्रहार से शकटासुर नष्ट हो गया । जिनके नामों का स्मरण करने वाले या उन्हें श्रद्धा से नमस्कार करने वाले सांसारिक कष्टों में नहीं पड़ते ॥ ३ ॥

**समनिन्दानवना शं जनताऽलिकुलं यथैव दानवनाशम् ।**

**द्विरदाद् दानवनाशं जगच्च लभते यत: सदाऽनवनाशम् ॥ ४ ॥**

**अन्वय:**—यत: समनिन्दानवना जनता यथा अलिकुलं द्विरदाद् दानवनाशं (तथैव) शं, अनवनाशं जगच्च सदा एव दानवनाशं लभते ॥ ४ ॥

**अन्वयदीपिका**—समनिन्देति—जनता जनानां समूहः भक्तजनसमूहः यतः परमेश्वरात् शं सुखं लभते । अपरं च जगत् सदा सर्वदा दानवनाशं लभते । दानवानां दैत्यानां नाशः तं दानवनाशं प्राप्नोति । किंविधं जगत् ? अनवनाशं न विद्यते अवने रक्षणे आशा यस्य तत् अनवनाशम् । किं विधा जनता ? समनिन्दानवना निन्दा च नवनं च । नवनं स्तुतिः निन्दानवने समे तुल्ये यस्याः सा समनिन्दानवना । अव्ययानामनेकार्थत्वात् यथा शब्द इवार्थे । किमिव ? अलिकुलमिव यथा अलिकुलं द्विरदात् हस्तिनः सकाशात् दानवनाशं लभते मदजलभक्षणं प्राप्नोति । दानं मदः तदेव वनम् उदकं दानवनम् । अशनम् आशः भक्षणम् । दानवनस्य आशः दानवनाशः तम् । यथा अलिकुलं हस्तिनः सकाशात् मदोदकस्य भक्षणं प्राप्नोति इत्यर्थः । अप्सु प्रीतौ वने प्राज्ञे कानने गहने वने । सप्तस्वेषु मेधावी वनशब्दं विनिर्दिशेत् इति वररुचिः ॥ ४ ॥

**यमकबोधिनी**—समेति—जनता जनसमूहः यतो यादवात् सदा शं सुखं लभते । ग्रामजनबन्धुभ्यस्तल् । च पुनः यतो जगद् दानवनाशं दानवानां दैत्यानां नाशं तं विनाशं लभते । दैत्यविनाशे खलानामभवात् स्वस्थं भवतीत्यर्थः । किम्भूतं जगत् ? अनवनाशं, न विद्यते अवनस्य रक्षणस्य आशा यस्य तत् । अन्यस्य रक्षकस्याभावात् सर्वतो निजरक्षानिराशमित्यर्थः । किम्भूता जनता ? समनिन्दानवना निन्दा उपक्रोशः नवनं स्तुतिः । समे निन्दानवने यस्याः सा तथा । किमिव ? अलीनां कुलम् अलिकुलमिव । यथा अलिकुलं द्विरदात् हस्तिनः सकाशात् दानवनाशं दानस्य मदस्य वनं जलं तस्य आशो भोजनम् । किम्भूतम् अलिकुलम् ? दानस्य मदस्य जलं तदश्नाति तत् । पयः कीलालममृतं जीवनं भुवनं वनमित्यमरः ॥ ४ ॥

**दीपिका**—समनिन्देति—जनता जनसमूहः यतः श्रीकृष्णात् एवं शं सुखं लभते प्राप्नोति । च पुनः जगद् भुवनं दानवनाशं दनुजविनाशरूपं शं सुखं लभते । किम्भूता जनता ? समनिन्दानवना समाननिन्दास्तुतिः । किम्भूतं जगत् ? अनवनाशं न विद्यते अवनाशा पालनाशा यस्य तथा । कथम् ? यथा अलिकुलं भ्रमरसमूहः द्विरदात् गजात् लभते । किम्भूतमलिकुलम् ? दानवनाशं मदोदकभोजि ॥ ४ ॥

**सुबोधिनी**—विश्वजनसुखदातृत्वं तत एवेत्याह-समनिन्देति—जनता जगच्च यतः सदा शं लभते । जनानां भक्तानां समूहो जनता । च पुनः जगत् यतः कृष्णात् सदा शं सुखं लभते प्राप्नोति । किंविशिष्टा जनता ? समनिन्दानवना । निन्दा च नवनं च निन्दानवने । समे निन्दानवने यस्याः सा । निन्दास्तुत्योः समदृष्टिरित्यर्थः । किं विशिष्टं शम् ? अनवनाशम् अवनस्य रक्षणस्य नाशो यस्मिन् तत् । किन्तु सर्वतो रक्षकमित्यर्थ । तत्र दृष्टान्तः—अलिकुलं यथैव द्विरदात् गजेन्द्रात् शं सुखं लभते । किं विशिष्टं शम् ? दानवनाशं दानवनस्य आशो भक्षणं यस्मिन तत् । जीवनं भुवनं वनमित्यमरः ॥ ४ ॥

**अनुवाद**—निन्दा और स्तुति दोनों जिसके लिए समान हैं ऐसी जनता (भक्तमंडली) जिन भगवान् श्रीकृष्ण से उसी प्रकार सुख प्राप्त करती है जिस प्रकार हाथी के मद का

भोजन भ्रमर-समूह हांथी से प्राप्त करता है । जिसे अपने रक्षा की कहीं से भी आशा नहीं है, ऐसा जगत् जिनसे दानवों का नाश प्राप्त करता है ॥ ४ ॥

**अस्ति स राजा नीते रामाख्यो यो गतीः पराजानीते ।**

**यस्य रराजाऽनीते रत्नानि जनः कुले धराजानीते ॥ ५ ॥**

**अन्वयः**—सः रामाख्यो राजा अस्ति । यः नीतेः पराः गतीः जानीते । अनीतेः यस्य धराजानि रत्नानि इते कुले जनः रराज ॥ ५ ॥

**अन्वयदीपिका**—अस्तीति—स रामाख्यः राजा अस्ति । सः कः ? यः नीतेः राजनीतेः पराः उत्कृष्टाः गतीः जानीते । जानातीत्यर्थः । पुनः सः कः ? यस्य कुले जनः रराज सुखी बभूव । किं विधे कुले ? धराजानि रत्नानि इते प्राप्ते । धरायाः सकाशात् जातानि धराजानि । पुनः किम्भूतस्य ? अनीतेः न विद्यन्ते ईतयो यस्यासौ अनीतिः । 'अति-वृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः । स्वचक्रं परचक्रं वा सप्तैता ईतयः स्मृताः ॥ ५ ॥

**यमकबोधिनी**—भगवन्महिमानं प्रतिपाद्येदानीं राजकीयगुणान् आह—अस्तीति—सः राम इत्याख्या यस्य स रामाख्यः रामनामा राजा अस्ति इत्यन्वयः । रामस्य कवेश्च समकालीनत्वात् अस्तीति प्रयोगः । यतः कविस्तदाश्रये ग्रन्थमिमं चकार । तमेव वर्णयति । यो रामः नीतेर्न्यायस्य परा उत्तमा गतीः प्रकारान् जानीते वेत्ति । राजनी-तिगतिरेवाह । यस्य कुले जनो रराज । यस्य वंशे ज्ञातिजनो रराजेत्यर्थः । कीदृशस्य यस्य ? ईतिरुपद्रवोऽतिवृष्ट्यादिर्न विद्यते यस्य स तथा तस्य । कीदृशे कुले ? धराजानि धरायाः पृथ्व्याः जातानि रत्नानि इते प्राप्ते । अनेन तस्य कुले धनवृद्धिरिति ध्वनितम् । 'अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडैता ईतयः स्मृताः ॥ ५ ॥

**दीपिका**—चतुर्भिः कलापकम् । अतः परं मङ्गलानन्तरं ग्रन्थकारयितारं प्रस्तौति चतुर्भिः सार्द्धम् । अस्तीति—सः रामाख्यः राजा अस्ति । सः कः ? यः नीतेः । नयस्य परा उत्कृष्टाः गतीः स्थितीः जानीते जानाति । यस्य कुले यस्यान्वये जनः लोकः रराज शुशुभे । किम्भूतस्य यस्य ? अनीतेः न विद्यते ईतिर्बाधा यत्र सः अनीती तस्य अनीतेः । किम्भूते कुले ? धराजानि भूसमुत्पन्नानि रत्नानि इते प्राप्ते ॥ ५ ॥

**सुबोधिनी**—इदानीं काव्यरचना प्रारीप्सुर्महाकविः कालिदासः श्रेष्ठं रामाख्यं राजानं श्लाघते । अस्तीत्यादि—पञ्चभिः । स रामाख्यः राजा अस्ति । यो नीतेः राजनीतेः पराकाष्ठाः गतीः व्यवहारान् जानीते । यस्य कुले जनः रराज शुशुभे । किं विशिष्टे कुले ? धराजानि रत्नानि इते । धरायाः सकाशात् उत्पन्नानि यानि गजाश्वादीनि (तानि) इते प्राप्ते । कथं भूतस्य रामस्य ? अनीतेः न ईतयो यस्य स अनीतिः तस्य । यस्य राज्ये सप्त ईतयो नाभवन्नित्यर्थः ॥ ५ ॥

**अनुवाद**—वह राम नामक राजा है। जो नीति के उत्तम प्रकारों को जानता है। अतिवृष्टि अनावृष्टि आदि विपत्तियों से रहित जिसके पृथ्वी से उत्पन्न रत्नों से समृद्ध कुल में लोग सुखी थे ॥ ५ ॥

**यः सेनानावाऽरिप्रकरनदीः शरमयं धुनाना वारि।**

**अतरन्ना नाऽवारि व्यसनैर्यद्भुवि वनं च नानावारि ॥ ६ ॥**

**अन्वयः**—यः शरमयं वारि धुनानाः अरिप्रकरनदीः सेनानावा अतरत् (अपि च) यः ना व्यसनैः न अवारि। यद्भुवि वनं च नानावारि ॥ ६ ॥

**अन्वयदीपिका**—यः सेति—सः कः? यः रामाख्यः राजा सेनानावा अरिप्रकरनदीः अतरत् ततार। अरिप्रकरनदीः सेना एव नौः नौका सेनानौस्तया सेनानावा। अरीणां शत्रूणां प्रकराः समूहाः अरिप्रकराः। त एव नद्यस्ताः अरिप्रकरनदीः शत्रुसमूहसरितः ततारे-त्यर्थः। किम्भूताः अरिप्रकरनदीः? शरमयं वारिधुनानाः। शराः प्रचुरा यस्मिन् तच्छरमयम्। वारिधुनाना धुनीते सा धुनाना कम्पमाना इत्यर्थः। यद्भुवि यस्य रामस्य भूः तस्याम्। यद्देशे ना पुरुषः व्यसनैः कष्टैः न अवारि न वृतः। च अपरं वनम् अरण्यं नानावारि नानावारयो गजबन्धनस्थानानि यस्मिन् तत् नानावारि एवं विधं वनं वर्तते। यद्वा यः ना राम पुंगुणयोगी सन् मृगया-द्यूत-सुरा-स्त्रीसेवनरूपैर्दोषैः नावारि न वृतः। न वशीकृत इत्यर्थः। यद्वा यः रामः व्यसनैर्दुःखैर्न अवारि न वृत इत्यर्थः ॥ ६ ॥

**यमकबोधिनी**—य इति—यः रामः सेनानावा अरिप्रकरनदीः अतरदित्यन्वयः। अरीणां प्रकराः समूहास्त एव नद्यस्ताः। कया? सेनानावा। सेनैव नौः तरणिस्तया। यः सेनया शत्रूनजयत् इत्यर्थः। कीदृशीः अरिप्रकरनदीः? शरमयं वारि जलं धुनानाः आक-म्पयन्तीः। शरमयजलाघूर्णनेनास्याः सेनायास्तरण्या विना दुस्तरत्वं ध्वनितम्। यद्भुवि यद्राज्यभूमौ ना पुरुषो व्यसनैर्विपत्तिभिर्न अवारि न वृतः। यद्राज्ये कश्चिद् दुःखी नाभवदित्यर्थः। व्यसनं विपदि भ्रंशे दोषे कामजकोपने इत्यमरः। च पुनः यद्भुवि वनम् अरण्यं नानावारि नाना बहुप्रकारवार्यो गजग्रहणगर्ताः यत्र तत् स्त्री, गजग्रहणस्थानानि। वारि स्यात् सलिलेऽपि चेति यादवप्रकाशः। अमरोऽपि वारि स्याद् गजबन्धनीति। ना रामः व्यसनैर्नानावारीति व्याख्याऽसङ्गत्योपे-क्षिताऽस्माभिः। सेनया अरिजयेन बहुगजग्रहणेन च राजनीतिः सूचिता ॥ ६ ॥

**दीपिका**—य इति—यः रामः सेनानावा वाहिनीनौकया अरिप्रकरनदीः शत्रुसमूहसरितः अतरत् ततार। किम्भूताः अरिप्रकरनदीः? शरमयं बाणप्रचुरं वारिजलं धुनानाः प्रेरयन्त्यः। यः व्यसनैः दुःखैः न अवारि न परिवृतः। यद्भुवि यस्य भूमौ वनं विपिनम्। अस्तीति शेषः। किम्भूतं वनम्? नाना वार्यः गजबन्धनो यस्मिन्। वारीतु दोहिनी प्रोक्ता वारी तु गजबन्धनीत्यमरः ॥ ६ ॥

**सुबोधिनी**—य इति-यः सेनावा सैन्यनौकया अरिप्रकरनदीः शत्रुसमूहनदीः अतरत् तीर्णवान् । कीदृशीर्नदीः ? शरमयं बाणमयं वारिंधुनानाः कम्पायमानाः । यद्भुवि ना पुरुषः व्यसनैर्न अवारि इति काकुः । अपि वारित एव । च पुनर्यस्य वनं नानावारि नानागजबन्धनयुक्तम् । वारी तु गजबन्धनीत्यमरः ॥ ६ ॥

**अनुवाद**—उस राजा ने बाणरूपी जल से लहराती हुई शत्रुसमूह रूपी नदियों को सेना रूपी नौका से पार किया । जो राजा होकर भी मृगया, द्यूत, सुरा आदि का व्यसनी नहीं था । जिसके राज्य के वन में जंगली हाथियों के बांधने के स्थल थे या जिसके राज्य के वन में जंगली हाथियों को पकड़ने के लिए गड्ढे बना दिए गए थे ॥ ६ ॥

**अपि यो दायादाय क्षयप्रदोंऽहसि[१] सतां यदाया दायः ।**

**करमादायादाय श्रियो[२]ऽब्धिरधिराजमसिगदायादा यः ॥ ७ ॥**

**अन्वयः**—यः अंहसि दायादाय अपि क्षयप्रदः । यदायाः सतां दायः । यः अधिराजं करम् आदाय आदाय असिगदायादाः श्रियोऽब्धिः(सञ्जातः) ॥ ७ ॥

**अन्वयदीपिका**—अपीति—यः रामः अंहसि अपराधे सति दायादाय अपि पुत्राय अपि क्षयप्रदः । दायः पैतृकं धनम् । तमत्तीति दायादः तस्मै । दायादस्यापि शास्ता का कथा पुनरन्येषाम् । पुनः यदायाः सतां दायः । यस्य दायाः यदायाः सत्समृद्धयः सतां पण्डितानां दायः पितृधनं भवति । पुनः यः रामः अधिराजं करम् आदाय श्रियः अब्धिः । राजभ्यः अधि इति अधिराजम् । सर्वान् राज्ञः अधिकृत्येत्यर्थः । करं दण्डम् आदाय गृहीत्वा लक्ष्म्याः आश्रयभूतः सागरः (सञ्जातः[३]) । किं विधः अब्धिः ? असिगदायादाः अशयश्च गदाश्च असिगदाः असिगदा एव यादांसि[४] खड्गमत्स्यादिरूपा यस्मिन् (स तादृशः सञ्जात इत्यर्थः[५]) यादांसि जन्तव इत्यर्थः ॥७ ॥

**यमकबोधिनी**—अपीति—यो रामः अंहसि अपराधे सति दायादाय अपि पुत्राय अपि क्षयप्रदः । यः अपराधिनं पुत्रमपि हन्यादित्यर्थः । धर्मिष्टतामाह—यदायाः सतां दायाः । यस्य आयाः धनानि सतां साधूनां दायो विभागः । यः साधुभ्यो धनानि विभजतीत्यर्थः । यदायाः यस्य लाभाः सतां दायो लाभ इति । यः राज्ञोऽधिकृत्येति अधिराजं करमादाय आदाय श्रियोऽब्धिः । राज्ञः अधिकृत्य तेभ्यः करं बलिं गृहीत्वा समुद्रतुल्य इत्यर्थः । अब्धिसाम्यमाह—कीदृशोऽब्धिः ? असिगदायादाः अशयश्च गदाश्चासिगदाः । ता एव यादांसि जलचरप्राणिनो यत्र स तथा । अनेन

---

१. स्यात् क्षयदोंऽहसि इति 'ञ' पुस्तके पाठः ।

२. श्रियाब्धिरिति 'ञ' पुस्तके ।

३. सञ्जात इति पदं सम्पादकस्य ।

४. यादांसि जलजन्तवः इत्यमरः ।

५. कोष्ठकान्तर्वर्ति वाक्यं सम्पादकस्य ।

अस्य सम्पन्नकोशता सूचिता। सापराधदण्डेन राजकरादानेन च राजनीतिः सूचिता। यदुक्तं त्याज्यो दुष्टः प्रियोऽप्यासीद् दष्टोऽङ्गुष्ठ इवाहिनेति। यच्च अनादेयं नाददीत् परिक्षीणोऽपि पार्थिवः। न च देयं समृद्धोऽपि सूक्ष्ममर्थार्थमुत्सृजेदिति ॥ ७ ॥

**दीपिका**—अपीति—यः दायादाय अपि पुत्राय अपि अंहसि अपराधे सति क्षयप्रदः नाशदः। यदायात् लाभात् सताम् आयः लाभः। यः अधिराजम् राज्ञोऽधिकृत्य राजभ्य इत्यर्थः। करं दण्डमादाय आदाय गृहीत्वा गृहीत्वा श्रियः लक्ष्म्या अब्धिः समुद्रः। किम्भूतो यः? असिगदायादाः असयश्च गदाश्च असिगदाः। असिगदा एव यादांसि यस्मिन् सः ॥ ७ ॥

**सुबोधिनी**—अपीति—यः अंहसि पापे जाते दायादाय पुत्राय क्षयप्रदः नाशकर्ता। यदायाः यस्य आयाः धनागमनानि सतां दायः न्यायप्राप्तो भागः। पुनश्च यः अधिराजं राजानमधिकृत्य करमादाय आदाय श्रियः अब्धिः। कीदृशः? असिगदायादाः असिश्च खड्गं गदा च असिगदे यादांसि जलजन्तवो यत्र स तथा ॥ ७ ॥

**अनुवाद**—जो दोषी होने पर अपने पुत्र को भी मृत्युदंड देता था। जिसकी संपत्ति सज्जनों का हिस्सा थी। जो अपने अधीनस्थ राजाओं से कर ले ले कर लक्ष्मी का आश्रय समुद्र बन गया था और तलवार गदा आदि उस समुद्र में जल-जंतुओं की तरह रहते थे ॥७ ॥

**[१] अविदूराजादित्याऽऽश्रिताऽल्पभेदैव भूः सराजादित्या।**

**येन सराजादित्यात्त्रिदिवात् संयुक्तशत्रुराजादित्या ॥ ८ ॥**

**अन्वयः**—येन दित्या संयुक्तशत्रुराजा अदित्या आश्रिता सराजादित्या अविदूराजा भूः सराजादित्यात् त्रिदिवात् अल्पभेदा एव (कृता) ॥ ८ ॥

**अन्वयदीपिका**—अविदूराजेति—पुनः सः कः? येन भूः त्रिदिवात् स्वर्गात् अल्पभेदा एव कृता। अल्पभेदो यस्याः सा। कया? अदित्या अखण्डनेन न्यूनभेदैव कृता न न्यूनभेदैव कृता सम्यक् प्रजापालनेन। किंविधा भूः? अविदूराजा न विदूरः अविदूरः अजः श्रीकृष्णः यस्याः सा अविदूराजा विष्णुभक्तत्वात्। पुनः किम्भूता भूः? सराजादित्या राजादित्यः रामस्य कनिष्ठो भ्राता तेन सह वर्तमाना। किं विधात् त्रिदिवात्? अविदूराजान् अर्थवशाद् विभक्तिविपरिणामः। अविदूरो निकटवर्ती अजो ब्रह्मा यस्मिन् तत् अविदूराजं तस्मात्। पुनः किंविधात् त्रिदिवात्? आदित्यात्। अदितिर्देवमाता यस्मिन् तत् आदित्यम्। तस्मात् आदित्यात् देवमात्रा युक्तात्। अर्थवशाद् विभक्तिविपरिणामः। पुनः किं विधात्? सराजादित्यात् राजा च आदित्यश्च राजादित्यौ चन्द्रसूर्यौ ताभ्यां सह वर्तमानं सराजादित्यम्। तस्मात्

---

१. अतिदूरा इति क, ग, घ, पुस्तकेषु पाठः।

सराजादित्यात्। सोमोऽस्माकं ब्राह्मणानां राजा इति श्रुतेः। किं विधेन रामेण? दित्या खण्डनेन वधेन सह संयुक्तशत्रुराट्। तेन संयुक्तशत्रुराजा। पुनः किंविधात् त्रिदिवात्? दित्यात् दितिः देवमाता यस्मिन् तत् दित्यम्। तस्मात् दित्यात्॥ ८॥

**यमकबोधिनी**—अतिदूरादिति—येन राज्ञा आश्रिता भूः पृथ्वी त्रिदिवात् स्वर्गादिति अल्पभेदा एव आसीदित्यन्वयः। इतीति किम्? अजाद् ब्रह्मणः अतिदूरा अस्तीति शेषः। अतिदूरे वर्तमाना इति। येन नीत्या प्रतिपालितो भूर्लोकः ब्रह्मलोकात् स्वर्गो निकटे स च दूरे इत्येतावानेव भेदः प्रतीयते न तु भोगादिना भिन्न इत्यर्थः। कीदृशी भूः? सराजादित्या राजान एव आदित्याः प्रतापनिधित्वात् श्रेष्ठनृपाः तैः सह वर्तमाना सराजादित्या। कीदृशात् त्रिदिवात्? सराजादित्यात्। राजा चन्द्रः आदित्योऽर्कः ताभ्यां युक्तात्। राजा मृगाङ्के क्षत्रिये नृपे इत्यमरः। पुनः कीदृशी भूः? दित्या खण्डनेन हेतुना संयुक्तशत्रुराजा। संयुक्ताः मिलिताः शत्रुराजाः महाशत्रवो यस्यां सा तथा। शत्रूणां राजानः शत्रुराजाः। अ प्रत्ययः। प्रहारभयेन मिलितमहाशत्रुत्वेन निर्व्याकुलत्वात् भूतलस्य दैत्यभयोद्विग्नात् स्वर्गाद् विशेषो दर्शितः। यद्वा किम्भूतेन येन? दित्या खण्डनेन संयुक्तशत्रुषु कृतसन्धिवैरिषु राजते इति संयुक्तशत्रुराट् तेन तथा। दित्येति दो अवखण्डने इति धातोः रूपम्॥ ८॥

**दीपिका**—अतिदूरेति—येन आश्रिता अधिष्ठिता भूः भूमिः त्रिदिवात् स्वर्गादिति हेतोः अल्पभेदैव। किम्भूता भूः? अजात् प्रजापतेः। अत्यन्तदूरवर्तिनी भूः। पुनः किम्भूता भूः? सराजादित्या राजादित्यो रामभ्राता तत्सहिता। यद्वा राज्ञां मध्ये ये आदित्यास्तैः सह वर्तमाना। किम्भूतात् त्रिदिवात्? सराजादित्यात्। राजा चन्द्र आदित्यः सूर्यः ताभ्यां सहितात्। किम्भूतेन? दित्याखण्डेनन संयुक्ताः संयोगं प्रापिताः शत्रुराजाः अरिश्रेष्ठाः येन तेन। स्वस्तावद् ब्रह्मणो निकटे भूस्तु दूरे एतावानेव भेद इति भावः॥८॥

**सुबोधिनी**—अवीति—येन भूस्त्रिदिवात् स्वर्गाद् अल्पभेदैव कृता। कीदृशी भूः? अविदूराजा अविदूरे निकटे अजौ विष्णुहरौ यस्याः सा तथा। कीदृशात् त्रिदिवात्? अदित्या देवमात्रा विशिष्टात्। विशेषणे तृतीया। पुनर्भूः कीदृशी? सराजादित्या दिताय छेदाय हिताः दित्याः। न दित्या अदित्याः साधवः इति यावत्। राजसु क्षत्रियेषु अदित्या राजादित्यास्तेन सह वर्तमाना सा तथा। सक्षत्रियश्रेष्ठेत्यर्थः। अथवा राजादित्यनामा नलभ्राता। तेन सह वर्तमाना। यद्वा राज्ञां मध्ये आदित्यो राजादित्यस्तेन युक्तेत्यर्थः। पुनःकीदृशात् त्रिदिवात्? सराजादित्यात् राजा चन्द्रः राजा च आदित्यश्च राजादित्यौ ताभ्यां सह वर्तमानात्। येन कीदृशेन? दित्या संयुक्तशत्रुराजा दितिर्दानमवखण्डनमिति यावत्। दोऽवखण्डने। तया संयुक्तः शत्रुराट् यस्य तेन। सखण्डनशत्रुणेत्यर्थः॥ ८॥

**अनुवाद**—जिससे वध के भय से शत्रुराजा मिल गए थे ऐसे उस राजा के द्वारा प्रजापालन के लिए आश्रित, राजाओं के सूर्य (राम नामक राजा) से युक्त, ब्रह्मा की समीपवर्तिनी भूमि मे सूर्य और चन्द्र से युक्त स्वर्ग की अपेक्षा थोड़े ही भेद थे॥ ८॥

**खलसेना नावेद्यः स्वांहोब्धौ भुवि च यस्य नानावेद्यः ।**

**स्निग्धजनानाऽऽवेद्य प्रयतेऽस्य सुकाव्यविरचनानावेऽद्य ॥ ९ ॥**

**अन्वयः**—यः खलसेनाः न अवेत् । यस्य भुवि नानावेद्यः (सन्ति) । स्निग्धजनान् आवेद्य स्वांहोब्धौ अद्य अस्य सुकाव्यविरचनानावे प्रयते ॥ ९ ॥

**अन्वयदीपिका**—खलसेनानेति— अहं कालिदासः अद्य इदानीम् अस्य रामस्य राज्ञः स्वांहोब्धौ स्वस्य अंहः स्वांहः स्वांहसः अब्धिः तस्मिन् स्वापराधसमुद्रे सुकाव्यविरचनानावे नौकायै प्रयते प्रयत्नं करोमि । यति प्रयत्ने इति धातोः प्रयोगः । किं कृत्वा ? स्निग्धजनान् पण्डितजनान् आवेद्य निवेद्य उक्त्वेत्यर्थः । अस्य कस्य ? यः खलसेनाः न अवेत् दुष्टजनान् न रक्षेत् । यः कः ? यस्य भुवि राज्ये नानावेद्यः अग्निष्टोमादयो यज्ञा वर्तन्ते । सुष्ठु काव्यं सुकाव्यस्य विरचना सैव नौस्तस्यै सुकाव्यविरचनानावे सुकाव्यकरणनौकायै ॥ ९ ॥

**यमकबोधिनी**—खलसेनेति—यो रामः खलसेनाः दुष्टसैन्यानि न अवेत् न रक्षेत् । कुतः ? धार्मिकत्वादित्याह—यस्य च भुवि भूमौ नाना बहुप्रकाराः वेद्यः परिष्कृताः भूमयः आसन् । क्व सति ? स्वांहोब्धौ सति स्वस्य अंहः पापं तदेव अब्धिः तस्मिन् । स्वदोषसमुद्रे सति दोषप्रायश्चित्तार्थं धर्माचरणमित्यर्थः । अथवा स्वांहोब्धौ अद्य इदानीम् अहम् अस्य रामस्य सुकाव्यविरचनानावे समीचीनकाव्यनिर्माणनौसिद्ध्यर्थं प्रयते प्रयत्नं करोमि । काव्यनावा स्वदोषसमुद्रस्तर्तुं शक्यत इति । किं कृत्वा ? स्निग्धजनानावेद्य । अष्टधा यदुक्तम्—सज्ञातिसारोऽपि खल्वेकः स्निग्धकार्यवस्तुनि स्निग्धस्तु वत्सलः ॥ ९ ॥

**दीपिका**—खलसेनेति—यः खलसेनाः शत्रुसेनाः न अवेत् न रक्षेत् । च पुनः स्वांहोब्धौ स्वापराधसमुद्रे सति यस्य भुवि भूमौ नाना वेद्यः बहुविधयज्ञवेदिकाः । भवन्तीति शेषः । अद्य अस्य सुकाव्यरचनानावे मनोहरकाव्यकल्पनानौकायै प्रयते प्रयत्नं करोमि । किं कृत्वा ? स्निग्धजनान् आप्तजनान् आवेद्य आराध्य ॥ ९ ॥

**सुबोधिनी**—खलेति—स्निग्धजनान् आवेद्य निवेद्य स्वांहोब्धौ स्वकीयं यदंहः पापं तदेवाब्धिस्तत्र सुष्ठु यत् काव्यं तस्य रचना सैव नौर्नौका तस्यै । यस्य रामाख्यस्य अद्य इदानीं प्रयते यत्नं कुर्वे । यस्य कस्य ? यः खलसेनाः दुष्टसैन्यं न अवेत् न रक्षेत् । च पुनर्यस्य भुवि संसारे नानावेद्यः नाना प्रकारका यज्ञभूमिमण्डपप्रदेशाः सन्ति ॥ ९ ॥

**अनुवाद**—जो दुष्ट जनों की सेनाओं की रक्षा नहीं करता । जिसकी भूमि में अनेक यज्ञवेदियां हैं । विद्वज्जनों कि आराधना करके अपने पापरूपी (दारिद्र्य रूपी) समुद्र में तैरने के लिए आज सुन्दर-काव्य-रचना रूपी नौका के लिए प्रयास करता हूं ॥ ९ ॥

**अथ निजराज्यन्तेन प्राशासि नलेन शत्रुराज्यन्तेन ।**

**येनाऽराज्यन्तेनश्रिया दिशो यस्य विहितराज्यन्ते न ॥ १० ॥**

**अन्वयः**—अथ येन दिशः इनश्रिया अराज्यन्त । यस्य (च) आज्यन्ते न विहतिः । तेन शत्रुराज्यन्तेन नलेन निजराज्यं प्राशासि ॥ १० ॥

**अन्वयदीपिका**—अथेति—अथेत्यनन्तरं तेन नलेन निज राज्यं प्राशासि स्वकीयं राज्यम् अरक्षि । किं विधेन नलेन ? शत्रुराज्यन्तेन शत्रूणां राजिः शत्रुराजिः शत्रुराजेरन्तः शत्रुराज्यन्तः[१] तेन । शत्रुसमूहनाशकेनेत्यर्थः । तेन केन ? येन नलेन दिशः अराज्यन्त प्रकाश्यन्त । किंविधेन नलेन ? इनश्रिया इनस्येव श्रीर्यस्यासौ इनश्रीः । तेन इनश्रिया सूर्यकान्त्या इत्यर्थः । पुनः तेन केन ? यस्य रामस्य[२] आज्यन्ते सङ्ग्राममध्ये विहतिः पराजयमुखता न । आजेः सङ्ग्रामस्य अन्तः आज्यन्तः तस्मिन्नाज्यन्ते ॥ १० ॥

**यमकबोधिनी**—अथेति—अथेत्यनन्तरं तेन नलेन निजं च तद्राज्यं च निजराज्यं प्रशासि अरक्षि । कीदृशेन तेन ? शत्रुराज्यन्तेन शत्रूणां राजिस्तस्याः अन्तो नाशो यस्मात् सः तेन । अन्तस्त्वचि सिते मृत्यौ स्वरूपे निश्चयेऽन्तिके इति वैजयन्ती । येन नलेन दिशः काष्ठाः अराज्यन्त दीव्यन्त । कीदृशेन नलेन ? इनश्रिया इनः सूर्यस्येव श्रीः शोभा यस्य सः तेन । यथा सूर्येण दिशो राज्यन्ते तथैव तेनापीत्यर्थः । यस्य नलस्य आज्यन्ते सङ्ग्रामस्यान्तः मध्यः तस्मिन् विहतिः पराजयो नाभूत् ॥ १० ॥

**दीपिका**—अथ कथाप्रारम्भाय नलं वर्णयति । अथेति—अथानन्तरं तेन नलेन निजराज्यं प्रशासि अरक्षि । किम्भूतेन नलेन ? शत्रुराज्यन्तेन रिपुपङ्क्तिनाशकेन । तेन केन ? येन दिशो अराज्यन्त रञ्जिताः । पुनः किम्भूतेन नलेन ? इनिश्रया सूर्यकान्तिना । यस्य आज्यन्ते सङ्ग्राममध्ये न विहतिः न हानिः ॥ १० ॥

**सुबोधिनी**—अथेति—तेन नलेन निजराज्यं प्राशासि शासितम् । कीदृशेन ? शत्रुराज्यन्तेन शत्रूणां राज्याः शत्रुश्रेण्याः अन्तेन मृत्युना । येन दिशः अराज्यन्त अशोभन्त । कीदृशेन ? इनश्रिया इनवत् सूर्यवत् श्रीः शोभा यस्य स तथा तेन । यस्य च आज्यन्ते आजिर्युद्धं तस्य अन्ते मध्ये विहतिर्न । सर्वत्र जय एवेत्यर्थः ॥ १० ॥

**अनुवाद**—जिसने सूर्य की शोभा की तरह अपनी कांति (यश) से दिशाओं को सुशोभित किया । युद्ध में जो कभी पराजित नहीं हुआ और जिसने समस्त शत्रुओं को नष्ट कर दिया था, ऐसे उस नल ने अपने राज्य की रक्षा किया ॥ १० ॥

**मूर्तिं मारसमानां योऽदधदायुः सहस्रमार समानाम् ।**
**रुद्रकुमारसमानामजयद् द्विषतां[३] पङ्क्तिमारसमानाम्[४] ॥ ११ ॥**

---

१. विद्यावती—अत्र शत्रूणाम् अरीणां राजिः पङ्क्तिः शत्रुराजिः तस्याः अन्तेन अन्तकरेण इति शत्रुराज्यन्तेन इति अधिकतरं शोभते ।

२. भ्रान्तोऽत्र टीकाकृत् । श्लोके नलस्य स्पष्टोल्लेखान्नेह राज्ञो रामस्यान्वयः । रामो न काव्यनायकोऽपि तु नल एवेति नावसरोऽत्र तद्वर्णनस्य ।

३. द्विषतां च इति 'ञ' पुस्तके पाठः ।

४. पङ्क्तिमालसमानामिति 'ञ' पुस्तके पाठः ।

**अन्वयः**—यः मारसमानां मूर्तिम् अदधत् । (यः) समानां सहस्रम् आयुः आर । (यश्च) रुद्रकुमारसमानाम् आरसमानां द्विषतां पङ्क्तिम् अजयत् ॥ ११ ॥

**अन्वयदीपिका**—मूर्तिमिति—स नलः समानां शरदां वर्षाणां सहस्रम् आयुः आर प्राप । सहस्रमिति कालाध्वनोरत्यन्तसंयोगे इति द्वितीया । सः कः ? यः नलः मारसमानां मूर्तिम् अदधत् । मारेण समाना तां मूर्तिं तनुं दधौ । कामतुल्यं शरीरं दधावित्यर्थः । पुनः सः कः ? यः द्विषतां शत्रूणां पङ्क्तिं श्रेणिम् अजयत् जिग्ये । किं लक्षणां द्विषतां पङ्क्तिम् ? रुद्रस्य कुमारस्तेन समाना सा । स्वामिकार्तिकेयतुल्याम् । पुनः किंविधाम् ? आरसमानाम् आरसते सा आरसमाना तां शब्दवतीमित्यर्थः ॥ ११ ॥

**यमकबोधिनी**—मूर्तिमिति—यो नलः समानां संवत्सराणां सहस्रम् आयुः जीवितम् आर प्राप । हायनोऽस्त्री शरत्समाः इत्यमरः । किं कुर्वन् ? मारसमानां मूर्तिं देहं दधत् विभ्रत् । मारेण कामेन समानां तुल्याम् । अनेन तस्य रुपवत्त्वं दर्शितम् । च पुनः यः द्विषतां शत्रूणां पङ्क्तिम् अजयत् जिगाय । कीदृशीं पङ्क्तिम् ? रुद्रश्च कुमारश्च ताविव समाना गर्वा तां रुद्रकुमारसमानां रुद्रकार्तिकेयतुल्यानां द्विषतां वा विशेषणम् । पुनः कीदृशीं पङ्क्तिम् ? आरसमानाम् आरसन्ति गर्जन्ति अत्यन्तमित्यर्थः । यद्वा रलयोरभेदात् आलसमानाम् आ समन्तात् शोभमानाम् । केवलं रूपस्यैव वैर्थ्यात् तद्वैरिजनजयख्यापनम् । तथा चोक्तं रूपेण किं गुणपराक्रमवर्जितेनेति ॥ ११ ॥

**दीपिका**—मूर्तिमिति—यः नलः समानां सहस्रवर्षाणाम् आयुः आर प्राप । सहस्रायुर्जात इत्यर्थः । किम्भूतो यः ? मारसमानां कामसदृशीं मूर्तिम् आकृतिं दधत् । च पुनः यः द्विषतां शत्रूणां पङ्क्तिं श्रेणीम् अजयत् अमारयत् । किम्भूतानां द्विषताम् ? रुद्रकुमारसमानां स्कन्दसदृशानाम् । किम्भूतां पङ्क्तिम् ? आरसमानाम् आक्रन्दमानाम् ॥ ११ ॥

**सुबोधिनी**—मूर्तिमिति—यः समानां वर्षाणां सहस्रमायुः आर प्राप । ऋ प्रापणे धातोः परोक्षायाम् आर । किं कुर्वन् ? मारसमानां कामतुल्यां मूर्तिम् आकारं दधत् धारयन् । यश्च द्विषतां पङ्क्तिम् अजयत् जितवान् । कीदृशीम् ? रुद्रकुमारसमानां रुद्रकुमारः कार्तिकेयस्तद्वत् समानां मानेन सह वर्तमानाम् । पुनः कीदृशीम् ? आरसमानाम् शब्दायमानाम् ॥ ११ ॥

**अनुवाद**—जिसने कामदेव के समान सुन्दर शरीर को धारण करते हुए हजारवर्षों की आयु को प्राप्त किया । शिव और कार्तिकेय के समान शब्द करती हुई शत्रुश्रेणियों को जिसने जीत लिया ॥ ११ ॥

**साश्वनियामा न यतः श्रेष्ठा विद्यास्तदाश्रया मानयतः ।**

**अधिकायामा नयतः शत्रावपि यस्य धीर्दयामाऽऽनयतः ॥ १२ ॥**

**अन्वयः**—साश्वनियामाः विद्याः मानयतः यतः तदाश्रयाः न श्रेष्ठाः । शत्रौ अपि दयाम् आनयतः यस्य धीः नयतः अधिकायामा वर्तते ॥ १२ ॥

**अन्वयदीपिका**—साश्वनीति—तदाश्रयाः जनाः यतः नलात् न श्रेष्ठाः नोत्तमाः । ता विद्याः आश्रयो येषां ते तदाश्रयाः तदाश्रयविद्योपजीविनः । किम्भूतात् यतः ? साश्वनियामाः विद्याः मानयतः जानतः । अश्वानां सम्बन्धिनी विद्या आश्विनी । आश्विन्या आश्वविद्यया सह वर्तमानाः विद्याः साश्वनियामाः । एवं विधाः विद्याः जानतः । किम्भूतात् यतः ? यस्य धीः नयतः अधिकायामा । अस्य नलस्य बुद्धिर्नयात् इति नयतः नीतिशास्त्रात् । अधिकम् आयामो दैर्घ्यं विस्तरो यस्याः सा अधिकायामा अधिकनिपुणा । किम्भूतात् यतः ? शत्रावपि दयाम् आनयतः कुर्वतः अतिदयालोरित्यर्थः ॥१२ ॥

**यमकबोधिनी**—सेति—साश्वनियामाः यतो नलात् श्रेष्ठाः न । अश्वानां नियामः आश्वनियामस्तेन सह वर्तमानाः साश्वनियामाः । अश्वशिक्षाप्रवीणा इत्यर्थः । सकलवाजिशिक्षाप्रवीणः चूडामणिरिति । तत्र हेतुः विशिष्टाद् यतः तदाश्रया अश्वनियामविषयाः विद्याः मानयतः सम्भावयतः । विद्यासम्भावने हेतुं वदन् बुद्धेः श्रैष्ठ्यमाह—यस्य धीर्नयतो नीतिशास्त्रात् अपि अधिकायामा । अधिकः आयामो दैर्घ्यं यस्याः सा । कीदृशस्य ? यस्य शत्रौ वैरिण्यपि दयाम् आनयतः कृपां कुर्वतः । कृपया पालितस्य शत्रोः मित्रादपि सुहृत्त्वादिति भावः । दैर्घ्यमायाम आनाह इत्यमरः ॥ १२ ॥

**सुबोधिनी**—साश्वेति—तदाश्रयास्तस्य नलस्य आश्रया ऋतुपर्णप्रभृतयो यतो नलात् श्रेष्ठा न भवन्तीत्यध्याहार्यम् । कीदृशात् ? नियमनं नियामः । अश्वनियामेन सह वर्तमानाः विद्याः मानयतः जानतः नियामो नियमो याम इत्यमरः । यस्य मा लक्ष्मीः नयतः नीतितः अधिकाया अधिक आयो यस्याः सा । कीदृशस्य ? शत्रावपि दयाम् आनयतः कुर्वतो धीः जिघांसारहितेति शेषः ॥ १२ ॥

**अनुवाद**—अश्वों के नियमन आदि से संबंधित विद्याओं को जानने वाले चूंकि उसके आश्रय में हैं । अतः उससे श्रेष्ठ नहीं हैं । शत्रु में भी दया करने के कारण जिसकी बुद्धि नीति से भी श्रेष्ठ है ॥ १२ ॥

**अहितानामाऽऽयस्य त्राता यः शरणगामिनामाऽऽयस्य ।**
**[१]गतनानामायस्य श्रुतः पिता वीरसेननामा यस्य ॥ १३ ॥**

**अन्वयः**—यः शरणगामिनाम् अहितानाम् आयस्य आयस्य त्राता गतनानामायस्य यस्य वीरसेननामा पिता श्रुतः ॥ १३ ॥

**अन्वयदीपिका**—अहितानामिति—पुनः सः कः ? अहितानां शत्रूणां शरणागतानाम् आयस्य समृद्धेर्वित्तस्य आयस्य उद्यमं कृत्वा त्राता रक्षकः । पुनः सः कः ? यस्य नलस्य वीरसेननामा पिता श्रुतः विश्रुतः विख्यातः । किं लक्षणस्य ? गतनानामायस्य गताः नानाविधाः मायाः कपटानि यस्मात् असौ गतनानामायः तस्य निष्कपटस्येत्यर्थः ॥१३ ॥

१. हतनानामायस्येति 'ञ' पुस्तके पाठः

**यमकबोधिनी—**अहीति—यो नल: शरणगामिनां शरणागतानाम् अहितानां शत्रूणाम् आयस्य द्रव्यस्य त्राता रक्षिता । किं कृत्वा ? आयस्य प्रयत्नं कृत्वा । अनेनास्य शरणागत-रक्षकत्वं ध्वनितम् । शरणागतत्राणे कारणं वदन् जन्मश्रैष्ठ्यमाह—यस्य नलस्य वीरसेननामा पिता श्रुतो विख्यात: । वीराणां सेना: यस्य स तथा । यद्वा विशिष्टा इरा संवित् यस्या: सा वीरा । तथाभूता सेना यस्येत्यर्थ: । किम्भूतस्य नलस्य ? गतना-नामायस्य गता: नाना बहुप्रकारा माया: कपटा यस्य स: तस्य । वीरसेनपुत्राद्युक्तं शरणागतत्राणमिति भाव: । यो वीरसेन: शरणगामिनां शत्रूणाम् आयस्य त्रातेति वा सम्बन्ध: ॥ १३ ॥

**दीपिका—**अहितानामिति—य: शरणम् आगतानां शरणप्राप्तानां अहितानाम् अरीणाम् आयस्य द्रव्यस्य त्राता । किं कृत्वा ? आयस्य यत्नं कृत्वा । यस्य पिता वीरसेननामा श्रुत: । किम्भूतस्य यस्य ? गतनानामायस्य निरस्तनानाकपटस्य ॥ १३ ॥

**सुबोधिनी—**अहितेति—यो नल: शरणगामिनां शरणागतानाम् आयस्योद्यमं कृत्वा त्राता रक्षिता । च पुन: आय: धनागम: तस्य । यस्य च वीरसेननामा पिता श्रुतो विख्यात: । कीदृशस्य ? गता नाना माया: यस्यासौ तस्य । आयस्येति यसु प्रयत्ने धातो: क्त्वायां ल्यपि ॥ १३ ॥

**अनुवाद—**जो शरण में आए हुए शत्रुओं के संपत्ति की उद्यम पूर्वक रक्षा करता था । छल कपट आदि से रहित जिस नल का पिता वीरसेन नाम से विख्यात है ॥ १३ ॥

**भुव्यतनोदन्तेन द्विषतां स यशांसि शोभनोदन्तेन ।**
**नीता नोदन्तेन क्षितिमभजन्नहितदन्तिनो दन्तेन ॥ १४ ॥**

**अन्वय:—**स: (नल:) द्विषताम् अन्तेन भुवि यशांसि अतनोत् । तेन शोभनोदन्तेन नोदं नीता: अहितदन्तिनो दन्तेन क्षितिमभजन् ॥ १४ ॥

**अन्वयदीपिका—**भुवीति—स: क: ? य: नल: द्विषताम् अन्तेन शत्रूणां नाशेन भुवि पृथिव्यां यशांसि अतनोत् तेने विस्तारयामास । तेन नलेन अहितदन्तिनो नोदं नीता: नोदिता: द्राविता: सन्त: दन्तेन क्षितिम् अभजन् । अहितानां शत्रूणां हस्तिनो नोदं नीता: द्राविता: सन्त: पृथ्व्यां पेतुरित्यर्थ: । किम्भूतेन ? शोभनोदन्तेन शोभना: शोभमाना उदन्तो जयादिवार्ता: यस्य स शोभनोदन्त: तेन शोभनोदन्तेन । श्रुतशोभनवार्तेने-त्यर्थ: ॥ १४ ॥

**यमकबोधिनी—**भुवीति—स राजा द्विषताम् अन्तेन भुवि यशांसि अतनोत् । शत्रूणां नाशेन पृथ्व्यां कीर्तिं विस्तारितवान् । वैरिवधे कारणमाह-तेन नलेन नोदं प्रेरणं नीता: प्रापिता: अहितदन्तिन: शत्रुगजा: दन्तेन रदेन क्षितिं पृथ्वीम् अभजन् । तन्नुन्नशत्रु-द्विपा: भग्नदर्पा: सन्त: पृथिव्याम् अपतन्नित्यर्थ: दन्तेनेत्युपलक्षणम् । कीदृशेन तेन ? शोभनोदन्तेन शोभन: उदन्त: प्रवृत्तिर्यस्य स तथा तेन । वार्तोदन्त: प्रवृत्तिश्चेति हलायुध: ॥ १४ ॥

**दीपिका—**भुवीति—सः द्विषतां शत्रूणाम् अन्तेन नाशेन भुवि भूमौ यशांसि कीर्तीः अतनोत् विस्तारयायाम । किम्भूतेन अन्तेन ? शोभनोदन्तेन मनोहरवृत्तान्तेन । तेन नलेन नोदं प्रेरणं नीताः अहितदन्तिनः रिपुगजाः दन्तेन रदेन क्षितिं भूमिम् अभजन् प्रापुः ॥१४ ॥

**सुबोधिनी—**भुवीति—स नलः भुवि पृथिव्यां द्विषतां शत्रूणाम् अन्तेन नाशेन यशांसि अतनोत् विस्तारयामास । च पुनः नोदनं नोदः प्रेरणमिति यावत् । येन नोदं नीताः अहितदन्तिनः शत्रुहस्तिनः दन्तेन क्षितिम् अभजन् मृता इत्यर्थः । कीदृशेन ? शोभनोदन्तेन शोभनः उदन्तो वार्ता यस्यासौ सः तेन । वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादित्यमरः । नुद प्रेरण इति धातोः नोदः ॥ १४ ॥

**अनुवाद—**उस (नल) ने शत्रुओं का नाश करके अपना यश पृथ्वी में फैलाया । सुन्दर वार्ताओं वाले उस नल के द्वारा किए गए प्रहार से शत्रुओं के हाथी दांतो के बल पृथ्वी में गिरे ॥ १४ ॥

**सचिवगिरा गोपायन्नलः स पृथिवीं निरस्तरागोपायम् ।**
**शत्रोरागोऽपायं नीत्वा नेमुर्महत्तरा गोपा यम् ॥ १५ ॥**

**अन्वयः—** निरस्तरागोपायं यं महत्तराः गोपाः नेमुः सः नलः सचिवगिरा शत्रोः आगोऽपायं नीत्वा पृथ्वीम् अगोपायत् ॥१५ ॥

**अन्वयदीपिका—**सचिवगिरेति—सः नलः पृथ्वीम् अगोपायत् जुगोप ररक्ष । कया ? सचिवगिरा सचिवस्य यथा गीस्तथा । अमात्यवाचा कृत्वा । कथम् ? निरस्तरागोपायं यथा स्यात् तथा । निरस्तस्त्यक्तः रागोपायः विषयाङ्गीकारः यत्र यस्यां क्रियायां तत् यथा स्यांत् तथा । सः कः ? महत्तराः प्रौढाः गोपाः यं नलं नेमुः नमश्चक्रुः । गां[१] पालयन्तीति गोपाः राजानः । किं कृत्वा ? शत्रोः आगः अपराधः अपायं नाशं नीत्वा । अरिकृतापराधनाशं कृत्वा ॥ १५ ॥

**यमकबोधिनी—**सचिवगिरेति—सचिवगिरा अमात्यवाण्या निरस्तरागोपायं यथा स्यात् तथा पृथ्वीम् अगोपायत् अरक्षत् । निरस्तः रागस्य प्रेम्णः उपायो यत्र यस्यां क्रियायां यथा तथा रागादिकं परित्यज्य धर्मार्थमेव पृथ्वीम् अगोपायदित्यर्थः । किं कृत्वा ? शत्रोः आगसम् अपराधम् अपायं नीत्वा । शरणागतापराधचिन्तनेन तद्भवम् अप्यरक्षदित्यर्थः । तस्य भूरक्षणक्षमत्वमाह-महत्तराः अतिशयेन महान्तो गोपाः यं नलं नेमुः । गां पृथ्वीं पान्तीति गोपाः भूपालाः सकलभूपभिर्नतत्वात् तस्यैव भूरक्षणक्षमत्वमिति भावः । निरस्तरागोपायमिति यमित्यस्य वा विशेषणम् । यद्वा कीदृशः सः ? निरस्तराः पात्रेषु निरस्तः क्षिप्तो रा धनं येन सः तथा । अनेनास्य धनालोभित्वेनौदार्य

१. विद्यावती—गां पृथ्वीमित्यर्थः। गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि चेति मेदिनी ।

ध्वनितम् । किं विशिष्टम् ? गोपायं गाः दिशः पान्तीति गोपाः दिक्पालाः इन्द्रादयः तेषामिव आयो लाभो यस्य स तथा । लोकपालसमृद्धमित्यर्थः । स्वर्गे करे च वज्रैव बलीवर्दे च गौः पुमान् । स्त्री सौरभेयी नयनदिग्वाणीभूजलेष्वपि इति रुद्रः ॥ १५ ॥

**दीपिका—**सचिवेति—स नलः सचिवगिरा मन्त्रिवाचा पृथिवीम् अगोपायत् अरक्षत् । कथम् ? निरस्तरागोपायं निर्गतानुरागोद्यमं यथा स्यात् तथा शत्रोः आगः अपराधम् अपायं नाशं नीत्वा प्रापयित्वा । महत्तराः परमोत्कृष्टाः गोपाः भूपाः यं नेमुः प्रणेमुः । पूर्वं नलकृतानि धनग्रामहरणादीनि अगणयित्वेति भावः ॥ १५ ॥

**सुबोधिनी—**सचिवेति—स नलः निरस्तरागोपायं यथा स्यात् तथा सचिवगिरा मन्त्रिवाक्येन पृथ्वीम् अगोपायत् अरक्षत् । रागस्योपायो रागोपायः व्यसनमिति यावत् । निरस्त-रागोपायो यस्यां क्रियायां तत्तादृशम् । महत्तरा गोपा आगोऽपायं नीत्वा यं नेमुः नमश्चक्रुरित्यर्थः । गां पृथ्वीं पान्तीति गोपाः राजानः । आगोऽपायं आगसोऽपरा-धस्य अपायो नाशः तम् । गोपाः कीदृशाः ? शत्रोर्मध्ये महत्तराः श्रेष्ठाः । अगोपाय-दिति गुपू रक्षणे धातोः । आगोऽपराधो मन्तुश्चेत्यमरः । दिङ्नेत्रघृणि भूजले इत्याद्यमरः । नेमुरिति णमु प्रह्वत्वे धातोर्बहुवचनम् ॥ १५ ॥

**अनुवाद—** राग आदि व्यसनों से रहित जिस नल को महाराजाओं ने भी नमस्कार किया उस नल ने मंत्रियों के परामर्श से शत्रुओं के अपराध के उपायों को नष्ट कर के पृथ्वी की रक्षा किया ॥ १५ ॥

**योऽदम्भी मान्यायादधिकोऽथ रिपुर्यमेत्य भीमान्यायात् ।**
**वैदर्भी मान्या या त्रिजगति कन्या बभूव भीमान्यायात्[१] ॥ १६ ॥**

**अन्वयः—**यः अदम्भी मानी आयात् अधिकः, अथ यं (च) एत्य रिपुः भीमान् यायात् (तादृशात्) भीमात् न्यायात् या त्रिजगति मान्या (सा) वैदर्भीकन्या बभूव ॥ १६ ॥

**अन्वयदीपिका—**योऽदम्भीति—तस्माद् भीमाद् राज्ञः सकाशात् न्यायात् शिवार्चनविधेर्हेतोः सा वैदर्भी नाम्नी कन्या बभूव । तस्मात् कस्मात् ? यः भीमः अदम्भी दम्भरहितः । किम्भूतः ? यः मानी अभिमानी । पुनः किम्भूतः ? यः आयात् समृद्धेः अधिकः अतिसमृद्धिमान् । पुनः कस्मात् ? रिपुः यम् एत्य प्राप्य यायात् पलायेत् पलायनं करोति । किम्भूतो रिपुः ? भीमान् भययुक्तः । सा का ? या कन्या त्रिजगति मान्या पूज्या ॥ १६ ॥

---

१. विद्यावती—इह भीमात् न्यायादिति दशायां सन्धौ नकारस्य द्वित्वप्राप्तेर्यमकभङ्गस्तच्चिन्त्यम् । अथवा भीमश्चासौ आन्यायश्च आनी आयश्च भीमान्यायःतस्मात् । अननम् आनः । आनोऽस्याऽस्तीति आनी । जीवितवान् आयो यस्य स तथा तस्मात् इत्येवं व्याख्या । पचमीं कल्पयित्वा भीमात् न्यायात् इति व्याख्या तु नादर्तव्या, तथात्वे यमकभङ्गप्रसङ्गात् ।

**यमकबोधिनी**—इदानीं नलस्य प्रपञ्चवैवाहिकचरितप्रसङ्गाय दमयन्तीजन्माह—य इति—अथेत्यनन्तरं भीमात् भीमसंज्ञकाद्राज्ञः वैदर्भी कन्या बभूव। विदर्भस्यापत्यं स्त्री वैदर्भी। दमयन्ती नाम्नी। यो भीमः अदम्भी दम्भरहितः, यःमानी अभिमानवान्, पूज्यो वा, यः आयात् लाभात् अधिकः समृद्ध इत्यर्थः। रिपुः शत्रुः यमेत्य प्राप्य भीमान् भीर्विद्यते यस्य स भीमान् सन् यायात् गच्छेत्। अथवा भीमानी सन् आयात् आगच्छेत्। शरणं दुर्गाणीति शेषः। भीर्भयं च मानं च भीमाने ते विद्येते यस्य स भीमानी। कीदृशी वैदर्भी? या दमयन्ती न्यायात् नीतिशास्त्रात् त्रिजगति त्रैलोक्ये मान्या पूज्या ॥ १६ ॥

**दीपिका**—योऽदम्भीति—यः अदम्भी निर्दम्भः मानी मानवान् आयाल्लभात् अधिक उत्कृष्टः। यम् एत्य अथ रिपुः भीमानि दुर्गाणि आयात् अगच्छत्। अथास्य स्वयंवरं वर्णयितुं दमयन्त्या वर्णनमारभते। अथानन्तरं या त्रिजगति न्यायात् न्यायमार्गात् मान्या पूज्या सा कन्या वैदर्भी दमयन्ती भीमाद् भीमाभिधानाद् राज्ञः बभूव अभूत् ॥ १६ ॥

**सुबोधिनी**—योदम्भीति—भीमान्यायात् भीमभूपालात् वैदर्भी कन्या बभूव जाता। अननम् आनः। आनोऽस्याः अस्तीति आनी जीवितवान् आयो यस्य निरन्तरं धनागमनवानित्यर्थः। राजेति यावत्। भीमश्चासावन्यायश्चेति भीमान्यायस्तस्माद्। वैदर्भी कीदृशी? या त्रिजगति मान्या पूज्या। सः को भीमः? योऽदम्भी दम्भरहितः। पुनः कीदृशः? आयात् धनवृद्धेर्हेतोः मानी अभिमानी। अथ अधिको रिपुर्यमेत्य यन्निकटे आगत्य भीमान् भीतः सन् यायात् प्रपलाय्य गच्छेत्। भीतिर्भीः साध्वसं भयमित्यमरः। भीमान् मतुप्। यायादिति या प्रापणे धातोः। यत्तु भीमात् न्यायात् इत्यत्र पञ्चमीं कल्पयित्वा न्यायात् न्यायेन कन्या बभूवेति व्याचक्षते। तत्रास्ति सन्धौ नकारद्वित्वं तेन यमकत्वहानिरिति तच्चिन्त्यम् ॥ १६ ॥

**अनुवाद**—जो दंभ से रहित और अभिमानी तथा समृद्धिशाली था, जिसे देखकर शत्रु डर कर भाग जाता था। ऐसे इस भीम नामक राजा के शिवार्चन आदि विधिसे वैदर्भी कन्या उत्पन्न हुई। जो तीनों लोकों में पूज्य थी ॥ १६ ॥

**महिततमारम्भाभिर्दमयन्ती सदृगुमारमारम्भाभिः।**
**[1]दधती मारं भाभिर्ववृधे सोरुद्वये समा रम्भाभिः ॥ १७ ॥**

**अन्वयः**—महिततमारम्भाभिः उमारमारम्भाभिः सदृक् सा दमयन्ती भाभिः मारं दधती उरुद्वये रम्भाभिः समा ववृधे ॥ १७ ॥

**अन्वयदीपिका**—महितेति—सा दमयन्ती दिने दिने ववृधे वृद्धिं प्राप। किम्भूता सा?। उमा-रमा-रम्भाभिः सदृक् उमा च रमा च रम्भा च उमारमारम्भाः ताभिः। पार्वत्या-

१. 'ददती' इति 'ञ' पुस्तके पाठः। 'ग' 'घ' पुस्तकयोर्यद्यपि 'दधती' इत्येव पाठः किन्तु टीकायां 'ददती'त्येव स्वीकृत इति स्पष्टमेव व्याख्यादर्शनात्।

दिसदृशी । किम्भूताभिः उमारमारम्भाभिः ? महिततमारम्भाभिः अतिशयेन महीयान् इति महिततमः । महितमः आरम्भः कार्यारम्भो यासां ताः महिततमारम्भाः ताभिः महिततमारम्भाभिः पुनः किम्भूता सा ? भाभिः कान्तिभिः मारं कामं दधती धारयन्ती । पुनः किम्भूता सा ? उरुद्वये जंघाद्वये[१] रम्भाभिः कदलीभिः समा सदृशी ॥ १७ ॥

**यमकबोधिनी**—तस्या सौन्दर्यमाह—महिततमेति—सा दमयन्ती ववृधे अवर्धत । कीदृशी सा ? महिततमारम्भाभिः पूज्यतरव्यापाराभिः उमारमारम्भाभिः उमा पार्वती, रमा लक्ष्मीः, रम्भा देवाङ्गना ताभिः सदृक् सदृशी । एतत् सादृश्येनास्यां गुणाधिक्यात् ततोऽन्यास्वतिशयाभावः सूचितः । किं कुर्वती ? भाभिः दीप्तिभिः नृणां मारं कामं ददती । दधतीति पाठे कान्त्या सकलजनमोहनं रूपं दधानेत्यर्थः । पुनः कीदृशी ? उरुद्वये रम्भाभिः कदलीभिः समा । रम्भास्तम्भसदृशोरुरित्यर्थः ॥ १७ ॥

**दीपिका**—महितेति—दमयन्ती ववृधे वृद्धिं प्राप । महिततमारम्भाभिः पूज्यतमरूपप्रारम्भाभिः उमारमारम्भाभिरुमा गौरी रमा लक्ष्मीः रम्भा अप्सराः । ताभिः सदृक् समाना । पुनः किम्भूताभिः ? भाभिः कान्तिभिः मारं कामं दधती । यत्कान्तिदर्शनात् कामिनः कामवशमापुः इत्यर्थः । पुनः किम्भूता सा ? उरुद्वये रम्भाभिः कदलीभिः समा तुल्या ॥ १७ ॥

**सुबोधिनी**—महितेति—दमयन्ती ववृधे । वृद्धिं प्राप्ता । युवतिर्बभूवेत्यर्थः । कीदृशी ? उमारमारम्भाभिः सदृक् सदृशी । उमा पार्वती, रमा लक्ष्मीः, रम्भाऽप्सरोभेदस्ताभिः उमारमारम्भाभिः । कीदृशीभिः ? महितमारम्भाभिः प्रकृष्टो महितो महिततमः । पूजिततमः इति यावत् । महिततम आरम्भो यासां तादृश्यस्ताभिः । पुनः कीदृशी ? भाभिः कान्तिभिः मारं कन्दर्पं दधती धारयन्ती । पुनः कीदृशी ? उरुद्वये रम्भाभिः कदलीभिः समा ॥ १७ ॥

**अनुवाद**—पवित्र आरंभ वाली पार्वती, लक्ष्मी और रंभा के समान, वह दमयंती शारीरिक कांति से कामदेव को और केले के समान सुन्दर जांघों को धारण करती हुई बड़ी हुई ॥ १७ ॥

**सा रत्नन्नारीणां नलः श्रियामजनि निलयनन्नारीणाम् ।**
**यस्याऽनन्नाऽरीणां मरुभुवमापद् घटाऽवन्नारीणाम् ॥ १८ ॥**

**अन्वयः**—सा (दमयन्ती) नारीणां रत्नम् । नलः नारीणां श्रियां निलयनम् अजनि । यस्य अरीणाम् अनन्ना घटा अरीणां मरुभुवम् आपत् न (च) अवनम् ॥ १८ ॥

**अन्वयदीपिका**—सा रत्नमिति—सा दमयन्ती नारीणां स्त्रीणां रत्नम् अजनि प्रादुर्बभूव । नलः नारीणां श्रियां निलयनं स्थानम् अजनि । नराणाम् इमाः नार्यः नारीणां श्रियां कान्तीनां निलयनं स्थानम् अजनि जातः । यस्यारीणां शत्रूणां घटा समूहः मरुभुवम् आपत्

१. विद्यावती—उरुद्वयस्य जानुद्वयमित्यर्थः । अन्वयदीपिकायां भ्रान्तः ।

प्राप। किम्भूतां मरुभुवम्? रीणां रिक्तां शून्यामित्यर्थः।[१] किम्भूता अरीणां घटा? अनन्ना न विद्यते अन्नं यस्याः सा अनन्ना निरन्नेत्यर्थः॥ १८॥

**यमकबोधिनी**—सेति—सा दमयन्ती नारीणां स्त्रीणां मध्ये रत्नम् अजनि जाता। जातौ च जातौ च यच्छ्रेष्ठं तद्धि रत्नं प्रकीर्तितम् इति वाक्यात् सकलनारीश्रेष्ठाऽभूदिति अर्थः। स नलो नारीणां नराणाम् इमाः नार्यस्तासामिति नरसम्बन्धिनीनां श्रियां लक्ष्मीणां निलयनम् आश्रयः अजनि। निखिललोकसौन्दर्यवान् जात इत्यर्थः। परस्परानुरूपत्वात् तयोर्विवाहयोग्यतेति भावः। यस्य नलस्य अरीणां घटासमूहः मरुभुवं मरुस्थलीम् आपत् प्राप। वनं[२] जलं न प्रापेत्यर्थः। कीदृशी घटा? अनन्ना न विद्यतेऽन्नं यस्याः सा अन्नरहिता। कीदृशीं मरुभुवम्? अरीणां स्यन्नां क्षीणजलादिद्रव्यामित्यर्थः। नराणाम् इमा नार्यः। जीवनं भुवनं वनमित्यमरः॥ १८॥

**दीपिका**—सा रत्नमिति—सा दमयन्ती नारीणां मध्ये रत्नम् अजनि जाता। नलः नारीणां श्रियां नरसम्बन्धिनीनां शोभानां निलयनं स्थानम् अजनि। यस्य अरीणां शत्रूणां घटा परम्परा रीणां रिक्तां मरुभुवं मरुभूमिम् आर प्राप। अवनं रक्षणं न प्राप। किम्भूता घटा? अनन्ना अनाहारा॥ १८॥

**सुबोधिनी**—सेति—सा दमयन्ती नारीणां मध्ये श्रेष्ठम् अजनि जाता। नलश्च नारीणां मनुष्यसम्बन्धिनीनां श्रियां कान्तीनां निलयनं गृहम् अजनि। नरस्येयं नारी। यस्य च अरीणां घटा मरुभुवम् आपत् प्राप। अवनं न आपदिति पूर्वेणैवान्वयः। मरुभुवं कथं भूताम्? अरीणां शून्यां धिक्कृतां वा। अरीणां घटा कीदृशी? अनन्ना न विद्यते अन्नं यस्याः सा अनन्ना। अवरीणो धिक्कृतश्चेत्यमरः॥ १८॥

**अनुवाद**—वह (दमयन्ती) स्त्रियों में रत्न और नल पुरुष संबंधी शोभाओं का घर उत्पन्न हुआ। जिसके शत्रुओं का अन्नरहित समूह जलहीन मरुस्थल को प्राप्त हुआ किन्तु रक्षा नहीं पा सका॥ १८॥

**चकमे सा राजन्यश्रेष्ठं तं तां स तेजसा राजन्यः।**

**आत्तविसारा जन्यश्रियोऽधित[३] जिताः ससारा[४] जन्यः॥ १९॥**

**अन्वयः**—(यया) ससारा जन्यः जिताः सा (दमयन्ती) राजन्यश्रेष्ठं तं चकमे। यः आत्तविसारा जन्यश्रियः अधित स तेजसा राजन् तां (चकमे)॥ १९॥

---

१. विद्यावती—रीङ् प्रस्रवणे (दि० आ० अ) धातोः न रीणा इत्यरीणा तां जलरहितां मरुभुवम् आपदिति समीचीनम्।

२. रामर्षिणा चकल्पेऽत्र घटा वनन्नारीणामिति पाठः। वनं तु जले पठितमेव।

३. अधृत इति ग घ पुस्तकयोः।

४. सुसारा इति ख पुस्तके।

**अन्वयदीपिका**—चकम इति—सा दमयन्ती तं नलं चकमे ऐच्छत् । स नलः तां दमयन्तीं चकमे ऐच्छत् । स्वतेजसा राजन् शोभमानः । किम्भूतं तम् ? राजन्यश्रेष्ठं राज्ञां समूहो राजन्यः राजन्यानां श्रेष्ठः तं राजोत्तमम् । सः कः ? यः नलः जन्यश्रियः अधित । सङ्ग्रामलक्ष्मीः प्राप । किम्भूताः जन्यश्रियः ? आत्तविसाराः आत्तः प्राप्तः विसारो विस्तारो यासां ताः आत्तविसाराः प्राप्तविस्तारा इत्यर्थः । सा का ? यया दमयन्त्या जन्यः वरस्त्रियः जिताः निर्भर्त्सिताः तिरस्कृता इत्यर्थः । जनी वरस्त्रीत्यमरः । किम्भूताः जन्यः ? सुसाराः श्रेष्ठाः ॥ १९ ॥

**यमकबोधिनी**—चकम इति—सा दमयन्ती तं नलं चकमे अकामयत् । किम्भूतं तम् ? राजन्यश्रेष्ठं क्षत्रियर्षभम् । स नलः तां दमयन्तीं चकमे । चकारस्याध्याहारः । सा केत्यपेक्षायामाह—यया दमयन्त्या जन्यः स्नुषाः अचिरोढाः कन्याः इति यावज्जिताः । जनी नवोढास्नुषयोरिति । कीदृश्यो जन्यः ? ससाराः सारेण स्थिरांशेन सौन्दर्यादिना युक्ताः ससाराः । सुसारा इति पाठे अतिश्रेष्ठाः । सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिष्वित्यमरः । सः कः इत्यपेक्षायामाह—यो नलस्तेजसा राजन् विराजमानः सन् जन्यश्रियः युद्धलक्ष्मीः अधृत धृतवान् । अधितेति पाठेऽपि स एवार्थः । युद्धमायोधनं जन्यमित्यमरः । कीदृश्यः ? आत्तविसाराः ? आत्तः स्वीकृतो विस्तारो याभिस्तास्तथा विस्तृता इत्यर्थः । यद्वा जन्याः विवाहपक्षवर्तिनस्तेषां श्रियः शोभास्ताः धृतवान् । आत्तविसारा इति पूर्ववत् । जन्येषु स एव राजत इत्यर्थः । तस्य सदा वैवाह्यसमयत्वादिति भावः । जन्याः स्निग्धा वरस्य ये इत्यमरः । यद्वा आत्तविसाराजन्यश्रियः इत्येकं पदम् । आत्तः स्वीकृतो ध्वजे विसारो मत्स्यो येन सः तथा मकरध्वज इत्यर्थः । तेनापि अजन्याः उत्पादयितुमशक्याः याः श्रियस्ताः धृतवानित्यर्थः । कन्दर्पादधिकश्रीमानित्यर्थः । पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः । विसारः शकली चेत्यमरः । यद्वा आत्तविसारः कामस्तस्य यद् अजन्यं कम्पव्यामोहादिरुत्पादस्तस्य याः श्रियः शोभास्ताः धृतवान् । अजन्यं क्लीब उत्पात उपसर्गः समं त्रयम् इत्यमरः । यद्वा आत्ताः पालनाय स्वीकृताः विसाराः निर्धना याभिस्तास्तथा । अजन्यो वादरहिता निरपवादा इत्यर्थः । जन्यः स्याज्जनवादेऽपीत्यमरः । श्रियः सम्पत्तयः अजन्यश्च ताः श्रियश्च अजन्यश्रियः ताः धृतवान् । यः कृतोपकारनिरपवादसम्पत्तिसंयुक्त इत्यर्थः । सम्पत्तिः श्रीश्च लक्ष्मीश्चेत्यमरः ॥१९ ॥

**दीपिका**—चकम इति—सा दमयन्ती राजन्यश्रेष्ठं नृपोत्कृष्टं तं नलं चकमे कामयामास । सः नलः तां दमयन्तीं चकमे । सः कः ? यः तेजसा राजन् भ्राजमानः जन्यश्रियः सङ्ग्रामशोभाः अधित प्राप । किम्भूताः जन्यश्रियः ? आत्तविसाराः प्राप्तविस्ताराः । सा का ? यया ससाराः सरूपाः जन्यः नार्यः जिताः तिरस्कृताः ॥ १९ ॥

**सुबोधिनी**—चकमे इति—सा दमयन्ती तं राजन्यश्रेष्ठं क्षत्रियोत्तमं चकमे कामितवती । स च नलस्तां चकमे इति पूर्वेणैवान्वयः । तेजसा राजन् दीप्तिं कुर्वन् । येन जन्यश्रियो

युद्धलक्ष्म्यः अधित प्राप्ताः । कीदृश्यः ? ससारा सौन्दर्यसहिताः सारा स्थिरांशे सौन्दर्यम् इति धरणिः । युद्धमायोधनं जन्यं समाः स्नुषाजनीवध्व इत्यमरः ॥ १९ ॥

**अनुवाद**—जिसने अपने गुणों और सौन्दर्य से श्रेष्ठ नवोढाओं को तिरस्कृत कर दिया था उस दमयन्ती ने राजाओं में श्रेष्ठ उस नल को चाहा । जिसने विशाल युद्धलक्ष्मी को प्राप्त कर लिया था, अपने तेज से शोभायमान उस नल ने उसे (दमयन्ती को) चाहा ॥१९ ॥

**नाऽऽर्तिर्नोद्या नेनप्रभाविहीनेन शोभनोद्यानेन ।**

**स्मरजा नोद्याऽनेन स्फुटमिति गतिमिह नलोऽतनोद्यानेन ॥ २० ॥**

**अन्वयः**—अनेन इनप्रभाविहीनेन शोभनोद्यानेन अद्य नः स्मरजा आर्तिः न नोद्या (इति) न, इति नलः इह यानेन स्फुटं गतिम् अतनोत् ॥ २० ॥

**अन्वयदीपिका**—नार्तिरिति—स नलः इति हेतोः अद्य इदानीम् इह वने स्फुटं यथा स्यात् तथा यानेन अश्वेन गतिम् अकरोत् गमनम् अकरोत् । इतीति किम् ? अनेन वनेन अस्माकं स्मरजा आर्तिर्न नोद्या इति न किन्तु नोद्यैव । कामजा पीडा न नाशनीया इति न अपि तु नाशनीया एव । किम्भूतेन अनेन ? इनप्रभाविहीनेन सूर्यप्रकाशरहितेन निविडेनेत्यर्थः । पुनः किम्भूतेन ? अनेन शोभनोद्यानेन शोभनानि सुन्दराणि उद्यानानि अवान्तर-वनानि यस्मिन् तत् तेन ॥ २० ॥

**यमकबोधिनी**—वैदर्भीवैवाहिकहंसप्रसङ्गाय तद्यात्रामाह—नार्तिरिति नलो वैरिसेनिः इति हेतोः अस्मिन् उद्याने यानेन वाहनेन स्फुटं यथा स्यात् तथा इति गतिम् अतनोत् गमनं विस्तारयामास । पर्यटनं कृतवानित्यर्थः । इतीति किम् ? अद्य अस्मिन्नहनि अनेन शोभनोद्यानेन मनोज्ञा क्रीडा न । नोऽस्माकं स्मरजा कामोत्पन्ना आर्तिर्नोद्या न इति न किन्तु नोद्या अपनेया इति । कीदृशेन शोभनोद्यानेन ? इनप्रभाविहीनेन अभ्रंलिहपलाशवैविध्यात् सूर्यदीप्तिरहितेन आतपाभावात् तापनाशकं तदिति भावः । स्याद् यानं निस्सरणे वनभेदे प्रयोजने इत्यमरः ॥ २० ॥

**दीपिका**—नार्तिरिति—नल इह उद्याने स्फुटं प्रकटम् इति हेतोः यानेन अश्वेन गतिं गमनम् अतनोत् अकरोत् । इतीति । किम् ? अनेन शोभनोद्यानेन रम्योपवनेन अद्य वर्तमानदिवसे नः अस्माकं स्मरजा कामोत्पन्ना अर्तिः पीडा न नोद्या न दूरीकर्तव्या इति न किन्तु नोद्यैव । किम्भूतेन शोभनोद्यानेन ? इनप्रभाविहीनेन रविकिरणरहितेन शीतेनेत्यर्थः ॥ २० ॥

**सुबोधिनी**—नार्तिरिति—नलः इति हेतोरिह वने स्फुटं यथा स्यादेवं यानेन अश्वेन गतिर्गमनमतनोत् अकरोत् । इति किम् ? अनेन शोभनोद्यानेन सुन्दरक्रीडावनेन अद्य इदानीं नोऽस्माकं स्मरजा कामोत्पन्ना आर्तिः पीडा न नोद्येति न अपितु नोद्यैव नाशनीयेत्यर्थः । कीदृशेन ? इनप्रभाविहीनेन इनः सूर्यस्तस्य प्रभा किरणस्तेन विहीनेन रहितेन ॥ २० ॥

**अनुवाद**—क्या सूर्य के ताप से रहित इस सुन्दर उपवन में (मुझ नल की) कामपीडा दूर नहीं होगी ? (अर्थात् अवश्य दूर होगी) ऐसा सोचकर नल ने इस उद्यान में स्वच्छन्द विचरण किया ॥ २० ॥

**सोऽहितहन्ता पततः कांश्चिदपश्यद्धिताय हन्ताऽऽप ततः ।**

**सस्नेहन्तापततस्तान्यदमी तोषमाऽऽवहन्ताऽऽपततः ॥ २१ ॥**

**अन्वयः**—हन्त ! अहितहन्ता तापततः सः हिताय आपततः कांश्चित् पततः अपश्यत् । यत् अमी तोषम् आवहन्त । ततः सस्नेहं तान् आप ॥ २१ ॥

**अन्वयदीपिका**—सोऽहितेति-स नलः कांश्चित् पततः पक्षिणः अपश्यत् अद्राक्षीत् । किम्भूतान् पततः ? हन्त इति हर्षे । हिताय सुखदानाय आपततः आगच्छतः । किम्भूतः सः ? अहितहन्ता शत्रुमारकः । पुनः किम्भूतः ? तापततः कामज्वरपीडितः तापेन ततः (व्याप्तः) । यतः यस्मात् कारणात् अमी पतत्रिणः हंसाः तोषम् आवहन्त सन्तोषम् अकुर्वन् । तस्मात् कारणात् सस्नेहं यथा स्यात् तथा स्नेहपूर्वकं सः तान् आप ॥२१ ॥

**यमकबोधिनी**—स इति-हन्त इति हर्षे । अहितहन्ता शत्रुघातकः सः नलः कांश्चित् पततः पक्षिणः अपश्यत् ददर्श । कीदृशान् पततः ? हिताय आत्माभीष्टाय आपततः आगच्छतः । यत् यस्मात् अमी पक्षिणस्तोषम् आवहन्त दर्शनेनैव तुष्टिम् आपादितवन्तः । ततस्तस्मात् तान् पक्षिणः सस्नेहं यथा स्यात् तथा आप प्राप । रभसा तदन्तिकं जगामेत्यर्थः । कीदृशः सः ? तापततः कामतो व्याप्तः । पतत्रिपत्रिपतगपतत्पत्त्ररथाण्डजा इत्यमरः ॥ २१ ॥

**दीपिका**—सोऽहितहन्तेति—सः नलः कांश्चिद् अनिर्वचनीयान् पततः पक्षिणः अपश्यत् ददर्श । हन्तेति हर्षे । किम्भूतः सः ? अहितहन्ता शत्रुघाती । किम्भूतान् पततः ? हिताय समीहितकरणाय आपततः आगच्छतः । ततः हेतोः सस्नेहं यथा स्यात् तथा तापततः कामसन्तापयुक्तोऽसौ तान् पक्षिणः आप प्राप । यतः यस्मात् अमी पक्षिणः अस्य तोषं सन्तोषम् आवहन्त दधुः ॥ २१ ॥

**सुबोधिनी**—सोऽहितेते—अहितानां शत्रूणां नाशकः स नलः । हन्त हर्षे कांश्चित् पततः पक्षिणोऽपश्यद् अद्राक्षीत् । कीदृशान् पततः ? हिताय सुखदानाय आपततः आगच्छतः । कीदृशः सः ? तापततः तापेन ततो व्याप्तः कामज्वरपीडित इत्यर्थः । यस्माद्धेतोरमी पतत्रिणो हंसास्तोषं सन्तोषमावहन्त अकुर्वन् । ततो हेतोः सस्नेहं स्नेहपूर्वकं यथा स्यात् तथा सोऽयं नलः तान् हंसान् आप प्राप जग्राहेति यावत् ॥२१ ॥

**अनुवाद**—शत्रुविनाशक, कामपीड़ा से संतप्त उस (नल) ने सुख देने की कामना से आ रहे पक्षियों को देखा। जिस कारण वे संतुष्ट हुए। अत: (उस नल ने) सस्नेह उन पक्षियों को पकड़ लिया ॥ २१ ॥

**तं तरसा रसमानः स विहङ्गगणोऽब्रवीत् ससारसमानः।**

**गतहिंसारस मा नस्तुद लभ्यो निष्क्रयः स्वसारसमानः ॥ २२ ॥**

**अन्वयः**—तरसा रसमानः ससारसमानः स विहङ्गगणः तम् अब्रवीत्—हे गतहिंसारस! (अस्मत्तः) स्वसाररसमानः निष्क्रयो लभ्यः (अतः) नः मा तुद ॥ २२ ॥

**अन्वयदीपिका**—तमिति—स विहङ्गगणः हंससमूहः तरसा वेगेन शीघ्रं तं प्रति इत्यब्रवीत् अवदत्। इतीति किम्? हे गतहिंसारस! गतः हिंसायाः रसः प्रीतिः यस्य सः गतहिंसारसः। तस्य सम्बोधनम्। हे हननतात्पर्यरहित! हे नल! त्वं नः अस्मान् मा तुद मा पीडय। त्वया स्वसारसमानो निष्क्रयो लभ्यः प्राप्यः। अस्मभ्य इति शेषः। स्वसामर्थ्यतुल्यो निष्क्रयो मूल्यो लभ्यः। किम्भूतो विहङ्गगणः? रसमानः रस शब्दे अस्य धातोः प्रयोगः। रसतेऽसौ रसमानः शब्दायमानः। पुनः किम्भूतो विहङ्गगणः? ससारसमानः सारसानां पक्षिविशेषाणां मानेन अभिमानेन सह वर्तमानः ससारसमानः गर्वसहित इत्यर्थः ॥ २२ ॥

**यमकबोधिनी**—शीघ्रागमनेनात्मवधार्थमेवागतं मन्यमानानां तेषां रभसा सातङ्कं वाक्यमाह—तमिति-सप्रसिद्धो विहङ्गगणः पक्षिसङ्घः तं नलम् अब्रवीत्। किम्भूतो विहङ्गगणः? तरसा वेगेन रसमानः शब्दं कुर्वाणः। रलयोरभेदाल्लसमानः शोभायमानः शोभमानः इति वा। कीदृशो विहङ्गगणः? सारेण न्यायेन सारासारविवेकलक्षणेन सह वर्तमानः ससारः। नीरक्षीर विवेकवानित्यर्थः। स चासौ समानश्च सगर्वश्च ससारसमानः। यद्वा सारसाः पुष्करा वा तेषां मानं प्रमाणं तेन सह वर्तमानः ससारसमानः। अथवा किमब्रवीत् इत्याह-हे ससार! हे सबल! हे गतहिसाराग! समानः सगर्वस्त्वं नोऽस्मान् मा तुद मा व्यथय। यस्मात् त्वया स्वसारसमानः स्वधैर्यानुरूपो निष्क्रयः प्रत्युपकारो लभ्यः प्राप्यः। वयं तव धैर्यसदृशम् उपकारं करिष्याम इत्यर्थः। सरोवरे मज्जनि च स्थिरत्वे न्याये च नीरे च घने च सारः। श्रेष्ठेऽन्यवत् सारमुदाहरन्ति इति विश्वः ॥ २२ ॥

**दीपिका**—तन्तरसेति—स विहङ्गगणः तरसा शीघ्रं तम् अब्रवीत् अवदत्। किम्भूतः सः? रसमानः शब्दायमानः। किम्भूतः सः? ससारसमानः सारसाभिधपक्षिविशेषप्रमाणेन सह वर्तमानः। यद्वा ससारः सबलः समानः मानसहितश्च। हे गतहिंसारस निर्गत जीववधप्रसङ्ग! अस्मान् मा तुद मा व्यथय। त्वया स्वसारसमानः आत्मबलतुल्यः निष्क्रयः मूल्यविशेषः अस्माकं लभ्यः प्राप्यः। यथाबलं भवत्कार्यं साधयिष्याम इत्यर्थः ॥ २२ ॥

**सुबोधिनी**—तन्तरसेति-रसमानः शब्दायमानः ससारसमानः सारसैः पक्षिविशेषैः कृतो यो मानोऽभिमानस्तेन सहितः स विहङ्गगणः हंससमूहस्तरसा वेगेन तं नलम् अब्रवीद् अवदत् । तदेवाह—हे गतहिंसारस ! गतः हिंसाया रसः प्रीतिर्यस्य सः तत्सम्बुद्धिः । नोऽस्मान् मा तुद मा पीडय । त्वया स्वस्य सारः सामर्थ्यादिरूपादिर्वा तत्तुल्यो निष्क्रयो लभ्यः । अस्मत्त इति शेषः ॥ २२ ॥

**अनुवाद**—शीघ्रता से कोलाहल करता हुआ, सारस (पक्षी विशेष) के गर्व के सहित वह पक्षिसमूह उस नल से बोला-हे हिंसा-प्रीति से रहित ! (नल) तुम हम लोगों से अपने सामर्थ्य के अनुसार निष्क्रय प्राप्त करोगे । अतः हमें मत मारो ॥ २२ ॥

**त्वं झषकेत्वङ्गत्वादधिको भैम्याः स्तुमोऽन्तिके त्वङ्ग त्वा ।**

**सा तेऽङ्के त्वङ्गत्वाऽऽसक्ता लल तत्सकाशके त्वं गत्वा[१] ॥ २३ ॥**

**अन्वयः**—अङ्ग ! त्वं झषकेत्वङ्गत्वात् अधिकः (इति वयम्) तु भैम्याः अन्तिके त्वा स्तुमः । सा आसक्ता ते अङ्के त्वङ्गतु त्वं (च) तत्सकाशके गत्वा लल ॥ २३ ॥

**अन्वयदीपिका**—त्वमिति-किमुवाचेत्याह-हे अङ्ग ! हे नल ! वयं भैम्या दमयन्त्याः अन्तिके समीपे गत्वा त्वा इति त्वां स्तुमः इति स्तोष्यामः । हे नल ! त्वं झषकेत्वङ्गत्वात् झषकेत्वङ्गस्य भावः झषकेत्वङ्गत्वं तस्मात् झषकेत्वङ्गत्वात् । मकरध्वजतुल्यगात्रत्वात् कामशरीरगात्रत्वात् अधिकः उत्कृष्टः सुन्दर इत्यर्थः । अङ्ग इति सम्बोधने । हे अङ्ग ! सा भैमी ते तव अङ्के त्वङ्गतु निषीदतु विलसतु । किम्भूता सा ? आसक्ता स त्वयि तात्पर्यवती । हे अङ्ग ! त्वं तत्सकाशके तस्याः समीपे लल क्रीडां कुरु ॥२३ ॥

**यमकबोधिनी**—तमेवोपकारमाह-त्वमिति-अङ्गेति सम्बोधने हे नल ! त्वं झषकेत्वङ्गत्वादधिकः । झषकेतुर्मकरध्वजः तस्याङ्गमिव अङ्गं यस्य सः तस्य भावस्तत्त्वं तस्मात् कामशरीरत्वाच्छ्रेष्ठ इत्यर्थः । अतो भैम्याः दमयन्त्याः अन्तिके निकटे त्वा त्वां स्तुमः प्रशंसिष्याम इत्यर्थः । वर्तमानसामीप्य उक्तत्वात् भविष्यत्काले लट् । ननु किं भविता प्रशंसनेनेति चेत् तत्राह सा भैमी ते तव अङ्के उत्सङ्गे आसक्ता सती त्वङ्गतु क्रीडतु । तुगि कम्पने । तु पुनः तत्सकाशके गत्वा लल विलासं कुरु । लल क्रीडायाम् । तु शब्दोऽत्रानुसन्धेयः । अस्मत्प्रशंसनेन युवयोः परिणयो भविष्यति । तेन तत्रेत्युक्त्वा हंसास्तत्र जग्मुरित्याह ॥ २३ ॥

**दीपिका**—त्वमिति-अङ्ग हे नल ! त्वं झषकेत्वङ्गत्वात् कामशरीरादधिकः । भैम्याः दमयन्त्याः अन्तिके निकटे तु पुनः त्वा त्वां स्तुमः नुमः । सा ते अङ्के उत्सङ्गे त्वङ्गतु क्रीडतु । किम्भूता सा ? आसक्ता त्वयि संलग्नचित्ता । त्वं तत्साशके तन्निकटे गत्वा लल विलस ॥२३ ॥

---

१. २३-२४ श्लोकयोः 'ज' पुस्तके युग्मेनाऽन्वयः ।

**सुबोधिनी**—त्वमिति-हे अङ्ग ! नल ! तु पुनस्त्वं झषकेत्वङ्गत्वात् झषकेतोः कामस्याङ्गं तस्य भावस्तस्मादधिको नलः कामशरीरतोऽप्यधिकः सुन्दर इति यावत् इति भैम्या अन्तिके निकटे त्वा त्वां स्तुमः स्तोष्यामः । सा भैमी तेऽङ्के क्रोडे तु पुनः अङ्गतु राजतु । अगिर्गत्यर्थः[१] । कथं भूता ? आसक्ता । त्वं तत्सकाशके दमयन्तीनिकटे स्वार्थे कः गत्वा लल क्रीडां कुरु ॥ २३ ॥

**अनुवाद**—हे नल ! कामदेव के समान तुम्हारे अङ्ग हैं । अतः तुम अत्यधिक सुन्दर हो, इस प्रकार हम दमयन्ती के पास तुम्हारी प्रशंसा करेंगे । वह आसक्त हो कर तुम्हारी गोद में बैठे और तुम उसके पास जाकर विलास करो ॥ २३ ॥

**इति हंसा रामाया निकटं या मयकृतेव सारा माया ।**

**जग्मुः सारामाया जगदुश्चालीभिरभिससाराऽमाया ॥ २४ ॥**

**अन्वयः**—हंसाः या मयकृता इव सारा माया या (च) आलीभिः अमा अभिससार (तस्याः) सारामायाः रामायाः निकटं जग्मुः इति च जगदुः ॥ २४ ॥

**अन्वयदीपिका**—इतीति-हंसाः रामायाः दमयन्त्याः निकटं जग्मुः ययुः । च अपरमिति वक्ष्यमाणप्रकारेण जगदुः इति ऊचुः । किम्भूताया रामायाः ? या मयकृता सारा माया इव । मयेन दैत्येन कृता मयकृता सारा अभिनवा उत्कृष्टा माया इव । पुनः किम्भूतायाः ? या रामा दमयन्ती आलीभिः अमा सह अभिससार गतिम् अकरोत् । अमेत्यव्ययं सहार्थे । आलिः सखी वयस्या चेत्यमरः । किम्भूताया रामायाः ? सारामायाः सोपवनायाः उपवनेन सह वर्तमानायाः । उपवने क्रीडन्त्याः । यद्वा किम्भूतायाः ? सारामायाः आरामेण सह वर्तमानायाः । आरामेण सह वर्तमाना सारामा तस्याः सारामायाः । आरामः स्यादुपवनमिवत्यमरः ॥ २४ ॥

**यमकबोधिनी**—इतीति-हंसाश्चक्राङ्गाः रामायाः भैम्याः निकटं सविधं जग्मुः इति वक्ष्यमाणं जगदुश्चेत्यन्वयः । भैमीं वर्णयति । उत्प्रेक्षते । या मयकृता मयदैत्यरचिता सारा श्रेष्ठा माया इव । मयकृन्मायाया आश्चर्यजनकत्वात् तदुत्प्रेक्षा । कीदृशी दमयन्ती ? सारामाया आराम उपवनं तत्र आयो गमनं तेन सह वर्तमाना सारामाया उपवनाटनयुक्तेत्यर्थः । तदानीं सा प्रमदवने आसीदिति बोद्धव्यम् । यद्वा किम्भूताया दमयन्त्याः ? सारामायाः सोपवनायाः । या दमयन्ती आलीभिः सखीभिः अमा सार्द्धम् अभिससार सा स्वान्तिकमागच्छतो हंसान् अवलोक्य तदभिमुखं जगामेत्यर्थः ॥ २४ ॥

**दीपिका**—इतीति-हंसाः तस्याः रामायाः दमयन्त्याः निकटं जग्मुः । च पुनः इति वक्ष्यमाणं जगदुः ऊचुः । किम्भूतायाः रामायाः ? सारामायाः सोपवनायाः । सखिभिः अमा सार्द्धम् अभिससार चचार ॥ २४ ॥

---

१. विद्यावती-त्वगि गताविति धातोः प्रयोगः न तु अगि गतावित्यस्य । तथात्वे तुशब्दस्याऽन्वयापत्तेः ।

**सुबोधिनी**—इतीति-हंसा: सारामाया: आरामेण सह वर्तमाना सारामा तस्या: सारामाया: रामाया: भैम्या: निकटं समीपं जग्मुर्ययु: । च पुन: इति वक्ष्यमाणमूचु: । या मयेन दैत्यशिल्पिना कृता सारा उत्कृष्टा मायेव । या आलीभि: सखीभि: अमा सह अभिससार गतिम् अकरोत् । अमा सह समीपे चेत्यमर: ॥ २४ ॥

**अनुवाद**—हंस सखियों के साथ उपवन में आई हुई उस दमयंती, जो मय नामक राक्षस के द्वारा बनाई गई नई माया के समान थी, के निकट गए और इस प्रकार बोले ॥ २४ ॥

**श्रीसङ्काशाऽस्यस्य त्वं भैमि नलस्य शशिनिकाशास्यस्य ।**

**अरिलोकाशास्यस्य यदि भार्या स्याः कुमारिकाशास्यस्य ॥ २५ ॥**

**अन्वय:**—भैमि ! त्वं शशिनिकाशास्यस्य अरिलोकाशास्यस्य कुमारिकाशास्यस्य अस्य नलस्य यदि भार्या स्या: (तर्हि) श्रीसङ्काशा असि ॥ २५ ॥

**अन्वयदीपिका**—श्रीसङ्काशेति-हंसा: किमूचुरित्याह—हे भैमि ! हे दमयन्ति ! त्वं यदि अस्य नलस्य भार्या स्या: भवे: तर्हि श्रीसङ्काशा लक्ष्मीतुल्या असि भवसि । श्रीवत् सङ्काशते शोभते सा श्रीसङ्काशा । किम्भूतस्य नलस्य ? शशिनिकाशास्यस्य[1] । पुन: किम्भूतस्य नलस्य ? अरिलोकाशास्यस्य अरीणां लोकस्य अरिलोकस्य आशा: अस्यति नाशयतीति अरिलोकाशास्यस्तस्य । यद्वा अरिलोकाशा अस्यति नाशयत्युपायेन । किं लक्षणस्य नलस्य ? कुमारिकाशास्यस्य कुमारिकाणाम् आशा: कुमारिकाशा: कुमारिकाभि: आशास्य: कुमारिकाशास्य: तस्य प्रार्थितस्य अपरिणीतकामिनीवाञ्छितस्य ॥ २५ ॥

**यमकबोधिनी**—श्रीति-हे भैमि ? यदि त्वम् अस्य नलस्य भार्या स्या: भवे: भविष्यसीति स्वाभिप्रायाविष्करणे भविष्यदर्थे लिङ् वा । तर्हि श्रीसङ्काशा असि लक्ष्मीसदृशी भवसि इत्यन्वय: । वर्तमानसमीपे उक्तत्वात् भविष्यति काले लट् । एतद्भार्यत्वेन तवातिश्रैष्ठ्यं स्यादिति भाव: । कीदृशस्य नलस्य ? शशिनिकाशास्यस्य शशिना चन्द्रमसा निकाशं निभम् आस्यं मुखं यस्येति तथा तस्य चन्द्रनिभमुखस्य । पुन: अरिलोकाशास्यस्य अरिलोकेन शत्रुजनेन अशास्यस्य अशिक्षणीयस्य तस्यैव शास्तत्वात् । यद्वा अरिलोकानां या आशा काष्ठा यस्यां दिशि शत्रवो वसन्तीत्यर्थ: । तस्याम् आश्यां सस्थितिर्यस्य स तथा तस्य । शत्रूणां दिशि विन्यासेन सदा स्थितत्वात् वैरिविक्रमाभाव: सूचित: । स्यादास्या त्वासना स्थितिरित्यमर: । पुन: कुमारिकाशास्यस्य कन्यकाभिरभिलषणीयस्य ॥ २५ ॥

**दीपिका**—श्रीसङ्काशेति-हे भैमि ? दमयन्ति ! त्वं यदि अस्य नलस्य भार्या गृहणी स्या: भवेस्तदा श्रीतुल्या असि भवसि । किम्भूतस्य नलस्य ? शशिनिकाशास्यस्य चन्द्र-

---

१. विद्यावती-शशिना चन्द्रेण निकाशं तुल्यम् आस्यं वदनं यस्य सः तस्येत्यर्थः। टीकाकृताऽव्याख्यातमिदं पदम् ।

तुल्याननस्य। पुनः किम्भूतस्य नलस्य? अरिलोकाशास्यस्य शत्रुजनाशाखण्डनस्य। पुनः किम्भूतस्य नलस्य? कुमारिकाशास्यस्य कन्यकाभिरभिलषणीयस्य ॥ २५ ॥

**सुबोधिनी**—श्रीति-हे भैमि ! त्वं यद्यस्य नलस्य भार्या स्याः तर्हि श्रीसङ्काशा असि लक्ष्मी-तुल्या असि। श्रीवत् सङ्काशते शोभते इति। कीदृशस्य नलस्य? शशिना निकाशं तुल्यमास्यं वदनं यस्यासौ तस्य। एवम् अरिलोकानां या आशा वाञ्छा ताम् अस्यति नाशयतीति तथा। एवं कुमारिकाशास्यस्य कुमारिकाभिः अपरिणीताभिः स्त्रीभिः आशास्यस्य वाञ्छितस्य ॥ २५ ॥

**अनुवाद**—हे भैमि ! तुम यदि चंद्रमा के समान मुख वाले, शत्रुओं की आशा को नष्ट कर देने वाले, कुमारियों के द्वारा चाहे जा रहे इस नल की पत्नी बन जाओ तो लक्ष्मी के समान हो ॥ २५ ॥

**इति [१]हांसेनोदितया गणेन भैम्या मुदा रसेनोदितया।**

**न बभासे नो दितया स्मरेण स पुनर्नलौकसेऽनोदि तया ॥ २६ ॥**

**अन्वयः**—इति हांसेन गणेन मुदा उदितया स्मरेण दितया भैम्या नो बभासे (इति) न। रसेन उदितया तया सः पुनः नलौकसे अनोदि ॥ २६ ॥

**अन्वयदीपिका**—इति हांसेनेति-तया भैम्या न बभासे इति न अपि तु बभासे एव। पुनः तया दमयन्त्या स हंसगणः नलौकसे नलगृहाय अनोदि प्रेरितः प्रेषितः। किम्भूतया तया? हासेन मुदा हर्षेण इति पूर्वोक्तप्रकारेण उदितया उक्तया। पुनः किम्भूतया तया? रसेन स्नेहेन उदितया प्राप्तया। पुनः किम्भूतया? स्मरेण कामेन दितया खण्डितया पीडितया ॥ २६ ॥

**यमकबोधिनी**—इतीति-इत्यमुना प्रकारेण हांसेन गणेन हंसानां समूहेन मुदा हर्षेण उदितया उक्तया भैम्या दमयन्त्या न बभासे इति न अपितु बभासे शुशुभे। कीदृश्या? रसेन शृङ्गारादिना अनुरागेण वा उदितया उदयं प्राप्तया। पुनः कीदृश्या भैम्या? स्मरेण कामेन दितया खण्डितया। कामार्तिभावाद्रागोदय इति भावः। तया दमयन्त्या स हांसो गणः पुनर्नलौकसे नलनिलयाय अनोदि प्रेरितः। हंसवाक्यात् सकामतया तया शान्त्यर्थमयतीति श्लोकार्थः ॥ २६ ॥

**दीपिका**—इति हांसेनेति—भैम्या मुदा सन्तोषेण न बभासे इति न किन्तु बभासे भासितम्। किम्भूतया भैम्या? स्मरेण कामेन दितया खण्डितया। पुनः स गणः नलौकसे नलस्थानाय अनोदि प्रेरितः ॥ २६ ॥

**सुबोधिनी**—इतीति-इत्युक्तक्रमेण हांसेन गणेन हंससार्थेन उदितयोक्त्या मुदा आनन्देन हेतुना रसे शृङ्गारे नोदितया प्रेरितया स्मरेण कामेन उदितया उदयं प्राप्तया युवत्येति

---

१. इति हासेनेति अन्वयदीपिकाऽभिमतः पाठः।

यावत् । एतादृश्या भैम्या न बभासे इति न अपि तु बभासे । पुनस्तया भैम्या स हंसगणो नलौकसे नलगृहाय अनोदि प्रेषितः ॥ २६ ॥

**अनुवाद**—इस प्रकार हंस-समूह के द्वारा हर्ष पूर्वक कही गई बातों से कामदेव से पीड़ित दमयंती सुशोभित नहीं हुई ? अर्थात् हुई ही । शृंगार की भावनाओं को प्राप्त हुई उस दमयंती ने उस हंस समूह को पुनः नल के घर भेजा ॥ २६ ॥

**ता बहुधा वायस्यः श्रेण्यः पुनरस्य सन्निधावायस्य ।**

**तां च[1] निधावायस्य[2] व्यनुवंस्तुलनाय न विबुधा वा यस्य ॥ २७ ॥**

**अन्वयः**—ताः वायस्यः श्रेण्यः आयस्य पुनः अस्य सन्निधौ यस्य तुलनाय विबुधा वा न, आयस्य निधौ तां च बहुधा व्यनुवन् ॥ २७ ॥

**अन्वयदीपिका**—ता इति-ताः वायस्यः श्रेण्यः पुनः अस्य नलस्य सन्निधौ आयस्य आगत्य तां दमयन्तीं बहुधा नानाप्रकारेण व्यनुवन् अस्तुवन् तुष्टुवुः । वयसां पक्षिणाम् इमाः वायस्यः हंसपङ्क्तयः । किम्भूतेऽस्य सन्निधौ ? आयस्य निधौ आश्रये अधिकरणे । अस्य कस्य ? यस्य विबुधा अपि देवा अपि तुलनाय साम्याय न भवन्तीत्यर्थः । अत्र वा शब्दोऽप्यर्थे । च समुच्चयार्थे ॥ २७ ॥

**यमकबोधिनी**—ता इति-वायस्यो वयसामिमा वायस्यः श्रेण्यः हंसानां पङ्क्तयः । पुनर्भूयोऽस्य नलस्य सन्निधौ तां दमयन्तीं बहुधा बहुप्रकारैर्व्यनुवन् विशेषेण अस्तुवन् । तस्याः सन्निधावित्यनुषङ्गः । किं कृत्वा ? आयस्य यत्नं कृत्वा दमयन्त्याः निकटं गत्वा दमयन्त्याः स्तुतिम् अकुर्वन्नित्यर्थः । स्तुतिप्रकारमाह-कीदृशस्यास्य ? विधावायस्य विशिष्टो धावः पतिसम्बन्धी आयो लाभो यस्मात् स तथा तस्य । यस्मिन् व्रते महान् पतिसम्बन्धी लाभो भवतीत्यर्थः । यद्वा विधौ आयस्येति पदद्वयम् । आयस्य लाभस्य विधौ विधितः तं च व्यनुवन् इति सम्बन्धः । निधाविति पाठे सन्निधेर्विशेषणम् । तं कमित्याह-वेति वितर्के । यस्य तुलनाय विबुधास्त्रिदशा वा न । यो देवेभ्योऽपि श्रेष्ठगुणवान् इत्यर्थः । वयांसि पक्षिणस्तत्सम्बन्धिन्यः । खगबाल्यादिनोर्वय इत्यमरः ॥ २७ ॥

**दीपिका**—ता बहुधेति-पुनः ताः वायस्यः श्रेण्यः पक्षिसम्बन्धिन्यः पङ्क्तयः अस्य लाभस्य निधौ । तु पुनः विबुधाः देवा अपि यस्य तुलनाय सादृश्याय न सन्ति इत्यर्थः । अत्र वा शब्दोऽप्यर्थे ॥ २७ ॥

**सुबोधिनी**—ता इति-च पुनस्ता वायस्यः हंसश्रेण्यः वयसामिमा वायस्यो हंसपङ्क्तयोऽस्य नलस्य सन्निधौ समीपे आयस्य आगत्य तां भैमीं बहुधा नानाप्रकारेण व्यनुवन् अस्तुवन् तुष्टुवुरिति यावत् । किम्भूते सन्निधौ ? आयस्य धनागमस्य निधौ आकरे

---

१. तु इति ग पुस्तके ।

२. विधावायस्य इति ग घ पुस्तकयोः ।

आश्रये वा। अस्य कस्य? यस्य तुलनाय विबुधा अपि देवा अपि न भवन्ति। वा शब्दोऽप्यर्थकः ॥ २७ ॥

**अनुवाद**—हंसों की उन श्रेणियों ने पुनः इस धनागम के समुद्र, जिसकी तुलना के लिए देवों में भी सामर्थ्य नहीं है, के पास आकर उस दमयंती की अनेक प्रकारों से प्रशंसा किया ॥ २७ ॥

**इति स विना मानितया जह्रे भैम्या नलोऽपि[1] ना मानितया।**

**स्वास्थ्यं नामाऽनितया शिश्ये च विचिन्त्य तस्य नामानि तया ॥ २८ ॥**

**अन्वयः**—सः नलः इति विना मानितया भैम्या ना अपि मानितया जह्रे। स्वास्थ्यम् अनितया तया च तस्य नामानि विचिन्त्य शिश्ये नाम ॥ २८ ॥

**अन्वयदीपिका**—इति स विनेति-तया भैम्या नलः जह्रे हृतः वशीकृतः। च अपरं तस्य नलस्य नामानि विचिन्त्य चिन्तयित्वा शिश्ये। नलः नैषधः वीरसेनतनयः इति नामानि चिन्तयित्वा सुप्तमित्यर्थः। किम्भूतया तया? विना पक्षिणा मानितया पूजितया। पुनः किम्भूतया तया? स्वास्थ्यम् अनितया निर्वृत्तिसुखम् अप्राप्तया। नाम इति प्रसिद्धम्। किम्भूतो नलः? मानितया अतिमानितया उपेक्षितः ॥ २८ ॥

**यमकबोधिनी**—इतीति-इत्यमुना प्रकारेण भैम्या दमयन्त्या मानितया विना अहङ्कारत्वेन विना स नलो जह्रे हृतः। आत्मवारणाय मानं परित्यज्य स्वयमेव वैरसेनिराहृत इत्यर्थः। यदुक्तं पूर्वं नारी भवेद्रक्तेति। नूनं निश्चितं मानिन्या मानकारणम्। तथा सत्या-त्मगौरववृद्धिरिति चेत् तत्राह-कीदृश्या? नामेति प्रसिद्धौ। स्वास्थ्यं स्वस्थताम् अनितया अप्राप्तया तं विना अतिव्याकुलत्वेनाधैर्यान्मानपरित्याग इति भावः। नन्वत्यस्वास्थ्यात् कथं शरीरस्थितिरिति चेदत आह-पुनः कीदृश्या? विना पक्षिणा मानितया पूजितया। नलः शीघ्रमागत्य त्वां परिणेष्यतीति आश्वासितेत्यर्थः। अत एव तया दमयन्त्या तस्य नलस्य नामानि अभिधानानि विचिन्त्य च शिश्ये शयितम्। पतित्वेन तं निश्चित्य स्वास्थ्यं प्रापीत्यर्थः ॥ २८ ॥

**दीपिका**—इतीति-स नलः भैम्या मानितया विना मानित्वेन जह्रे अपहृतः। किम्भूतया भैम्या? इति उक्त प्रकारेण विना पक्षिणा मानितया पूजितया। च पुनः तया तस्य नामानि विचिन्त्य शिश्ये सुप्तम्। नामेति सम्भावनायाम्। किम्भूतया तया? स्वास्थ्यम् चित्तस्थैर्यम् अनितया अप्राप्तया ॥ २८ ॥

**सुबोधिनी**—इतीति-इत्यनेन प्रकारेण विना हंसेन मानितया पूजितया कृतस्तुत्येति यावत्। नाम सम्भावनायाम्। स्वास्थ्यम् अनितया अप्राप्तया तया भैम्या धीरोऽपि नलः जह्रे वशीकृतः इति यावत्। च पुनस्तस्य नलस्य नामानि विचिन्त्य नलनैषधेत्यादि चिन्तयित्वा शिश्ये सुप्तम्। कीदृक् नलः? अमानितया अनुपलक्षितः। मानिनो

---

१. नलो विना इति 'ञ' पुस्तके पाठः।

भावः मानिता तस्या अभावोऽमानिता। तया अनुपलक्षितः अभिमानयुक्त इत्यर्थः ॥२८ ॥

**अनुद्वारा**—पक्षियों के द्वारा पूजित उस दमयंती ने अभिमानी और पुरुष उस नल का हरण कर लिया। (विरह के कारण) अस्वस्थ रहती हुई भी वह (दमयंती) उस (नल) के नामों का स्मरण करके किसी तरह सोई ॥ २८ ॥

युग्मकम्—

**अथ स समुद्रागस्य क्ष्मान्तस्याऽलङ्कृतेः समुद्रागस्य।**
**यौवनमुद्रागस्य स्वसुतारत्नस्य सादमुद्रागस्य ॥ २९ ॥**
**दृष्ट्वा राजाऽतनुत स्वयंवरं विधिवदिन्दिराजातनुतः।**
**यस्य जराजा तनुतः पृथग् व्यथाऽसौ जनाद्रराजाऽतनुतः ॥ ३० ॥**

**अन्वयः**—अथ समुत् सः राजा अस्य समुद्रागस्य क्ष्मान्तस्य अलङ्कृतेः यौवनमुद्रागस्य उद्रागस्य स्वसुतारत्नस्य सादं दृष्ट्वा द्राक् विधिवत् स्वयंवरम् अतनुत्। यस्य जराजा व्यथा तनुतः पृथक् असौ इन्दिराजातनुतः अतनुतः जनात् रराज ॥ २९-३० ॥

**अन्वयदीपिका**—अथेति दृष्ट्वेति युग्मकम्। अथेत्यनन्तरं राजा भीमः द्राक् शीघ्रं विधिवत् वेदोक्तप्रकारेण स्वयंवरम् अतनुत अकरोत्। किं कृत्वा? अस्य स्वसुतारत्नस्य सादं दृष्ट्वा खेदं दृष्ट्वा। स्वस्य सुता एव रत्नं स्वसुतारत्नं तस्य स्वसुतारत्नस्य दमयन्तीकमनीयस्येत्यर्थः। किम्भूतस्य स्वसुतारत्नस्य? क्ष्मान्तस्य अलङ्कृतेः। क्ष्मायाः पृथिव्याः अन्तः क्ष्मान्तः तस्य पृथ्वीमण्डलस्य अलङ्कारभूतस्य। पुनः किम्भूतस्य क्ष्मान्तस्य? ससमुद्रागस्य समुद्राश्च अगाश्च समुद्रागाः तैः सह वर्तते इति ससमुद्रागः तस्य ससमुद्रागस्य। समुद्रा अगाः पर्वताश्च शैलवृक्षा नगावगा इत्यमरः। पुनः किम्भूतस्य? यौवनमुद्रागस्य यौवनस्य मुद्रा यौवनमुद्रा। यौवनमुद्रां गच्छतीति यौवनमुद्रागस्तस्य यौवनमुद्रागस्य। यौवनचिह्नप्राप्तस्येत्यर्थः। पुनः किम्भूतस्य स्वसुतारत्नस्य? उद्रागस्य उत् उत्पन्नो रागो यस्य तत् उद्रागं तस्य उद्रागस्य उत्पन्नकामरागस्येत्यर्थः। असौ स्वयंवरस्तस्माज्जनाद् रराज। समूहाद् हेतोः शुशुभे। कस्मात्? यस्य जनस्य तनुतः देहात् जराजा जरोत्पन्ना व्यथा पीडा वलितपलितादि पृथक्, नास्तीत्यर्थः। किम्भूताज्जनात्? इन्दिराजातनुतः इन्दिरायाः लक्ष्म्याः सकाशाज्जातः इन्दिराजातः प्रद्युम्नः। तेन नूयते स्तूयते असौ इन्दिराजातनुत् तस्मात् इन्दिराजातनुतः। कामस्तुत इत्यर्थः। पुनः किम्भूतात्? अतनुतः न तनु अतनु अतनोः इति अतनुतः महतो बहुलादित्यर्थः। किम्भूतो राजा? समुत् मुदा सह वर्तमानः समुत् सहर्ष इत्यर्थः ॥ २९-३० ॥

**यमकबोधिनी**—अथेति दृष्ट्वेति युग्ममाह-अथानन्तरं राजा भीमः अस्य स्वसुतारत्नस्य निजश्रेष्ठसुतायाः सादं कार्श्यं कन्दर्पोद्भूतं दुःखं वा दृष्ट्वा द्राक् शीघ्रं विधिवत्

स्वयंवरम् अतनुत विस्तारयामासेति द्वयोरन्वयः । द्राक् च पलं लघुमन्तुश्च तूर्णं त्वरितमाशुशीघ्रमरमिति हलायुधः । स्वयंवरो नाम यथारुचि पतिं विवरीषु वरमाल्यहस्तकन्यासमाश्रितः सराजमञ्चाञ्चितो मङ्गलध्वनियुक्तो देशविशेषः । कीदृशस्य स्वसुतारत्नस्य ? ससमुद्रागस्य ससागरपर्वतस्य क्ष्मातलस्य भूतलस्य अलङ्कृतेः भूषणस्य । कीदृशो भीमः ? समुत् सहर्षः स्वयंवरारम्भहेतुः । पुनः कीदृशस्य ? यौवनमुद्रागस्य यौवनमुद्रां तारुण्यचिह्नं गच्छतीति तथा तस्य । पुनः कीदृशस्य ? उद्रागस्य उद्गतकामानुरागस्य । पुनः कीदृशो राजा ? इन्दिराजातनुतः श्रीसमूहस्तुतः । बह्वैश्वर्यवानित्यर्थः । इन्दिराजातो रुक्मिणीपुत्रः कामः तेन नुतः इत्यर्थकल्पनोपेक्षिताऽस्माभिः । भीमस्य ततो भूतपूर्वत्वेन विरोधात् । कवेरभूतपूर्वत्वादविरोध इति केचित् । यद्वा इन्दिरा जाता यस्मात् स तथा समुद्रः । तेन नुतः स्तुतोऽपि श्रेष्ठगुणवानित्यर्थः । आहिताग्निष्विति सोमपीतवद् बहुब्रीहिः । यस्य भीमस्य तनुतः शरीरात् जराजा जरासम्भूता व्यथा पीडा पृथक् भिन्ना इति यावत् । यस्तदानीं तारुण्ये वर्तमान इत्यर्थः । अत एवासौ भीमः अतनुतः अनल्पाज्जनाद्रराज शुशुभे । बहुभ्यो लोकेभ्यः तारुण्यात् स एव शोभितवानित्यर्थः । द्राग्झटित्यञ्जसाह्नाय द्राङ्मङ्क्षुसपदि द्रुते इत्यमरः ॥ २९-३० ॥

**दीपिका**—अथेति द्रष्ट्वेति युग्मकम् । अस्य दमयन्तीनाम्नः स्वसुतारत्नस्य निजकन्यारत्नस्य सादं कामखेदं दृष्ट्वा द्राक् शीघ्रं स्वयंवरम् अतनुत विधिवद्विधानेन प्रारेभे । यस्य भीमस्य जराजा व्यथा वार्द्धक्योत्पन्नपीडा तनुतः शरीरात् पृथक् भिन्ना । वर्तते इति शेषः । असौ भीमः अतनुतः महाजनात् सकाशात् रराज शुशुभे । पुनः कीदृशः ? इन्दिराजातनुतः लक्ष्मीणां समूहः तेन नुतः । किम्भूतस्य स्वसुतारत्नस्य साब्धिपर्वतस्य क्ष्मान्तस्य भूमिवलयस्य अलङ्कृतेः अलङ्कारभूतस्य । पुनः किम्भूतस्य स्वसुतारत्नस्य ? उद्रागस्य अधिकप्राप्तेः ॥ २९-३० ॥

**सुबोधिनी**—अथेति दृष्ट्वेति-अथानन्तरं समुद्रश्च अगश्च समुद्रागौ ताभ्यां सहितस्य क्ष्मान्तस्य पृथ्वीपर्यन्तस्यालङ्कृतेः अलङ्कारभूतस्य समुद्रागस्य । मुदम् आनन्दं राति ददाति इति मुद्रः । मुद्रश्चासावगश्च सः । तेन सह वर्तते इति तादृशस्य । यद्वा राजा कीदृक् ? समुत् सहर्षः । द्राक् झटिति । अस्य सुतारत्नस्येत्यर्थः । मुच्चासौ रागोऽनुरागः मुद्रागौ ताभ्यां सहितस्य । एवं यौवनमुद्रास्तनोद्रेकादिचिह्नं तद्गतस्य प्राप्तस्य एवम् उद्रागस्य उद्गतो रागोऽनङ्गरागः पीडा वा यस्य । रागो मत्सरे लोहितादिषु क्लेशादावनुरागे गन्धारादाविति मेदिनी । स्वसुतारत्नस्य सादम् अवसादं कामजं दुःखं दृष्ट्वेति द्वितीयेनैवान्वयः । असौ राजा भीमः स्वयंवरं विधिवत् अतनुत अकरोत् । यो राजा अतनुतः महतो जनात् मनुष्यात् रराज शुशुभे । यस्य तनुतो देहात् जराजा जरोत्पन्ना व्यथा पृथक् भिन्ना । बहु मध्ये सुन्दरो युवा चेति भावः । कीदृशो राजा ? इन्दिराजातनुतः इन्दिरा लक्ष्मीस्तस्याः सकाशात् जातो यः कामः तेन नुतः स्तुतः । कामाधिकसुन्दर इति यावत् ॥ २९-३० ॥

**अनुवाद**—उस राजा भीम ने समुद्र पर्वत आदि से युक्त संपूर्ण पृथ्वी के अलंकारभूत राग और अनुराग आदि यौवन के चिन्हों से युक्त अपने सुतारत्न की कामपीड़ा से उत्पन्न दुर्बलता को देख कर सहर्ष शीघ्र ही विधिवत् स्वयंवर का आयोजन किया। जिसकी वृद्धावस्था से उत्पन्न व्यथाएं दूर हो गई थीं, कामदेव से भी अधिक सुंदर वह राजा (भीम स्वयंवर में आए हुए) लोगों से सुशोभित हुआ ॥ २९-३० ॥

**तं हासेनाऽऽपाऽऽलिः स्वयंवरं क्षितिभुजां ससेनापालिः ।**

**न[१] बभासे नापालिः स्रगेषु यैः[२] शिरसि या रसेनाऽपालि ॥ ३१ ॥**

**अन्वयः**—ससेनापालिः क्षितिभुजाम् आलिः हासेन तं स्वयंवरम् आप । यैः रसेन नापालिः या स्रक् शिरसि अपालि, एषु न बभासे ? ॥ ३१ ॥

**अन्वयदीपिका**—तां हासेति—क्षितिभुजाम् आलिः राज्ञां श्रेणिः हासेन हर्षेण तं स्वयंवरम् आप प्राप । कथं भूता आलिः ? ससेनापालिः । सेनापालिभिः सह वर्तमाना ससेनापालिः । सेनां पालयन्तीति ते सेनापालाः सेनान्याः । तैः सह वर्तमानाः ससेनापालिः । सा स्रक् एषु न बभासे राजसु न बभासे इति न किन्तु बभासे शुशुभे इत्यर्थः । सा का ? या स्रक् राजभिः शिरसि रसेन अपालि अरक्षि अधारीत्यर्थः । किम्भूता स्रक् ? नापालिः अपगताः अलयो यस्याः सा अपालिः । न अपालिः नापालिः सभ्रमरा इत्यर्थः ॥३१ ॥

**यमकबोधिनी**—तमिति-क्षितिभुजां नृपाणाम् आलिः पङ्क्तिः तं स्वयंवरं हासेन आप प्राप । प्रत्यात्मवरणेच्छकाः सहर्षाः क्षितिभुजः स्वयंवरं जग्मुरित्यर्थः । कीदृशी क्षितिभुजाम् आलिः ? सेनायाः पालिः प्रदेशः तया सह वर्तमाना ससेनापालिः । वर्णलताग्रे सौपङ्क्तावङ्कप्रदेशयोरिति मेदिनीकारः । तत्कृच्छ्रङ्गारादि वैयर्थ्यमाह तैः नृपैः या स्रक् पुष्पमाला रसेन रागेण शिरसि अपालि अरक्षि धृतेति यावत् । सा एषु राजसु न प्रबभासे न प्रकर्षेण शुशुभे । यत्तदोर्नित्यः सम्बन्ध इति ज्ञातव्यम् । कीदृशी स्रक् ? अपालिः अपगता अलयो भ्रमरा यस्याः सा ॥ ३१ ॥

**दीपिका**—तं हासेनेति-अथानन्तरं धरणितलभुजां राज्ञाम् आलिः पङ्क्तिः हासेन हास्येन तं स्वयंवरम् आप प्राप । किम्भूता आलिः ? ससेनापालिः ससैन्याप्राप्ता । एषु राजसु स्रक् पुष्पदाम न बभासे न शुशुभे किन्तु बभासे । अत्र शिरश्चालने नार्थावगमः । किम्भूता स्रक् ? नापालिः सभ्रमरा । एषु केषु ? यैः शिरसि मूर्ध्नि सा स्रक् अपालि पालिता । यद्वा न बभासे इति न किन्तु बभासे । अत्र नकारद्वयस्यापि सम्बन्धे निषेधार्थनकारेण सवर्णे दीर्घकरणादपरत्रापि अपालिरिति पदच्छेदः स एवार्थः ॥३१ ॥

---

१. प्रबभासे इति ग,घ,ङ,ञ पुस्तकेषु पाठः ।

२. तैः इति ग,घ,ङ,ञ पुस्तकेषु ।

**सुबोधिनी**—तमिति—क्षितिभुजां राज्ञाम् आलिः पङ्क्तिर्हासेन हर्षादिना तं दमयन्त्याः स्वयंवरम् आप प्राप। यद्वा कीदृशी आलिः ? हासेनोपलक्षितेत्युपलक्षणे तृतीया। कीदृशी आलिः ? ससेनापालिः सेनापालयः सेनान्यस्तद्युक्ता। सा स्रक् माला एषु राजसु न बभासे इति काकुः। अपितु शुशुभे इत्यर्थः। सा का ? या स्रक् माला तैः राजभिः रसेन स्नेहेन अपालि अरक्षि धृतेत्यर्थः। किम्भूता स्रक् ? नापालिः अपगता अलयो यस्याः सा आपालिः। न अपालिः सभ्रमरेत्यर्थः। तेषां शिरस्सु इन्द्रनीलमणिमत्तया भृङ्गाभावेऽपि भृङ्गवत्तया माला शोभते स्मेति ध्वनिः ॥ ३१ ॥

**अनुवाद**—सेना सहित राजाओं की कतारों ने उस स्वयंवर को हँसी हँसी में पा लिया। उन्होंने स्वेच्छा से भ्रमरों से युक्त जो माला शिर में धारण किया था, क्या वह सुशोभित नहीं हुई ? अर्थात् अवश्य हुई ॥ ३१ ॥

**तां गां सेनाराजिः स्वर्गसदां यैः सदा रसेनाऽराजि।**

**आयासेनाऽराऽऽजिक्षपितरिपौ[1] चलति विबुधसेनाराजि ॥ ३२ ॥**

**अन्वयः**—यैः सदा रसेन अराजि (तेषां) स्वर्गसदां सेनाराजिः आजिक्षपितरिपौ विबुधसेनाराजि चलति (सति) आयासेन तां गाम् आर ॥ ३२ ॥

**अन्वयदीपिका**—तां गामिति-स्वर्गसदां देवानां सेनाराजिः चमूपङ्क्तिः आयासेन श्रमेण तां गां विदर्भदिशोपलक्षितां भुवम् आर प्राप। किम्भूतानां स्वर्गसदाम् ? यैः स्वर्गसद्भिः देवैः सदा सर्वदा रसेन दमयन्त्यनुरागेण अराजि अशोभि। कस्मिन् सति ? विबुधसेनाराजि चलति सति। विबुधानां देवानां सेनाः विबुधसेनाः। विबुधसेनायां राजतेऽसौ राट् तस्मिन् राजि स्वामिनि इन्द्रे गच्छति सति। किम्भूते विबुधसेनाराजि ? आजि क्षपितरिपौ आजौ सङ्ग्रामे क्षपितरिपुस्तस्मिन् आजिक्षपितरिपौ। यद्वा स्वर्गसदां देवानां राजिः पङ्क्तिः तां पूर्वोक्तां गाम् आर प्राप। किम्भूता राजिः ? सेना इनेन स्वामिना इन्द्रेण सह वर्तमाना सेना। इनः सूर्ये प्रभौ राज्ञीत्यमरः ॥ ३२ ॥

**यमकबोधिनी**—भैमीस्वयंवरश्रवणेन सकामाः शक्रादयोऽपि तत्राजग्मुरित्याह-तामिति-विबुधसेनायां राजते इति विबुधसेनाराजि इन्द्रः[2]। तस्मिन् चलति सति स्वयंवराभिमुखं प्रस्थिते सति इत्यर्थः। स्वर्गसदां देवानां सेनाराजिः सेनापङ्क्तिस्तां गां स्वयंवरभूमिम् आयासेन आर प्राप। यैर्देवैः सदा रसेन वीर्येण रागेण वा अराजि अशोभि। कीदृशे इन्द्रे ? आजिक्षपितरिपौ आजौ सङ्ग्रामे निराकृता रिपवः शत्रवो येन सः तस्मिन् इन्द्रे चलति सति। तदनुयायिनोऽन्येऽपि लोकपालाः तत्राजग्मुरिति श्लोकार्थः ॥ ३२ ॥

---

१. क्षयितरिपौ इति छ पुस्तके पाठः

२. विद्यावती—विबुधसेनायां राजते इति विबुधसेनाराट् इन्द्रः। तस्मिन् विबुधसेनाराजि इन्द्रे चलति सतीति शोभनम्।

**दीपिका**—तां गामिति-तेषां स्वर्गसदां देवानां सेनाराजिः सैन्यपङ्क्तिः तां गां विवाहभूमिम् आयासेन अविलम्बेन विना गमनप्रयासेन आर प्राप्ता। कस्मिन् सति? विबुध सेनाराजि इन्द्रे चलति सति आगच्छति सति। कम्भूते तस्मिन्? आजिक्षपितरिपौ सङ्ग्रामनाशितारौ। तेषां केषाम्? यैः सदा रसेन रागेण अराजि अशोभि॥ ३२॥

**सुबोधिनी**—तामिति-आजिक्षयितरिपौ आजौ सङ्ग्रामे क्षयिताः नाशिताः रिपवः शत्रवो येन सः तस्मिन् विबुधसेनाराजि। विबुधाः देवास्तेषां या सेना तस्य राट् सः। तस्मिन् इन्द्रे चलति सति स्वर्गसदां देवानां सेनाराजिः सेनापङ्क्तिः आयासेन श्रमेण तां गां विदर्भदेशोपलक्षितां भुवम् आर प्राप। यैः स्वर्गसद्भिः सदा सर्वदा रागेण भैम्यनुरागेण अराजि शोभितम्॥ ३२॥

**अनुवाद**—जो दमयंती के अनुराग के कारण सुशोभित होते थे, उन देवों की सेनाएं युद्ध में शत्रुओं का नाश करने वाले देवसेना के सेनापति इन्द्र के चलते ही उस विदर्भ-भूमि में पहुंच गईं॥ ३२॥

**सोऽथ[१] परमहस्तेन प्रापि नलेनोत्सवः परमहस्तेनः।**

**स्फुरितपरमहस्तेन प्रबभौ रविणेव तत् पुरं परमहस्तेन[२]॥ ३३॥**

**अन्वयः**—सोऽथ परमहस्तेन नलेन परमहस्तेनःस उत्सवः प्रापि।स्फुरितपरमहस्तेन रविणा परमहः अहः इव तेन परं तत्पुरं प्रबभौ॥ ३३॥

**अन्वयदीपिका**—सोऽथेति—अथेत्यनन्तरं नलेन स उत्सवः स्वयंवरोत्सवः प्रापि। च अपरं तेन नलेन तत्पुरं प्रबभौ शुशुभे। किम्भूतः स उत्सवः? परमहस्तेनः परेषां महाः परमहाः। परमहानां परोत्सवानां स्तेनः तस्करः। किम्भूतेन नलेन? परमहस्तेन परमौ उत्कृष्टौ हस्तौ करौ यस्य सः परमहस्तः। तेन परमहस्तेन उत्कृष्टबाहुना। केन किमिव? रविणा अहः इव। यथा रविणा सूर्येण अहः दिनं भाति शोभते। किम्भूतम् अहः? उत्कृष्टम्। किम्भूतेन रविणा? स्फुरितपरमहस्तेन परं महः[३] परमहः। परमहसो भावः परमहस्ता। स्फुरिता परमहस्ता यस्य स स्फुरितपरमहस्ता। तेन स्फुरितपरमहस्तेन। उत्कृष्टतेजसा इत्यर्थः। किम्भूतं पुरम्?परम् उत्कृष्टम्।। ३३॥

**यमकबोधिनी**—सर्वेषु स एव शोभापात्रमभूदित्याह-शेषेति पादैश्चतुर्भिः। शेषेति-नलेन वैरिसैनिना उत्सवः प्रापि स्वयंवरोत्सवः प्राप्तः। नलोऽपि स्वयंवरं जगामेत्यर्थः। कीदृशेन नलेन? शेषपरमहस्तेन शेष इव परमौ उत्तमौ यस्य स तथा तेन। क्वचित् तदनुपरमहस्तेनेति पाठः। कीदृशः उत्सवः? परमहस्तेनः परेषाम् अन्येषां यो मह

१. 'शेष' इति 'ग-घ' पुस्तकयोः।

२. तत्पुरमहस्तेन इति 'ञ' पुस्तके।

३. विद्यावती-महस्तूत्सवतेजसोरित्यमरः। सूर्यसम्बन्धादत्र महस्तेजसोऽर्थे।

उत्सवस्तस्य स्तेनः चौरः । मह उद्धव उत्सव इत्यमरः । पुनः कीदृशेन नलेन? स्फुरितपरमहस्तेन परम् उत्कृष्टं च तन्महश्च परमहस्तस्य भावस्तत्ता । स्फुरिता दीप्ता परमहस्ता उत्कृष्टहस्ततेजस्त्वं यस्य सः तथा तेन । स्फुरितः परमो दक्षिणो हस्तो यस्येति व्याख्या पौनरुक्त्योपेक्षिताऽस्माभिः । तेन नलेन करणभूतेन तत् उत्सवसम्बन्धि परम् उत्कृष्टम् अहर्दिनं प्रबभौ । केनेव ? रविणेव । यथा रविणा दिनं शोभते तद्वत् । तत्पुरमिति पाठे तस्य भीमस्य पुरं तेन प्रबभौ । केनेव ? रविणा अहरिव । तत्र रकारादि यमकं द्रष्टव्यम् । स्फुरितपरमहस्तेनेति रवेर्विशेषणम् । चेति स्फुरिताः परमाः हस्ताः किरणाः यस्येति तेन तथा ॥ ३३ ॥

**दीपिका**—सोऽथेति-नलेन[१] उत्सवः स्वयंवरमहोत्सवः प्रापि प्राप्तः । किम्भूतेन नलेन ? शेषपरमहस्तेन शेषनागोत्कृष्टभुजेन । किम्भूत उत्सवः ? परमहस्तेनः अन्योत्सवचौरः तेन नलेन । तत्परमोत्कृष्टमहः दिवसं प्रबभौ । केनेव ? रविणेव सूर्येणेव । किम्भूतेनोभयेन ? स्फुरितपरमहस्तेन । स्फुरिता परमहस्ता उत्कृष्टतेजस्त्वं यस्य सः तेन ॥ ३३ ॥

**सुबोधिनी**—सोऽथेति-अथानन्तरं परमहस्तेन परमः उत्कृष्टो हस्तः करो यस्य सः । तेनाजानुलम्बितभुजेनेत्यर्थः । सः स्वयंवरः प्रापि प्राप्तः । कथं भूतः स्वयंवरः ? परमहस्तेनः परेषां महाः परमहाः तेषां स्तेनः तस्करः । महः उत्सवः । परमुत्कृष्टं तत्पुरं भीमनगरं तेन नलेन प्रबभौ शुशुभे । केन किमिव ? स्फुरितपरमहस्तेन स्फुरिताः परमाः उत्कृष्टाः हस्ताः किरणाः यस्य तेन रविणा अहः दिनमिव ॥ ३३ ॥

**अनुवाद**—आजानु बाहु वह नल उस दूसरे-उत्सवों की शोभा का अपहरण करने वाले स्वयंवर उत्सव में पहुंचा । समस्त किरणों से स्फुरित सूर्य के द्वारा जिस प्रकार दिन सुशोभित होता है, उसी प्रकार नल से भीम का वह सुंदर विदर्भपुर सुशोभित हुआ ॥३३ ॥

**क्षिप्तलसन्नालीकानहितेषु मुखेन्दुतुलितसन्नालीकान् ।**

**राज्ञः सन्नालीकान् कान्तिर्विबुधांश्च नाऽहसन्नाली कान् ॥ ३४ ॥**

**अन्वयः**—नाली कान्तिः अहितेषु क्षिप्तलसन्नालीकान् मुखेन्दुतुलितसन्नालीकान् राज्ञः विबुधान् च सन्नालीकान् कान् न अहसत् ॥ ३४ ॥

**अन्वयदीपिका**—क्षिप्तलसन्नेति-नाली कान्तिः कान् विबुधान् च अपरं राज्ञो न अहसत् । अपितु सर्वान् अहसदेव । नलस्येयं नाली नलशरीरकान्तिः । किम्भूतान् उभयान् ? अहितेषु क्षिप्तलसन्नालीकान् शत्रुषु क्षिप्ताः मुक्ताः लसन्तः शोभमानाः नालीकाः बाणाः यैस्ते क्षिप्तलसन्नालीकास्तान् शत्रुप्रेरितमहामार्गणान् । पुनः किम्भूतान् उभयान् ? मुखेन्दुतुलितसन्नालीकान् मुखान्येव इन्दवः मुखेन्दवः । मुखेन्दुभिः तुलितानि सन्ति विकसितानि नालीकानि पद्मानि यैस्ते मुखेन्दुतुलितसन्नालीकाः

१. अत्र टीकायां शेषपरमहस्तेनेति पाठः स्वीकृतः ।

तान्। वदनचन्द्रतुलितकमलानीत्यर्थः। पुनः किम्भूतान् उभयान्? सन्नालीकान् सन्नं नाशितम् अलीकं यैस्तान् निष्कपटानित्यर्थः ॥ ३४ ॥

**यमकबोधिनी**—क्षिप्तेति-नाली नलस्येयं नाली नलसम्बन्धिनी कान्तिः शोभा कान् राज्ञो नृपान् विबुधांश्च देवान् न अहसत् न हसति स्म। अपितु राजभ्यो देवेभ्यश्च नल एव शोभते स्म इत्यर्थः। कीदृशान् राज्ञो विबुधांश्च? उभयविशेषणानि। अहितेषु शत्रुषु क्षिप्ताः प्रेरिताः लसन्तो दीव्यन्तो नालीका बाणा यैस्ते तथा तान्। पुनः मुखेन्दुतुलितसन्नालीकान् मुखेन्दुना तुलितानि सदृशीकृतानि सन्ति नालीकानि कमलानि यैस्ते तान्। मुखचन्द्रसदृशीकृतशोभनपद्मान्। नालीकमध्वे बाणे चेति वैजयन्ती। पुनः कीदृशान्? सन्नालीकान् पन्नं तु पतितं प्रोक्तं सन्नं शान्तं च सूरिभिरिति हलायुधः। अलीकं त्वप्रियेऽनृते इत्यमरः। क्षिप्तेत्यादिविशेषणत्रयेण क्रमेण राजसु देवेषु च बलवत्वं सुन्दरत्वं धर्मवत्त्वं च व्याख्यातमनेन। तेभ्यो नलस्यैव श्रैष्ठ्यं ध्वनितम् ॥ ३४ ॥

**दीपिका**—क्षिप्तलसन्नालीकेति—नाली नलसम्बन्धिनी कान्तिः कान् राज्ञः नृपान् विबुधान् देवांश्च नाहसत् न जहास। अपितु सर्वान्। किम्भूतान् भूपान्? अहितेषु शत्रुषु क्षिप्तलसन्नालीकान् प्रेरितमनोहरबाणान्। पुनः किम्भूतान्? मुखेन्दुतुलितसन्नालीकान् आननचन्द्रनिष्प्रभीकृतकमलान् राज्ञः। सन्नालीकान् व्यक्तकपटान् ॥ ३४ ॥

**सुबोधिनी**—क्षिप्तेति-नलस्येयं कान्तिः नाली कान् राज्ञो नृपान् च पुनः कान् विबुधान् न अहसत्। अपितु सर्वानिव। कीदृशान्? अहितेषु शत्रुषु क्षिप्तलसन्नालीकान् क्षिप्ताः प्रेरिताः लसन्तो देदीप्यमानाः नालीकाः बाणविशेषाः यैस्तान्। एवं मुखेन्दु-तुलितसन्नालीकान् सन्नम् अपगतम् अलीकं कपटादि येषां तान्। षदलृविसरण-गत्योः क्तः ॥ ३४ ॥

**अनुवाद**—शत्रुओं में तीक्ष्ण बाणों को छोड़ने वाले, मुखरूपी चंद्र से कमलों की बराबरी करने वाले, छल कपट आदि से रहित देवताओं और राजाओं में से नल की शोभा किसे तिरस्कृत नहीं की? अर्थात् सभी को तिरस्कृत की ॥ ३४ ॥

**अजनि जला पास्यन्तं[१] स्वयशो निजकं महः किलाऽपास्यन्तम्[२]।**
**शत्रुकलापास्यन्तं प्रेक्ष्य[३] नलं सुरततिः कलापास्यन्तम् ॥ ३५ ॥**

**अन्वयः**—स्वयशः पास्यन्तं निजकं महः किल अपास्यन्तं शत्रुकलापास्यन्तं कलापास्यं तं नलं प्रेक्ष्य सुरततिः जला अजनि ॥ ३५ ॥

---

१. कलापास्यन्तमिति 'छ' पुस्तके पाठः।

२. कालापास्यन्तमिति 'छ' पुस्तके।

३. वीक्ष्य इति 'ख' पुस्तके पाठः।

**अन्वयदीपिका**—अजनीति-सुरततिः देवश्रेणिः तं नलं वीक्ष्य दृष्ट्वा जला अजनि। जडा स्तब्धा जातेत्यर्थः। डलयोरलयोश्चैव शसयोर्बवयोस्तथा। वदन्त्येषां हि सावर्ण्य-मलङ्कारविदो जनाः इति वचनात् डलयोरभेदः। कथं भूतं तं नलम्? स्वयशः पास्यन्तं रक्षन्तम्। स्वस्य यशः स्वयशः। स्वकीयं यशः रक्षन्तमित्यर्थः। पुनः किम्भूतम्? अनिजकं महः अपास्यन्तं परैश्वर्यनाशकमित्यर्थः। न निजकम् अनिजकं परकीयमित्यर्थः। किल इति सत्ये। पुनः किम्भूतम्? शत्रुकलापास्यन्तं कलापश्च असयश्च कलापासयः शत्रूणां कलापासयः शत्रुकलापासयः। शत्रुकला-पासीनाम् अन्तः नाशकरः शत्रुकलापास्यन्तः तम्। अरिनिषङ्गासिनाशकमित्यर्थः। पुनःकिम्भूतम्? कलापास्यं कलापवद् आस्यं वदनं यस्य सः कलापास्यः तं कला-पास्यन्तम्। चन्द्रमुखमित्यर्थः। कलापो भूषणे बर्हे तूणीरे संहतेऽपि चेत्यमरः॥ ३५॥

**यमकबोधिनी**—अजनीति-सुरततिर्देवपङ्क्तिः तं पूर्वोक्तलक्षणं नलं प्रेक्ष्य विलोक्य जडा अजनि। दमयन्त्यां नैराश्यात् पुत्रिकातुल्या बभूवेत्यर्थः। दीपजनबुधपूरितायिप्या-यिभ्योऽन्यतरस्याम्। तत्र हेतुः। किं करिष्यन्तम्? स्वयशो निजकीर्तिं पास्यन्तं रक्षन्तम्। अग्रे नलो निजयशोरक्षितेत्यर्थः। किलेत्यागमे। किं कुर्वन्तम्? निजकं स्वकीयं देवानामिति यावत् महस्तेजोऽपास्यन्तम् अपक्षिपन्तम् अनिजकं यशोऽपास्यन्तमिति वा व्याख्या। परकीयं यशस्तिरस्कुर्वन्तम्। कीदृशं तम्? शत्रुकलापास्यन्तम् शत्रुकलापस्य वैरिसमूहस्य असयः खड्गाः तेषामन्तो नाशो यस्मात् स तथा। तमासीनम् इत्युपलक्षणम्। तमासाद्य शत्रूणां भग्नशस्त्रत्वात् पराजय इति भावः। पास्यन्तमित्यादिविशेषणत्रयेण क्रमेण भविष्यद्वर्तमानभूत-कालेषु नलगुणातिरेको दर्शितः। पुनः कीदृशम्? कलापास्यन्तम्। कलाः पातीति कलापश्चन्द्रः। स इवास्यं मुखं यस्य तथा तम्। कला चन्द्रकलायां च कला स्यात् क्रीडनादिके इति विश्वः। डलयोरैक्यत्वात् अत्रादियमकं द्रष्टव्यम्। उक्तं च रलयोर्डलयोश्चैव ऋलृयोर्बवयोरपि। नञयोर्णणयोश्चैव सविसर्गाविसर्गयोः। सबिन्दुकाबिन्दुको यः स्यादभेदेन कल्पनमिति। तथा चोद्भटोऽपि यमकश्लेषचि-त्रेषु बवयोर्डलयोर्नभित्। नानुस्वारविसर्गौ च चित्रभङ्गाय॥ ३५॥

**दीपिका**—अजनि इति-सुरततिः देवपङ्क्तिः तं नलं प्रेक्ष्य जडा स्तब्धा अजनि जाता। उभयोरैक्यम्। किम्भूतम्? स्वयशः निजकीर्तिं पास्यन्तं पालयन्तम्। पुनः किम्भूतम्? अनिजकं परकीयं महः तेजः अपास्यन्तम्। किलेति प्रसिद्धौ। पुनः किम्भूतम्? तं शत्रुकलापास्यन्तं रिपुसमूहस्य बलनाशम्। पुनः किम्भूतम्? तं कलापास्यं चन्द्राननम्॥ ३५॥

**सुबोधिनी**—अजनीति-सुरततिर्देवपङ्क्तिस्तं नलं प्रेक्ष्य दृष्ट्वा जला जडा किङ्कर्तव्यताविमूढा जातेत्यर्थः। डलयोरभेदः। कीदृशं नलम्? स्वीयं यशः पास्यन्तं रक्षन्तम् अनिज-कमस्वकीयं महस्तेजः प्रभुत्वमपास्यन्तमरक्षन्तम्। यद्वा निजकं स्वकीयं महस्तेजः

अपास्यन्तं दूरतः प्रसारयन्तमित्यर्थः । एवं शत्रुकलापास्यन्तं शत्रूणां कलापाः समूहास्तानस्यति क्षिपति इति सः तम् । अथवा अस्यन्तम् असिना अन्तो यस्य एतादृशः शत्रुकलापो यस्य । एवं कलापास्यं कलापश्चन्द्रस्तत्सदृशं मुखं यस्य तम् । कलापो भूषणे बर्हे तूणीरे संहतेऽपि चेत्यमरः ॥ ३५ ॥

**अनुवाद**—अपने यश की रक्षा करने वाले और उसे दूर तक फैलाने वाले तथा दूसरे के तेज को विनष्ट करने वाले, शत्रुओं के खड्ग, तलवार आदि के नाशक, चन्द्रमा के समान मुख वाले उस नल को देखकर देवताओं का समूह किंकर्तव्यविमूढ हो गया ॥३५ ॥

**स्वर्निलयानामनलङ्कृतमपि[१] जेतुं ततिः श्रिया नाम नलम् ।**

**यमजेयानामनलं प्रोचे शक्रस्तमरिचयानामनलम् ॥ ३६ ॥**

**अन्वयः**—यम् अनलङ्कृतमपि स्वर्निलयानां ततिः श्रिया जेतुं नाम अनलं तम् अजेयानाम् अरिचयानाम् अनलं नलं शक्रः प्रोचे ॥ ३६ ॥

**अन्वयदीपिका**—स्वर्निलयेति-शक्रः इन्द्रः इति वक्ष्यमाणं तं नलं प्रोचे अवदत् । तं कम्? स्वर्निलयानां ततिर्देवसमूहः श्रिया स्वलक्ष्म्या शोभया यं नलं जेतुम् अभिभवितुं तिरस्कर्तुम् अनलम् असमर्था असक्तेत्यर्थः । स्वर्गः निलयः आश्रयो येषां ते स्वर्निलयाः तेषाम् । किम्भूतं तम्? नाम इति निश्चितम् । अनलङ्कृतमपि न अलङ्कृतोऽनलङ्कृतः तमनलङ्कृतम् अलङ्काररहितमपि । पुनः किम्भूतं तम्? अरिचयानामनलं शत्रुवृन्दवह्निं दाहकमित्यर्थः । कथं भूतानाममरिचयानाम्? अजेयानां न जेयाः अजेयाः तेषां जेतुमशक्यानां नलातिरिक्तैरित्यर्थः ॥ ३६ ॥

**यमकबोधिनी**—स्वरिति-शक्रस्तं नलं प्रोचे इत्यन्वयः । कीदृशं तं नलम्? अरिचयानां वैरिसमूहानाम् अनलम् अग्निं शत्रुसङ्घदाहकमित्यर्थः । समवायश्चयो गण इत्यमरः । यद्वा अरीणां चयाः वप्राणि तेषाम् अनलम् । शत्रुपुरप्रकारदाहकमित्यर्थः । स्याच्चयो वप्रमस्त्रियामित्यमरः । चयो रोधसि प्राकारे पितरि स्मृतः । कीदृशानाम् अरिचयानाम्? अजेयानाम् अन्यैरजेतव्यानाम् । जेयो जेतव्यमात्रके इत्यमरः । अजेयशात्रवदाहकत्वेनास्य वैरिभिरपराजेयत्वं ध्वनितम् । शक्रवाक्यं च सुन्दरस्यास्य दूत्यकरणेन स्वयंवरप्रत्याख्यानसम्भावनया वैरिभावेनेत्यूह्यम् । सुन्दरत्वमाह-नामेत्यव्ययं प्राकाश्ये । स्वर्निलयानां ततिर्दिवौकसां पङ्क्तिर्यं नलं श्रिया कान्त्या कृत्वा जेतुमनलम् असमर्था । न अलम् अनलं नञ् समासः । कीदृशम्? अपि यमनलङ्कृतमपि नेपथ्यैरभूषितनलस्य अनलङ्कारसुभगत्वेन वरणयोग्यत्वादात्मनः सालङ्कारत्वेऽपि वरणासम्भावनात् वैरभावनया तं दूतं विधाय प्रोवाचेति श्लोकार्थः । क्वचित् प्रोचे शत्रुरित्यपि पाठः ॥ ३६ ॥

---

१. अनलङ्कृतिमपि इति 'ञ' पुस्तके ।

**दीपिका**—स्वर्निलयानामिति-शक्रः इन्द्रः तं नलं प्रोचे अब्रवीत्। तं कम् ?यं स्वर्निलयानां ततिः देवसमूहः अनलङ्कृतम् अलङ्काररहितमपि श्रिया जेतुं निष्प्रभीकर्तुम् अनलम् असमर्थः। नामेति सम्भावनायाम्। किम्भूतं नलम्? अजेयानां जेतुमशक्यानाम् अरिचयानां शत्रुसमूहानाम् अनलम् अग्नितुल्यमित्यर्थः॥ ३६॥

**सुबोधिनी**—स्वरिति-शक्र इन्द्रस्तं प्रोचे उवाच। नाम सम्भावनायाम्। तं कम्? यमनलङ्कृतमप्यलङ्काररहितमपि नलं स्वर्निलयानां देवानां ततिः श्रेणिः श्रिया शोभया जेतुं तिरस्कर्तुम् अनलं न समर्था। किम्भूतं नलम्? अजेयानाम् अन्यैर्जेतुमशक्यानामरिचयानां शत्रुयूथानाम् अनलमग्निं दाहकत्वात्॥ ३६॥

**अनुवाद**—शृंगार रहित भी जिस नल को देवसमूह शोभा से जीतने में समर्थ नहीं था, दूसरों के द्वारा न जीते जाने योग्य शत्रुओं के अग्नि उस नल से इन्द्र बोला—॥३६॥

**वद कामायासन्नस्त्वं भैम्यै यद्गुणाः श्रमा[१]याऽऽसन् नः।**
**श्रेष्ठतमा याऽऽसन्नस्त्वां द्रष्टा न तु जन[२]: स्वमायासन्नः॥ ३७॥**

**अन्वयः**—सन्! त्वं भैम्यै नः कामायासं वद। यद्गुणाः नः श्रमाय आसन्। या श्रेष्ठतमा त्वां द्रष्टा न तु (तस्याः इत्याध्याहारः) आसन्नः स्वमायासन्नः जनः॥ ३७॥

**अन्वयदीपिका**—वदेति-पूर्वश्लोकेनोक्तम् इन्द्रस्तं प्रोचे किमुवाचेत्याह। हे नल! हे सत्पुरुष! त्वं भैम्यै नः अस्माकं कामायासं वद। कामेन आयासः कामायासः उद्यमः तं दमयन्त्यै कथय। किम्भूतायै भैम्यै? यद्गुणाः नः अस्माकं श्रमाय खेदाय आसन्। यस्याः दमयन्त्याः सौन्दर्यादयोऽस्माकं खेदाय अभवन्। पुनः किम्भूतायै भैम्यै? या श्रेष्ठतमा। अतिशयेन श्रेष्ठा इति श्रेष्ठतमा त्रिलोक्यामित्यर्थः। दमयन्तीसमीपगमने च कश्चिद् द्रक्ष्यति वेति माऽशङ्कि। इत्याह—हे नल! तु पुनः तस्याः आसन्नो जनः निकटवर्त्यपि जनः त्वां न द्रष्टा। न द्रक्ष्यतीत्यर्थः। किम्भूतो जनः? स्वमायासन्नः स्वस्य माया स्वमाया स्वमायया आसन्नः स्वमायासन्नः। अस्मन्मायावृतः आच्छन्न इत्यर्थः॥ ३६॥

**यमकबोधिनी**—वदेति-हे सन्! हे सत्पुरुष! हे नल! त्वं भैम्यै नोऽस्माकं कामायासं वद कथय। कामस्य आयासः प्रयासस्तं त्वत्सौन्दर्यश्रवणेन कामाकुलतया स्वर्गादिन्द्रादयस्त्वां परिणेतुमागता इति तेषामागमनप्रयासं सफलीकुर्विति कथयेत्यर्थः। अनुस्वारस्य नकारे कृते नसो नकारस्यद्वित्वम्। सन्निति नृशब्दसम्बोधनैकवचने। यद्गुणाः यस्याः गुणाः सौन्दर्यादयः शमाय शान्त्यै न आसन्। कामाकुलचित्तत्वादिति भावः। यद्वा शान्त्यै पर्याप्त्यै न आसन्। इयत्तया वक्तुमशक्या इति भावः। यद्गुणा

१. शमाय इति ग घ, ञ पुस्तकेषु।
२. नरः इति 'ञ' पुस्तके।

अस्मद्गुणा वा। पुनः या श्रेष्ठतमा अतिशयेन श्रेष्ठा इति श्रेष्ठतमा। ननु कथं प्रेक्षणीया अन्तर्वासिकजनै रक्षमाणया तया सह संल्लाप इति चेत् तत्राह-तु इति अवधारणे। हे नल! स्वमायासन्नो जनः यन्मायामोहितो लोकस्त्वां न द्रष्टा न द्रक्ष्यति। जनैरनवलोकितो निशङ्कमन्तःपुरं प्रविश्य तत्सन्देशमादाय शीघ्रमागच्छेति भावः। तु स्याद् भेदेऽवधारणे इत्यमरः। हे श्रेष्ठतम! त्वम् आसन्नः निकटम् अय गच्छेति व्याख्यानपराः केचित्॥ ३७॥

**दीपिका**—वदकामायेति-हे नल त्वं नः अस्माकं कामायासं कामपरिश्रमं भैम्यै वद कथय। यद्गुणाः यस्याः गुणाः शमाय शान्त्यै न आसन् न बभूवुः। हे श्रेष्ठतम नल! त्वं तस्याः आसन्नं निकटम् अय गच्छ। जनः लोकः स्वमायासन्नं निजकपटाच्छन्नं त्वां पुनः न द्रष्टा न द्रक्ष्यति॥ ३७॥

**सुबोधिनी**—वदेति-हे नल! त्वं तस्यै भैम्यै नोऽस्माकं कामायासं कामेन कृतो य आयासस्तं वद। त्वत्कृते देवान् कामः पीडयतीति भावः। तस्यै कस्यै? यद्‌गुणाः यस्याः गुणाः नोऽस्माकं श्रमाय खेदाय आसन् अभूवन्। शमायेति पाठे शान्त्यै इत्यर्थः। अथ च श्रेष्ठतमा अत्यन्तमुत्कृष्टा। तु पुनस्तत्रेत्यर्थात् आसन्नो जनो द्वारपालकादिस्त्वां न द्रष्टा न द्रक्ष्यति। कीदृशस्त्वम्? स्वमायासन्नः स्वस्य तव मत्प्रसादजन्या सा माया कपटः तया आसन्नः आच्छन्नः॥ ३७॥

**अनुवाद**—हे सत्पुरुष नल! तुम दमयन्ती से हमारी कामपीड़ा बताओ। जिसके गुण हमारे लिए खेदकारक हैं। जो सुंदरी तुमको देखेगी, उसका समीपवर्ती हमारी माया से आच्छन्न अन्य कोई तुम्हें नहीं देख सकेगा॥ ३७॥

**इति सरवे के हास्तं न्यस्य स मुकुलं सुरप्रवेकेऽहास्त।**

**तामविवेकेहास्तः श्रयति स्त्री तत्र पार्थिवे केहाऽस्त॥ ३८॥**

**अन्वयः**—सुरप्रवेके इति सरवे के हास्तं मुकुलं न्यस्य अविवेकेहास्तः सः ताम् अहास्त। पार्थिवे श्रयति का स्त्री इह आस्त॥ ३८॥

**अन्वयदीपिका**—इतीति-स नलः मुकुलं पुष्पं के शिरसि मस्तके निधाय आरोप्य तां दमयन्तीम् अहास्त। ओहाङ्गतौ अस्य धातोः प्रयोगः। ये गत्यर्थास्ते ज्ञानार्थाः प्राप्त्यर्थाश्च। प्रापेत्यर्थः। कस्मिन् सति? सुरप्रवेके इन्द्रे सरवे सति। उक्तप्रकारेण वदति सति भाषमाणे सति। वदतीति वदन् तस्मिन् वदति सति। सुराणां देवानां प्रवेकः श्रेष्ठः सुरश्रेष्ठ इन्द्रः। तस्मिन् सुरप्रवेके इन्द्रे वचनमुक्तवति सतीत्यर्थः। किम्भूतं मुकुलम्? हास्तं हस्तसम्बन्धिनं हास्तम्। इन्द्रेण दत्तमित्यर्थः। तत्र दमयन्तीगृहे पार्थिवे नले तां स्त्रीं दमयन्तीं श्रयति सति आश्रिते सति इह दमयन्ती समीपे का स्त्री आस्त? तिष्ठेत् उपविशेत् न कापीत्यर्थः। कथम्भूतः स नलः? अविवेकेहास्तः अविवेकस्य ईहा अविवेकेहा आस्ता। त्यक्ता अविवेकेहा येन स अविवेकेहास्तः। अविवेके चेष्टापराङ्मुख इत्यर्थः। अविवेकस्य ईहा नलमवलोकयन्तीं नान्यः शृणुयादित्यर्थः।

तदनुकूलया इच्छया अस्तः प्रेषितः त्यक्त इत्यर्थः । सर्वाः परिचारिकाः स्त्रियः परित्यज्य दमयन्ती नलमानसा आसीदित्यर्थः ॥३८ ॥

**यमकबोधिनी**—इतीति-सुरप्रवेके इत्यमुना प्रकारेण सरवे सति स नलः तां दमयन्तीम् अहास्त जगामेत्यन्वयः । सुरेसु प्रवेक उत्तमः तस्मिन् इन्द्रे । क्लीबे प्रधानं प्रमुखं प्रवेकोऽनुत्तमोत्तम इत्यमरः । रवेण सह वर्तमानः सरवः तस्मिन् सशब्दे प्रोक्तसन्देश इति यावत् । किं कृत्वा ? हास्तं मुकुलं के शिरसि न्यस्य । मुकुलं कुड्मलमब्जमिति यावत् । मारुते वेधसि ब्रघ्ने पुंसि कः कं शिरोऽम्बुनोरित्यमरः । कीदृशः सः ? अविवेकेहास्तः अविवेकोऽज्ञानं तस्येहया चेष्टया अस्तः क्षिप्तः प्रेरित इति यावत् । अज्ञानचेष्टया प्रेरितस्तत्र जगामेत्यर्थः । अन्यथा तस्य तत्र गमनासम्भवात् । यद्वा अविवेकेहा अज्ञानचेष्टा अस्ता निरस्ता येनेति सोमपीतबहुब्रीहिः । देवाज्ञया तत्र गमने न धर्मत्वप्रसङ्गाद् धर्महानिरिति विचार्य तत्र जगामेत्यभिप्रायः । नुत्तनुन्नास्त-निष्ठ्यूताविद्धक्षिप्तेरिताः समाः इत्यमरः । पार्थिवे राज्ञि तत्रान्तःपुरे श्रयति प्रविशति इह दमयन्तीनिकटे का स्त्री आस्ता उपविष्टा न कापीत्यर्थः । आस उपवेशने । तल्लज्जया सर्वा अपि इतस्ततो जग्मुरिति भावः । अतो निश्शङ्कं तामुवाचेत्यूह्यम् । स्त्रीमिति पाठे स्त्री दमयन्ती पार्थिवे श्रयति सति इति योजना । अहास्तेति ओहाङ्गतौ इति धातोर्लुङि आत्मनेपदप्रथमपुरुषैकवचने ॥ ३८ ॥

**दीपिका**—इतीति-सः नलः सुरप्रवेके इन्द्रे इति सरवे सशब्दे दत्तात्वे सति के मस्तके हास्तं मुकुलं हस्तकुड्मलं न्यस्य स्थापयित्वा अहास्त जगाम । किम्भूतः सः ? अविवेके-हास्तः अज्ञानचेष्टानिरस्तः । तत्र पार्थिवे तस्मिन् नले तां स्त्रीं दमयन्तीं श्रयति सति का ईहा चेष्टा आस्त अभूत् । तां स एव जानीत इत्यर्थः ॥ ३८ ॥

**सुबोधिनी**—इतीति-सुरप्रवेके सुरश्रेष्ठे इन्द्रे इति उक्तप्रकारेण सरवे हस्तसम्बन्धि-मुकुलं न्यस्य मस्तकेऽञ्जलिं कृत्वा स नलः तां दमयन्तीम् अहास्त जगाम । कीदृशः सः ? अविवेकेहास्तः अविवेकस्य ज्ञानविशेषस्य ईहा चेष्टा तया अस्तः रहितः । यद्वा नलं दृष्टवती दमयन्ती नान्यं वरिष्यतीति इन्द्रस्य योऽविवेकस्तज्जनितया चेष्टया अस्तः प्रेषितः । पार्थिवे नले श्रयति गतवति सति का स्त्री इह स्थले आस्त अतिष्ठत् न कापीत्यर्थः ॥ ३८ ॥

**अनुवाद**—देवराज इन्द्र के इस प्रकार कहने पर शिर में हाथ के पुष्प रखकर (अर्थात् अंजलिबाँधकर प्रणाम करके) अविवेक की इच्छा से वहाँ भेजा गया वह नल दमयंती के पास पहुंच गया । राजा के पहुंचने पर कौन स्त्री वहाँ रही ? अर्थात् कोई भी नहीं ॥ ३८ ॥

**हरिपवमानयमानान्दूतोऽस्मि नलो महारमानयमानान् ।**

**भवतीमाऽऽनयमानान्[1] भैमि सुरान् विद्धि महमिमानयमानान् ॥ ३९ ॥**

---

१. भवतीम्मानयमानान् इति ङ-च पुस्तकयोः । भवता मानयमानान् इति 'ञ' पुस्तके ।

**अन्वयः**—हे भैमि ! (अहम्) हरिपवमानयमानां दूतो नलः अस्मि । इमान् महारमानयमानान् भवतीम् आनयमानान् सुरान् महम् अयमानान् विद्धि ॥ ३९ ॥

**अन्वयदीपिका**—हरीति-हे भैमि ! हे दमयन्ति ! अहं हरिपवमानयमानां दूतो नलोऽस्मि । हे भैमि ! त्वम् इमान् सुरान् इन्द्रादीन् देवान् महं स्वयंवरोत्सवम् अयमानान् आगच्छमानान् विद्धि जानीहि । किम्भूतान् इमान् ? महारमानयमानान् रमा लक्ष्मीः नयो नीतिः मानः अभिमानः रमा च नयश्च मानश्च ते रमानयमानः । महान्तो रमानयमानाः येषां ते महारमानयमानाः तान् महारमानयमानान् । उत्कृष्टलक्ष्मीनीतिमानवतः । पुनः किम्भूतान् इमान् ? भवतीं त्वाम् आनयमानान् पूजयत आराधयतः इत्यर्थः । हरिशब्देन इन्द्रवरुणौ ग्राह्यौ ॥ ३९ ॥

**यमकबोधिनी**—हरीति-हे भैमि ! अहं नलः हरिपवमानयमानां दूतोऽस्मि । हरिः इन्द्रः पवमानो वायुः यमो वैवस्वतस्तेषाम् । यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिककपिभेकेषु हरिर्ना कपिले त्रिषु इत्यमरः । महम् उत्सवम् अयमानान् आगच्छत इमान् पुरतो विद्यमानान् सुरान् विद्धि जानीहि । उत्सवः स्यान् महः क्षण इति हलायुधः । कीदृशान् ? महारमानयमानान् रमा श्रीश्च नयो नीतिश्च मानोऽभिमानः पूजा चेति महान्तः प्रचुराः रमानयमानाः येषां ते तथा तान् महारमानयमानान् । महारमानयमाना इति पाठे हरिपवमानयमानां विशेषणम् । तत्र महे उत्सवे अरो गमनं येषां ते महाराः । अरणम् अरः । ऋगतावित्यस्य धातोः प्रयोगः । महारा उत्सवम् आगतवन्तो राजानस्तेषां मानस्य गर्वस्य यमो यमनं येभ्यस्ते तथा तेषामुत्सवगर्वदमनानाम् । पुनः कीदृशान् ? भवतीं त्वामानयमानान् पूजयतः ॥ ३९ ॥

**दीपिका**—हरिरिति-हे भैमि ! अहं हरिपवमानयमानां इन्द्रवायुवैवस्वतानां नलो नलाभिधः दूतोऽस्मि दूतो भवामि । इमान् सुरान् महारमान् अतिलक्ष्मीकान् । पुनः किम्भूतान् सुरान् ? अयमानान् श्रेयोमानान् । पुनः किम्भूतान् सुरान् ? भवतीं त्वामानयमानान् पूजयमानान् ॥ ३९ ॥

**सुबोधिनी**—हरीति-हरिरिन्द्रोऽग्निश्च पवमानौ वरुणो वायुश्च यमः कृतान्तस्तेषां दूतो नलनामाहमस्मि । इमान् इन्द्रादीन् सुरान् महं तव स्वयंवरम् अयमानान् प्राप्तान् विद्धि जानीहि । कीदृशान् ? महारमानयमानान् रमा लक्ष्मीः नयो नीतिः मानश्चित्तसमुन्नतिः । महान्तो रमानयमाना येषां ते तान् । एवं भवतीं त्वां मानयमानान् स्वीकुर्वतः ॥ ३९ ॥

**अनुवाद**—हे दमयंति ! इन्द्र, वायु और यम आदि देवताओं का दूत मैं नल हूं । महान् शोभा, नीति और अभिमान वाले तथा तुम्हारी पूजा करने वाले अर्थात् तुम्हें चाहने वाले इन देवों को इस स्वयंवर में आया हुआ समझो ॥ ३९ ॥

**तुल्येऽप्सरसा[१] देहि प्रभवो मग्नाः स्मरप्रसरसादे हि ।**

**तानभिसर सा देहि स्रजं च नाकात् सुखं च सरसादेहि ॥ ४० ॥**

**अन्वयः**—हे अप्सरसा तुल्ये ! हि देहिप्रभवः स्मरप्रसरसादे मग्नाः । सा (त्वं) तान् अभिसर स्रजं च देहि । सरसात् नाकात् सुखं च एहि ॥ ४० ॥

**अन्वयदीपिका**—तुल्येति-हे अप्सरसा तुल्ये ! हि यस्मात् कारणात् एते देहिप्रभवः स्मरप्रसरसादे मग्नाः निमग्नाः भवन्ति । देहिनां प्राणिनां प्रभवः नियन्तारः । स्वामिनः । स्मराद् भवः उत्पत्तिर्यस्य असौ स्मरप्रभवः । स्मरप्रभवश्चासौ सादश्च तस्मिन् स्मरप्रसरसादे कामजन्यदुःखसागरे निमग्नाः । अतः कारणात् सा त्वं तान् इन्द्रादीन् देवान् अभिसर वर । च अपरं स्रजं मालां देहि । नाकात् स्वर्गात् सुखम् एहि प्राप्नुहि । अत्र आत् एहि इति पदच्छेदः । किम्भूतात् नाकात् ? सरसात् रसेन स्नेहादिरसेन सह वर्तमानः सरसः तस्मात् ॥ ४० ॥

**यमकबोधिनी**—तुल्येति-हे अप्सरसा तुल्ये ! देवस्त्रीसदृशे भैमि ! देहिप्रभवो देवाः स्मरप्रसरसादे मग्नाः । देहिनां प्राणिनां प्रभवः स्वामिनः स्मरस्य कामस्य प्रसरः उद्रेकस्तेन यः सादः खेदः तस्मिन् । यद्वा स्मरप्रसरसादे कन्दर्पप्रणयपङ्के । प्रसरप्रणयौ समौ इत्यमरः । सादो जम्बालशफर्योरित्यमरः । हीत्यव्ययं निश्चये । सा पूर्वोक्तगुणा त्वं तान् देवान् अभिसर सन्मुखीभव । च पुनः स्रजं वरणमालां देहि । सरसात् शृङ्गारादिसहितात् नाकात् स्वर्गात् सुखं च एहिं प्राप्नुहि । अपसरस् शब्दः एकवचनान्तोऽपि तथोक्तशब्दप्रभेदकृता अप्सरसोऽप्सराः प्रोक्ता इति ॥ ४० ॥

**दीपिका**—तुल्येति-हे अप्सरसा तुल्ये देहिप्रभवः देहिनां प्रभवः ईश्वराः देवाः ! हीति निश्चये । स्मरप्रसरसादे कामप्रवर्तनदुःखे मग्नाः बुड्डिताः । सा त्वं तान् देवान् अभिसर उपसर च पुनः स्रजं मालां च देहि । सरसान्नानारससहितात् नाकात् सुखं च सुखमपि एहि लभस्व ॥ ४० ॥

**सुबोधिनी**—तुल्य इति—हे अप्सरसा तुल्ये ! रम्भादिसदृशे ! देहि प्रभवो मनुष्यादीनामीश्वराः देवाः स्मरप्रसरसादे स्मरस्य यः प्रसरः प्रसारस्तज्जन्ये सादे दुःखे मग्नाः । हि यतः अतः सा त्वं तान् देवान् अभिसर स्वीकुरु । च पुनः स्रजं मालां देहि । सरसादमृतादियुक्तात् नाकात् सुखम् एहि प्राप्नुहि ॥ ४० ॥

**अनुवाद**—हे अप्सरा के सदृश ! (दमयंति !) मनुष्य आदि देहधारियों के स्वामी देवता जिस तुम्हारे सौन्दर्य के कारण होने वाली कामपीड़ा से उत्पन्न दुःख में मग्न हैं । वह तुम उनके लिए अभिसार करो और उन्हे वरमाला पहनाओं । (ऐसा करके तुम) शृंगारादि से युक्त स्वर्ग से सुख प्राप्त करो ॥ ४० ॥

---

१. विद्यावती—'अप्सरस्' शब्दस्य बहुवचन एव प्रयोग-नियमः । प्रयोगश्चेहैकवचने । तथात्वेऽपि अप्सरोभिस्तुल्ये बोध्यमित्यत्र । तद्वत् सुखम् इत्यपि ।

**इति कृतसामारवतः सुरलोकात् तन्मुखेन सा मारवतः ।**
**न रिरंसामाऽऽर वत स्थलादिव नलोत्कमानसा मारवतः ॥ ४१ ॥**

**अन्वयः**—नलोत्कमानसा मारवतः स्थलादिव (नलोत्कमानसा) सा तन्मुखेन इति कृतसामा (अपि) रवतो मारवतः सुरलोकात् वत रिरंसां न आर ॥ ४१ ॥

**अन्वयदीपिका**—इतीति-सा दमयन्ती तन्मुखेन नलमुखेन । बत इति खेदे । बवयोरभेदः । सुरलोकात् इन्द्रादिकदेवगणात् रिरंसां क्रीडां न आर न प्राप न इयेष । रन्तुमिच्छा रिरंसा तां रिरंसाम् । किम्भूतात् सुरलोकात्? पूर्वोक्तप्रकारेण कृतसामारवतः कृतसामारवः स्तुतिं कुर्वतः । पुनः किम्भूतात् सुरलोकात्? मारवतः मारः कन्दर्पः विद्यते यस्य स मारवान् तस्मात् मारवतः कामयुक्तात् । कथं भूता सा ? नलोत्कमानसा नले उत्कं मनो मानसम् अन्तःकरणं यस्याः सा नलोत्कमानसा नलासक्तेत्यर्थः । कस्मादिव ? मारवतः स्थलादिव । यथा कश्चित् पुमान् मारवतः स्थलाद् रिरंसां नादत्ते नेच्छति । मरोरिदं मारवं तस्मात् मारवतः मरुसम्बन्धिप्रदेशात् । किम्भूतः ? कश्चित् नलोत्कमानसः । अर्थवशाद् विभक्तिविपरिणामः ।[1] नलो जलोत्पन्नद्रव्यविशेषः । नले जलोत्पन्नद्रव्यविशेषे उत्कं मानसं यस्य सः नलोत्कमानसः । यद्वा किम्भूता सा ? कृतसामा कृतं साम यया सा कृतसामा । किम्भूतात् सुरलोकात्? आरवतः शब्दं कुर्वतः ॥ ४१ ॥

**यमकबोधिनी**— इतीति-इति कृतसामा रवतः । इति सा दमयन्ती सुरलोकात् रिरंसां न आर न प्राप्तवतीत्यन्वयः । रन्तुमिच्छा रिरंसा ताम् । कीदृशी सा ? तन्मुखेन नलमुखेन रवतः शब्दात् अनुनयलक्षणात् इत्यमुना प्रकारेण कृतसामा विहितसामलक्षणोपाया । तेन साम्ना प्रबोधिता अपि सुरलोकरिरंसां न आर न अकरोदित्यर्थः । तत्र हेतुः—पुनः कीदृशी ? नलोत्कमानसा नलोत्कण्ठितचित्ता । कीदृशात् सुरलोकात्? मारवतः कामिनः । वतेति विस्मये । कस्मादिव ? मारवतः स्थलादिव । मरोरिदं मारवं तस्मात् । यथा धन्वनः स्थलान्न कश्चिद्रमणेच्छां प्राप्नोति तद्वत् । इति कृतसामारवतः इति कृतसामवाक्यात् सुरलोकादित्येकं वा पदम् ॥ ४१ ॥

**दीपिका**— इतीति-सा दमयन्ती सुरलोकाद् देवसमूहाद्रिरंसा क्रीडनेच्छां न आर न प्राप । वत इति खेदे । किम्भूतात् सुरलोकात्? तन्मुखेन नलवाक्येन इत्युक्तप्रकारेण कृतसामारवतः उक्तदीनवचनात् । पुनः किम्भूतात् सुरलोकात्? मारवतः कामयुक्तात् । किम्भूता सा ? नलोत्कमानसा नलोत्कण्ठितचित्ता । कस्मादिव ? मारवतः स्थलादिव मरुप्रदेशादिव मरोरिदं मारवं तस्मात् । यथा जनः मरुप्रदेशाद्रिरंसां न प्राप्नोति ।

---

१. विद्यावती-व्याख्ययाऽनया नात्र केवलं विभक्तिविपरिणामोऽपितु लिङ्गविपरिणामोऽपि । नह्यत्र तथाऽपेक्ष्यते, नलस्य जलोत्पन्नतृणविशेषवाचित्वात् साहचर्यान्मृणालस्यापि बोधात् । नलोत्कमानसा वरटेव । यथा मृणालोत्कमानसा वरटा मारवतो मरुस्थालाद् रिरंसां नादत्ते तथैव नलोत्कमानसा सा दमयन्ती सुरलोकाद् रिरंसां न भेजे इति विवक्षा कवेः ।

सामारयत: इति पाठे कृतसामारयत: सामनि सामवचनोपन्यासे आरय: वेगो येन तस्मात् । मारयत: मारवत: इत्येकार्थौ । नलोत्कमानसा इत्यत्रैव योजनिका । मारयत: स्थलादिति (पाठ: तत्र) मरणात्मकात् स्थलादित्यर्थ: । अन्यत्समानम् ॥ ४१ ॥

**सुबोधिनी**—इतीति-सा भैमी सुरलोकादिन्द्रादिदेवगणात् रिरंसां रन्तुमिच्छां क्रीडां न आर न प्राप । किम्भूता ? तन्मुखेन इति पूर्वोक्तन्यायेन कृतसामा रवत: । कृत: सामस्य सान्त्वनाया: आरव: शब्दो येन तत: । एवं मारवत: मारो मदनस्तद्वत: । वत खेदे । कीदृशी सा ? नलोत्कमानसा नले उत्कम् उत्कण्ठितं मानसं चेतो यस्या: सा । कस्मादिव ? मारवत: स्थलादिव मरोरिदं मारवं तादृशात् स्थलादिव सम्बन्धि-देशादिव । यथा हंसो नलोत्कमानस: नले जलोत्पन्नपदार्थे विसे उत्कण्ठितचित्तो मरुसम्भूतवस्तुतो रिरंसां न प्राप्नोति । यद्वा कृतसामा इति दमयन्त्या विशेषणं कृतं साम सान्त्वं यया सा आरवत: शब्दं कुर्वत इति सुरलोकविशेषणम् ॥ ४१ ॥

**अनुवाद**—जल में उत्पन्न होने वाले विस को खाने की इच्छा वाली हंसी जिस प्रकार मरुस्थल से रति नहीं करती उसी प्रकार नल के लिए उत्कंठित मन वाली (दमयंती भी) नल के द्वारा कहे गये सांत्वना भरे शब्दों से भी कामप्रद सुरलोक से रति नहीं कर पायी ॥४१ ॥

**सा विरराजाऽऽयतया वीक्ष्य दृशा तं स्मरातुराऽजायत या ।**
**[१]स्थितिरत्राजायतया द्युसदां चाऽभाषि निषधराजाय तया ॥ ४२ ॥**

**अन्वय:**—या अत्र आयतया दृशा तं वीक्ष्य स्मरातुरा अजायत सा विरराज । तया च द्युसदां स्थिति: निषधराजाय अजायतया अभाषि ॥ ४२ ॥

**अन्वयदीपिका**—सा विरराजेति-सा दमयन्ती विरराज । विशेषेण शुशुभे । सा का ? दमयन्ती या अत्र भवने तं नलं वीक्ष्य दृष्ट्वा स्मरातुरा अजायत अभूत् । स्मरेण कामेन आतुरा या सा स्मरातुरा कामव्याप्ता अभूत् । कया ? आयतया दृशा । आयस्य भाव: आयता तया विस्तीर्णया दृशा नेत्रेण । च अपरं तया दमयन्त्या निषधराजाय नलाय द्युसदामिन्द्रादीनाम् अजायतया अकलत्रतया अभाषि अवादि । दिवि सीदन्ति ते द्युसद: तेषां द्युसदाम् ॥ ४२ ॥

**यमकबोधिनी**—सेति-सा दमयन्ती विरराज शुशुभे । सा का ? या आयतया दीर्घया दृशा दृष्ट्या तं हंसै: प्रोक्तगुणं नलं वीक्ष्य अवलोक्य स्मरातुरा अजायत । नलदर्शनेन कामाकुलतया बभावित्यर्थ: । उदग्रं दीर्घमायतमिति हलायुध: । च पुन: तया दमयन्त्या द्युसदां देवानामजायतया अभार्यत्वेन अत्र स्वयंवरोत्सवे निषधराजाय स्थितिरभाषि प्रोक्ता । नाहं देवानां जाया भवेयं किन्तु भद्रमागमनं येषां ते तत्रोत्स-वकौतुकदर्शनाय तिष्ठन्तु इति तया नलं प्रत्युक्तमित्यर्थ: । अजायतयेति त्वतलयो-

---

१. पतिरत्राजायतयेति ङ पुस्तके ।

गुणवचनस्य पुंवद्भावो वक्तव्यः । क्रियायामत्यपि च वक्तव्यमिति वाक्यान्निषधराजायेति चतुर्थी । यथा मित्राय कथयति ॥ ४२ ॥

**दीपिका**—सा विरराजेति-सा दमयन्ती विरराज शुशुभे । सा का ? या आयतया दीर्घया दृशा दृष्ट्या नलं वीक्ष्य स्मरातुरा कामातुरा अजायत अभवत् । तया दमयन्त्या निषधराजाय नलाय अत्र स्वयंवरे द्युसदां पतिः इन्द्रः तम् अजायतया अभर्तृतया अभाषि ॥४२ ॥

**सुबोधिनी**—सेति—सा भैमी विराराज । विशेषेण शुशुभे । सा का ? या आयतया विशालया दृशा दृष्ट्या अत्र भवने तं नलं वीक्ष्य दृष्ट्वा स्मरातुरा कामव्याप्ता अजायत अभूत् । च अपरं तया भैम्या निषधराजाय नलाय द्युसदां दिवि सीदन्ति ते द्युसदो देवाः तेषां स्थितिः स्थानम् अजायतया जायाया भावो जायता न जायता अजायता अजायतया अभाषि । स्त्रीत्वेन देवान् न वृतवतीति भावः ॥ ४२ ॥

**अनुवाद**—जो (दमयंती) अपने भवन में उस नल को विशाल नेत्रों से देखकर काम पीड़ित हो उठी और निषधराज से जिसने देवताओं की स्थिति को अपत्नी के रूप में बताया अर्थात् जो उनकी पत्नी बनने को तैयार नहीं हुई। वह दमयंती सुशोभित हुई ॥४२ ॥

**तस्या देवाद्यस्य प्रणम्य च नलेन धीः पदेऽवाद्यस्य ।**
**सति निनदे वाद्यस्य स्वयं प्रियायाः पदं मुदेऽवाद्यस्य ॥ ४३ ॥**

**अन्वयः**—यस्य मुदे प्रियायाः पदं (नलः) स्वयम् अवात् नलेन अस्य देवाद्यस्य च पदे प्रणम्य वाद्यस्य निनदे सति तस्याः धीः अवादि ॥ ४३ ॥

**अन्वयदीपिका**—तस्या इति-च अपरं नलेन आगत्य अस्य देवाद्यस्य अमरस्य यमस्य इन्द्रस्य पदे चरणे प्रणम्य अभिवाद्य तस्याः दमयन्त्याः धीः मनीषा बुद्धिः अवादि अभाषि उक्ता । अस्य कस्य ? यस्य मुदे हर्षाय स नलः प्रियायाः दमयन्त्याः पदं स्थानं गृहं स्वयमवात् वेगात् प्राप । कस्मिन् सति ? वाद्यस्य पटहादेर्निनदे सति शब्दे जाते सति । ध्वानरवस्वन इत्यमरः ॥ ४३ ॥

**यमकबोधिनी**—तस्या इति-यस्य इन्द्रस्य मुदे प्रीत्यै स्वयं नलः प्रियायाः वल्लभायाः पदं स्थानम् अवात् अगच्छत् अस्य देवाद्यस्य सुरप्रथमस्य इन्द्रस्य पादे पादौ प्रणम्य नमस्कृत्य नलेन वैरिसेनिना च तस्याः भैम्याः धीः स्ववचोऽनङ्गीकारलक्षणा बुद्धिः अवादि । चकारस्य पूर्वश्लोकेन सम्बन्धः । पदे[१] इति चतुर्थ्येकवचनं वा यथा प्रणम्य सितिकण्ठाय । क्व सति ? वाद्यस्य चतुर्विधस्यातोद्यस्य निनदे शब्दे सति । अवादिति वा गतिगन्धनयोरिति धातोः लुङि रूपम् । पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु इत्यमरः ॥ ४३ ॥

---

१. विद्यावती— पादः पदङ्घ्रिश्चरणोऽस्त्रियामित्यमरः। क्विबन्तः पद् शब्दः।

**दीपिका**—तस्येति-नलेन प्रियायाः निजभाविनायिकायाः तस्याः बुद्धिः अस्य देवाद्यस्य पदे चरणे प्रणम्य नत्वा अवादि कथिता । कस्मिन् सति ? वाद्यस्य दुन्दुभेः नादे शब्दे सति । नलागमनं दूराद् दृष्ट्वा देवदुन्दुभिमवादयत् । नलेनापि देवेन्द्रस्य तत्प्रतीपधियं श्रुत्वोऽन्येभ्यो व्रीडितो मा भूदिति तस्मिन्नेव समयेऽभाषीत्यर्थः । किम्भूतस्य देवाद्यस्य ? नमस्करणीयस्य । किम्भूता धीः ? स्वयमात्मनः मुदे सन्तोषाय पदं स्थानम् ॥ ४३ ॥

**सुबोधिनी**—तस्या इति-नलेनास्य देवाद्यस्य सुरमुख्यस्य इन्द्रस्य पदे चरणे प्रणम्य अभिवाद्य तस्याः धीः बुद्धिरवादि उक्ता । कस्मिन् सति ? वाद्यस्य तुर्यादेर्निनदे शब्दे सति । यस्य नलस्य मुदे आनन्दाय प्रियायाः पदं वाक्यम् अवात् प्राप । यद्वा अस्य कस्य ? यस्येन्द्रस्य मुदे हर्षाय प्रियायाः पदं स्थानम् अवाज्जगाम । नल इति शेषः । भैमी त्वां न वृणुत इत्युक्तवानिति भावः ॥ ४३ ॥

**अनुवाद**—जिसकी प्रसन्नता के लिये (नल) स्वयं प्रिया के घर गया । उस देवश्रेष्ठ इन्द्र के चरण में प्रणाम करके पटह आदि वाद्यों के शब्द-निनाद होने पर नल ने उस (दमयंती) के विचार बताये ॥ ४३ ॥

**अथ तरसा रङ्गे[1] यन्नृपतिगणोऽकृत पदानि सारङ्गेयम् ।**
**चञ्चलसारङ्गेऽयं दमयन्ती चाऽक्षितुलितसारङ्गेयम् ॥ ४४ ॥**

**अन्वयः**—अथ नृपतिगणः सारं गेयं यन् अयम् (नलः) अक्षितुलितसारङ्गा इयं दमयन्ती च चञ्चलसारङ्गे रङ्गे तरसा पदानि अकृत ॥ ४४ ॥

**अन्वयदीपिका**—अथेति-अथानन्तरम् अयं नृपतिगणः नलश्च रङ्गे स्वयंवरोत्सवे तरसा शीघ्रं पदानि चरणनिक्षेपान् अकृत । आसनेषु स्थितिमकरोत् । किं कुर्वन् ? नलस्य सारम् उत्कृष्टं गेयं वचनं शृण्वन् इति शेषः । च अपरम् इयं दमयन्ती अक्षितुलितसारङ्गा आसीत् । अक्षिभ्यां तुलितानि तिरस्कृतानि सरङ्गाणां नेत्राणि यया सा अक्षितुलितसारङ्गा ।सारं गायन्तीति सारङ्गाः भ्रमराः । चञ्चलाः सारङ्गाः भ्रमराः यस्मिन् स चञ्चलसारङ्गः तस्मिन् । आगतभूपालमौलिमालालोला भ्रमराः । यद्वा सारं गच्छन्तीति सारङ्गाः गजाः चञ्चलाः सारङ्गाः गजाः यस्मिन् असौ चञ्चलसारङ्गस्तस्मिन् चञ्चलसारङ्गे । गमनागमनं कुर्वन्ति गजाः यस्मिन् ॥ ४४ ॥

**यमकबोधिनी**—अथेति-स्वयंवरारम्भे अयं नृपतिगणः असौ राजसमूहो रङ्गे नर्तनस्थाने[2] सभामध्ये इति यावत् तरसा रयेण पदानि चरणानि अकृत चकार । रङ्गं जगाम इत्यर्थः । रङ्गः स्यान्नर्तनस्थानमिति हलायुधः । किं कुर्वन् ? सारं श्रेष्ठं गेयं गानं यन् अवगच्छन् । गत्यर्थानां ज्ञानार्थत्वात् । गायकैर्गीयते गानम् इति गेयमवगच्छन्तो

---

१. नृपतिगणोऽस्थित पदेषु इति ख ग-घ पुस्तकेषु ।

२. विद्यावती—रङ्गे इत्यस्य स्वयंवरमण्डपे इत्यर्थः । यमकबोधिन्यां भ्रान्तः ।

राजानः स्वयंवरारम्भमवलोक्य शीघ्रं तत्र गता इत्यर्थः । कीदृशे रङ्गे ? चञ्चलसारङ्गे भ्रमद्भृङ्गे । यद्वा चञ्चला दानादिप्राप्त्यर्थं लोलाः सारं गायन्ति ते सारङ्गाः श्रेष्ठगायका यस्मिन् स तथा तस्मिन् । केवलं नृपतिगणा एव न तथा किन्तु इयं प्रख्यातगुणा दमयन्ती च रङ्गे पदानि अकृत दमयन्ती च रङ्गं ययावित्यर्थः । कीदृशी ? या अक्षितुलितसारङ्गा नेत्रसमानीकृतकमला । यद्वा अक्षिभ्यां तुलिताः सारङ्गा मृगाः यया सा । लक्षणया वृत्त्या नेत्रसमानीकृतमृगदृष्टिरित्यर्थः । यन् इति इण् गताविति धातोः शत्रन्तं रूपम् । क्वचित्पदान् सारमिति पाठः । स त्वयुक्तत्वादुपेक्षितोऽस्माभिः ॥४४ ॥

**दीपिका**—अथ तरसेति—अथानन्तरम् अयं नृपति गणः स्वयंवरागतः नृपसमूहः तरसा वेगेन रङ्गे स्वयंवरमण्डपे पदानुसारं पदरचनानुकूलं गेयं गानमकृत चकार । इयं दमयन्ती अक्षितुलितसारङ्गा नेत्रसमीकृतकुरङ्गा । यथा गानेन मोहिताः कुरङ्ग्यः अभिसर्तुः वशं प्राप्नुवन्ति तथेयमपि कुरङ्गाक्षी गाने मोहिता कदाचिद् अस्मान् भजेदिति भावः । किम्भूते रङ्गे ? चञ्चलसारङ्गे । चपलभ्रमरेषु पुष्पदामसौगन्ध्याकृष्टा भ्रमरास्तत्रागता इत्यर्थः । सारङ्गश्चातके भृङ्गे कुरङ्गे चेत्यमरः ॥ ४४ ॥

**सुबोधिनी**—अथेति-अथानन्तरम् अयं नृपतिगणो राजलोको रङ्गे स्वयंवरसभायां तरसा वेगेन पदेषु भीमकल्पितमञ्चस्थानेषु अस्थित आसीत् । नृपतिगणः पदान्यकृत इति पाठे पदानि चरणान् अकृत अकरोदित्यर्थः । किं कुर्वन् ? सारमुत्कृष्टं गेयम् अयन् गीतं शृण्वन्निति भावः गत्यर्थो ज्ञानार्थः । कीदृशे रङ्गे ? चञ्चलसारङ्गे सौरभ्याधिक्येन चञ्चलाः सारङ्गा भ्रमरा यत्र तादृशे । यद्वा चञ्चलसारङ्गे खेलत्पक्षिविशेषे इत्यर्थः । यद्वा चञ्चलाः गमनशीलाः सारङ्गाः गजा यस्मिन् तस्मिन्नित्यर्थः । च पुनरियं दमयन्ती स्वोचितपदेषु आस्थित इति पूर्वेणैवान्वयः । कीदृशीयम् ? अक्षितुलितसारङ्गा ? अक्षिभ्यां तुलितः सारङ्गो मृगो यया सा । सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे इत्यमरः ॥ ४४ ॥

**अनुवादः**—सुन्दर गानों को सुनता हुआ यह नृपतिसमूह चंचलभ्रमरों से व्याप्त रंगमंडप में अपने अपने योग्य स्थानों में बैठ गया । यह नल और आँखों से हिरणों की तुलना करने वाली वह दमयंती भी बैठ गये ॥ ४४ ॥

**युग्मकम्**—

**व्यधुरवनामान्येषु प्रजा नृपेष्वथ निवेद्य नामान्येषु ।**
**[1]सूतैर्नामाऽन्येषु प्रकीर्त्यमानेषु शोभना मान्येषु । ४५ ॥**
**साङ्गेन नलसमानाननलसमानानमुत्र[2] कतिचित् पुरुषान् ।**
**प्रैक्षत[3] न न लसमानाननलसमानानभून्न तेषां भेदः ॥ ४६ ॥**

---

१. देहिषु इति 'ञ' पुस्तके पाठः ।

२. अथात्रेति ग-घ ङ पुस्तकेषु ।

**अन्वयः**—अथ येषु सूतैः नामानि निवेद्य प्रकीर्त्यमानेषु मान्येषु नृपेषु प्रजाः अवनामान् व्यधुः नाम। एषु अन्येषु (च) सा शोभना अङ्गेन नलसमानान् अनलसमानान् कतिचित् पुरुषान् प्रैक्षत। (कतिचित् पुरुषांश्च अङ्गेन) लसमानान् अनलसमानान् न प्रैक्षत ?(इति) न। अमुत्र तेषां भेदो नाऽभूत् ॥ ४५-४६ ॥

**अन्वयदीपिका**—व्यधुरिति साङ्गेनेति युग्मम्। अथेत्यनन्तरं तत्र स्वयंवरे सा शोभना शोभमाना दमयन्ती एतेषु देवेषु मध्ये कतिचित् पुरुषान् अङ्गेन शरीरेण नलसमानान् नलतुल्यान् न प्रैक्षत इति न अपितु प्रैक्षत अद्राक्षीत्। केषु सत्सु ? अन्येषु नृपेषु सूतैर्बन्दिभिः नामानि आवेद्य निवेद्य प्रकीर्त्यमानेषु सत्सु कीर्त्यमानेषु सत्सु। बन्दिभिः नामानि निवेद्य अयं कलिङ्गाधिपतिः अयमुत्कलाधिपतिरित्यादि कथयित्वा स्तुत्वा तिष्ठत्सु सत्सु इत्यर्थः। एतेषु केषु ? येषु प्रजा तत्रत्या जनाः लोका अवनामानि नमस्कारान् व्यधुः चक्रुः। किम्भूतेषु येषु ? नाम इति कीर्त्यमानेषु पूज्येषु। कथं भूतान् कतिचित् पुरुषान् ? अनलसमानान् अग्निना समानान् वह्नितुल्यान् तेजस्विनः इत्यर्थः। पुनः कथं भूतान् कतिचित् पुरुषान् ? अनलसमानान् अनलसदृङ्मानोऽभिमानो येषां ते अनलसमानाः तान् अनलसमानान् अत्यभिमानिन इत्यर्थः। तेषां भेदः नाभूत् वैलक्षण्यं नासीत् ॥ ४५-४६ ॥

**यमकबोधिनी**—व्यधुरेति-अथानन्तरं प्रजाजनाः येषु नृपेषु येषु राजसु अवनामान् नमस्कारान् व्यधुः चक्रुः। एषु प्रजानमस्कृतेषु राजसु अन्येषु देहिषु शरीरिषु नामानि तेषां गुणप्रतिपादकान्यभिधानानि निवेद्य तैर्वन्दिभिः बद्धकरैः प्रकीर्त्यमानेषु सत्सु अयममुको राजा अयममुकश्चेत्यादि तेषां नामानि तत्र स्थितेषु लोकेषु ज्ञापयित्वा नितरामेषु राजसु बन्दिभिः स्तूयमानेषु सत्सु इत्यर्थः। सा दमयन्ती अङ्गेन शरीरेण नलसमानान् वैरिसेनिसदृशान् कतिचित् पुरुषान् कतिपयान् पुरुषान् न प्रैक्षत इति न ? किन्तु प्रैक्षत अपश्यत् इति द्वयोरन्वयः। नामेति प्रसिद्धौ। क्वचित् सूतैर्नामित्यपि पाठः। कीदृशी सा मान्येषु माननीयेषु शोभना सा मनोज्ञा। अथानन्तरम्। अत्र समये तेषां नलसदृशपुरुषाणां मध्ये भेदो नाभूत्। ते सर्वेऽप्येकरूपसदृशा आसन्। किं लक्षणान् पुरुषान् ? अनलसमानान् अनलोऽग्निर्लोकपालः तेन समानास्तुल्या-स्तान्। अग्नितुल्यानित्यर्थः। तेजोबाहुल्याग्नेर्मुख्यत्वम्। पुनः किं लक्षणान् ? लसमानान् शोभमानान्। पुनः किं लक्षणान् ? अनलसमानान् अनलसो मानो येषां ते तान्। अन्त्यश्लोकस्य अन्त्यादि-यमकम् इति युग्मम् ॥ ४५-४६ ॥

**दीपिका**—व्यधुरिति स्वाङ्गेनेति युग्मम्—अथ शोभना दमयन्ती सूतैः राजकुलपरम्पराभिज्ञैः नरैः नामानि निवेद्य प्रकीर्त्य अन्येषु अपरेषु मान्येषु पूज्येषु नृपेषु राजसु प्रकीर्त्यमानेषु उच्यमानेषु सत्सु अमुत्रास्मिन् स्वयंवरे तान् कतिचित् पुरुषान् कियन्तः नरान् प्रैक्षत् ददर्श। नामेति प्रसिद्धौ। तान् कान् ? प्रजाः नगरवासिजनाः येषु अवनामानं प्रणतीः

---

३. प्रैक्षन्न इति ग पुस्तके।

व्यधुः चक्रुः । किम्भूतान् पुरुषान् ? अनलसमानान् निरालस्यमानान् । पुनः किम्भूतान् पुरुषान् नलसमानान् नलसाम्यसहितान् । पुनः किम्भूतान् पुरुषान् ? लसमानान् शोभमानान् न इति न किन्तु शोभमानान् । पुनः किम्भूतान् पुरुषान् ? अग्नितुल्यान् । तेषां मध्ये भेदज्ञानमपि नाभूत् ॥ ४५-४६ ॥

**सुबोधिनी**—व्यधुरिति साङ्ग इति युग्मम् । अथ एषु नृपेषु राजसु नामानि निवेद्य उक्त्वा सूतैर्मागधैः प्रकीर्त्यमानेषु स्तूयमानेषु बन्दिभिः कृतपरिचयेषु सत्सु तथा । नाम सम्भावनायाम् । अन्येषु मान्येषु देवेषु प्रकीर्त्यमानेषु सत्सु । एषु केषु ? येषु नृपेषु प्रजास्तत्रत्या जना अवनामान् नमस्कारान् व्यधुश्चक्रुः । सा शोभना भव्या दमयन्ती अमुत्र स्वयंवरे कतिचित् पुरुषान् न प्रैक्षत इति न किन्तु ददर्श । कीदृशान् देदीप्यमानान् एवम् अनलसमानान् अनलसमानास्तान् अङ्गेन शरीरेण नलसमानान् नलेन सदृशान् यतस्तेषां नलसमानां पुरुषाणामिन्द्रादीनां भेदो विवेच्यज्ञानं नाभूत् न जातम् ॥ ४५-४६ ॥

**अनुवाद**—(रंग मंडप में बैठे) इन राजाओं में से सूतों के द्वारा नाम ले लेकर बताये गये मान्य राजाओं को वहाँ उपस्थित प्रजा ने प्रणाम किया । इन राजाओं तथा अन्य देवताओं में अतिसुन्दर उस (दमयंती) ने क्या नल के समान अंगों वाले तथा अग्नि के समान तेजशाली पुरुषों को नहीं देखा ? अपितु देखा ही । सुसज्जित तथा दृढ़ यश वाले कुछ अन्य पुरुषों को भी देखी । किन्तु स्वयंवर मंडप में इनके मध्य भेद नहीं कर पायी । अर्थात् नल को नहीं पहचान सकी ॥ ४५-४६ ॥

**रुचिकृतनासत्यागाः स्फुरतु नलो यदि च वच्मि नाऽसत्या गाः ।**
**अपि दीना सत्यागां न्याययुतेनैव वर्त्मना सत्यागा ॥[१]४७ ॥**

**अन्वयः**—यदि (अहम्) असत्याः गाः न वच्मि । दीना अपि सती सत्यागा न्याययुतेनैव वर्त्मना च आगां (तर्हि) रुचिकृतनासत्यागाः नलः स्फुरतु ॥ ४७ ॥

**अन्वयदीपिका**—अहं यदि असत्या गाः न वच्मि न वदामि तर्हि नलः स्फुरतु प्रकाशताम् । इन्द्रादिभ्यो भिन्नः प्रकाशतां दृश्यताम् । पुनश्च यदि अहं दीना अपि सती न्याययुतेनैव वर्त्मना न्यायमार्गेण आगामागच्छन्ती वर्ते तर्हि नलः स्फुरतु दृश्यताम् । अपि शब्दश्चार्थे च । अपरं च यदि अहं सदा सत्यागा सदाना भवामि तर्हि नलः स्फुरतु । किम्भूतः नलः ? रुचिकृतनासत्यागाः शरीरकान्तिभिर्निर्भर्त्सिताश्विनीकुमारः ॥४७ ॥

**यमकबोधिनी**—बहूनां नलसदृशत्वेन तदज्ञानात् विचिन्त्येति देवाननुनयन्त्याह श्लोकद्वयेन-रुचीति-यद्यहं दीनापि सती असत्याः गाः न वच्मि मृषा वाणीर्न ब्रवीमि । च पुनः यदि न्याययुतेनैव वर्त्मना मार्गेण आगाम् आगच्छामि । देवैः स्वर्गसुखाय प्रलोभितया

१. ग, ङ पुस्तकयोः ४७-४८ पद्ययोरपि युग्मेनैवान्वयः ।

मया यदि पूर्वमेवाङ्गीकृतो मनुष्यवरणेच्छालक्षणो न्यायमार्गो नेषदपि त्यक्तः। दीनापि तत्रापि सम्बध्यते। यदि चाहं सत्यागा सदाना। यदि मया पूर्वं दानानि कृतानि इत्यर्थः। त्यागो विहायितं दानमित्यमरः। तर्हि नलो वैरिसेनिः स्फुरतु प्रकाशताम्। यत्तदोर्नित्यसम्बन्धात् तर्हीति वेदं ज्ञातव्यम्। किं लक्षणो नलः? रुचिकृतनासत्यागाः रुच्या कान्त्या कृतं नासत्ययोराश्विनेययोरागोऽपराधो निन्दा येन स तथा ॥ ४७ ॥

**दीपिका**—रुचिकृतेति—यद्यहम् असत्याः अनृताः गाः वाचः न वच्मि न कथयामि तदा नलः स्फुरतु प्रकटीभवतु। कीदृशः नलः? रुचिकृतनासत्यागाः दीप्तिकृताश्विनीकुमारा पत्यः?[१] च पुनः सती दमयन्ती दुःखितापि न्याययुतेनैव वर्त्मना न्याययुतमार्गेणैव आगाम् आजगाम्। किम्भूता सती? सत्यागा उदारचित्ता इत्यर्थः ॥ ४७ ॥

**सुबोधिनी**—रुचीति-च परं यद्यहं सती साध्वी यद्यहम् असत्याः गाः वाणीः न वच्मि च न वदामि तथा दीनापि यदि न्याययुतेनैव वर्त्मना धर्ममार्गेणैव आगां गच्छामि। यद्यहं सत्यागा त्यागेन दानेन सह वर्तमाना तदा नलः स्फुरतु। इन्द्रादिभिन्नत्वेन ज्ञानविषयो भवतु। कीदृशो नलः? रुचिकृतनासत्यागाः रुच्या कान्त्या कृतः नासत्ययोर्दस्रयो-रागोऽपराधो येन। दस्राधिकसुन्दरः इति यावत् ॥ ४७ ॥

**अनुवाद**—यदि मैं झूठे वचन नहीं बोलती, दीन होकर भी त्यागयुक्त मार्ग से ही चली हूं तो शरीर की कान्ति से अश्विनीकुमारों का अपराध न करने वाला अर्थात् उनसे भी अधिक सुन्दर वह नल प्रकट हो ॥ ४७ ॥

**यदि वा भावं न्यस्य स्थिताऽस्मि नल एव नरविभावन्यस्य।**
**[२]देवसभावन्यस्य द्विपस्य वपुषो भवेद् विभावन्यस्य ॥ ४८ ॥**

**अन्वयः**—यदि (अहं) अन्यस्य भावं न्यस्य नरविभौ नले एव वा स्थिता अस्मि (तर्हि) देवसभावन्यस्य द्विपस्य अस्य वपुषः विभा (मे) अवनी भवेत् ॥ ४८ ॥

**अन्वयदीपिका**—यदीति-अत्र वा शब्दः समुच्चये। चेत् यदि अहं दमयन्ती अन्यस्य अन्यस्मिन् पुरुषे भावं चित्ताभिप्राय न्यस्य त्यक्त्वा नले एव स्थिताऽस्मि तिष्ठामि वर्ते तर्हि अस्य नललक्षणद्विपस्य वपुषः शरीरस्य विभा कान्तिः मे अवनी। अस्तु इति शेषः। रक्षित्री भवेत्। किम्भूतस्य अस्य द्विपस्य? देवसभावन्यस्य। देवसभावने भवः युक्तः उचितः देवसभावन्यः तस्य देवसभावन्यस्य। अन्यो द्विपः वन्यो भवति। कथं भूते नले? नरविभौ नराणां विभुः नरविभुः तस्मिन् नरविभौ नरस्वामिनि ॥४८ ॥

---

१. अत्र अस्पष्टमिव किञ्चित्।
२. त्रिदशसभा इति 'ज' पुस्तके।

**यमकबोधिनी**—यदीति-वा शब्दः पक्षान्तरे। यदि नले एव अभिप्रायं निक्षिप्य स्थिताऽस्मि। यद्यहं नले एव आशयन्यासेनान्यव्यापाररहिताऽस्मि इत्यर्थः। एवकारोऽत्रान्ययोग-व्यवच्छेदार्थः। भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मस्वित्यमरः। किं लक्षणे नले? नरविभौ पुरुषपरिवृढे। तर्हि देवसभा अन्यस्य मायामयस्य अस्य मदभिप्रे-तस्य च नलस्य वपुषः विभाविनी प्रकाशिका भवतु भवतात् इति। किं लक्षणस्य? अस्य वन्यस्य द्विपस्य इव लुप्तोत्प्रेक्षा। आरण्यभवकुञ्जरसदृशस्येत्यर्थः। अतिब-लत्वाद्वन्यद्विपेनोपमम्। अथवा किं लक्षणस्य अस्य? देवसभावनजातस्य वन्यद्वि-पस्य वपुषः शरीरस्य विभा कान्तिः अस्य अन्यद्विपस्य। अवनी प्रीणिका भवेत्। अथवा न भवेत् तथा मम नलादन्यस्मिन् प्रीतिरित्यर्थः॥ ४८॥

**दीपिका**—यदिति अहं नरविभौ पुरुषश्रेष्ठे नले एव भावं चित्तं न्यस्य स्थापयित्वा स्थिताऽस्मि वर्तमाना भवामि। देवसभावन्यस्य देवसभैव वनं तत्र भवस्य द्विपस्यैरावतस्य। च पुनः शरीरस्य विभा श्वेतकान्तिः अन्यस्य भूलोकोत्पन्नस्य हि यस्य अवनी प्राणिनी यदि वा कदाचिदपि भवेत्। तदा ममापि भावः अन्यस्मिन् भवेत्। एतद् द्वयमप्य-सम्भवमित्यर्थः॥४८॥

**सुबोधिनी**—यदि वेति-वा समुच्चये। यदि चेत् अन्यस्मिन् पुरुषे भावं चित्ताभिप्रायं न्यस्य त्यक्त्वा निपूर्वस्य असु क्षेपणे इत्यस्य न्यस्येति रूपम्। अहं नल एव स्थिताऽस्मि तिष्ठामि वर्ते। तर्हि अस्य नलस्य वपुषः शरीरस्य विभा कान्तिः अवनी रक्षिका भवेद् भवतु। कीदृशे नले? नरविभौ नराणां विभुस्तस्मिन्। कीदृशस्य वपुषः देवसभा-वन्यस्य देवानां सभैव वनं तत्रोत्पन्नस्य द्विपस्य हस्तिनः। अन्योऽपि द्विपो वन्यो भवति॥ ४८॥

**अनुवाद**—यदि मैं (दमयंती) दूसरे पुरुषों की इच्छा को छोड़ कर पुरुषश्रेष्ठ नल में ही अपने भावों को रखकर स्थित हूं तो देवसभा रूपी वन में रहने वाले उस गजराज नल के शरीर की कांति मेरी रक्षा करे॥ ४८॥

**कृतभावाऽसावनितानिति भुवमैक्षत सुरान् सुवासा वनिता।**
**स्वपतिं वा सावनिताचिह्नं धार्मिकजने ध्रुवाऽऽसाऽवनिता[१]॥ ४९॥**

**अन्वयः**—इति कृतभावा असौ सुवासाः वनिता भुवम् अनितान् सुरान् सावनिताचिह्नं स्वपतिं वा ऐक्षत। (सा) अवनिता धार्मिकजने ध्रुवा आस॥ ४९॥

**अन्वय दीपिका**—कृतभावेति-असौ दमयन्ती सुरान् देवान् ऐक्षत अपश्यत्। अत्र वा शब्द-श्चार्थे। च अपरं स्वपतिं तं नलम् अपश्यत् अद्राक्षीत्। कथं भूतान् सुरान्? भुवम् अनितान् भूमौ अस्पृष्टान्। कथं भूतं स्वपतिम्? सावनिताचिह्नम्। अवन्या पृथिव्या सह वर्तमानः सावनिः सावनेर्भावः सावनिता। सावनिता एव चिह्नं लक्षणं यस्य सः

१. ध्रुवा साऽवनिता इति 'ज' पुस्तके।

सावनिताचिह्नः तं सावनिताचिन्हम् । भूमौ स्थितमित्यर्थः । तं कम् ? यस्य नलस्य धार्मिकजने साधु-जने अवनिता रक्षणवत्ता ध्रुवा निश्चला । अवनमस्यास्तीति अवनी । अवनिनो भावः अवनिता रक्षणवत्ता साधुजने ध्रुवा आस भवति स्म । किम्भूता सा ? इति उक्तप्रकारेण कृतभावा । कृतः भावो यया सा कृतभावा नले कृताभिप्राया ॥ ४९ ॥

**यमकबोधिनी**—कृतेति-इत्यमुना प्रकारेण कृतभावा कृताभिप्राया असौ वनिता इयं दमयन्ती स्त्री सुरान् देवान् ऐक्षत ददर्श । तदभिप्रायं ज्ञात्वा देवा आत्मानं प्रकाशयामासुरित्यर्थः । अन्तरिक्षाश्रयणमेव देवपरीक्षणम् । कीदृशान् सुरान्? भुवम् अनितान् पृथ्वीम् अप्राप्तान् । अन्तरिक्षे वर्तमानान् इत्यर्थः । नहि देवाः पृथ्वीं स्पृशन्तीत्यागमः । किं लक्षणाऽसौ ? सुवासा शोभनो वासो वसतिर्यस्याः सा तथा । यद्वा शोभनवसना स्वपतिं वा । वा शब्दश्चार्थः । स्वपतिं च ऐक्षत । निजभर्तारं च ददर्श । पूर्वमेव मनोवृतत्वात् पतिशब्दप्रयोगः । कीदृशं तम्? सावैनिताचिह्नम् । अवन्या सह वर्तमानः सावनिः भुवमवष्टभ्य वर्तमान इत्यर्थः । तस्य भावः सावनिता सैव चिह्नं यस्य स तथा तम् । मनुष्याणां भूचरत्वात् तदाश्रयणमेव तत्परीक्षणम् । ननु देवैः कथं पतिज्ञापनेन दुःखाद्रक्षिता आत्मास्वीकारिणी दमयन्ती चेत्तत्राह-धार्मिकजने पुण्यवति जने सा प्रसिद्धा अवनिता रक्षकता ध्रुवा नित्या । अवनं रक्षणमस्यास्तीति अवनी तस्य भावस्तत्ता । सा धार्मिकजने अवश्यं रक्षिका भवतीत्यर्थः । यद्वा ननु कथं दिव्यभोगभुजो देवान् परित्यज्य नले एव सा प्रीतिमती जातेति चेत्तत्राह-धार्मिकजने सा प्रसिद्धा अवनिता प्रीतिमत्ता ध्रुवा । देवानां मायाश्रयत्वेन अधार्मिकत्वात् तस्य च निष्कपटत्वेन धार्मिकत्वाद्युक्तं नले एव प्रीतिमत्वमित्यर्थः । अथवा धार्मिकत्वं दमयन्त्यामेव योज्यम् । अवनं रक्षणे प्रीताविति धरणिः । ध्रुवोऽभेदे क्लीबे तु निश्चिते शाश्वते त्रिषु इत्यमरः ॥ ४९ ॥

**दीपिका**—कृतभावेति-असौ वनिता दमयन्ती इति वैलक्षण्येन सुरान् देवान् स्वपतिं वा नलमपि ऐक्षत ददर्श ज्ञातवतीत्यर्थः । तदेव वैलक्षण्यं कथयति । किम्भूतान् सुरान् ? भुवम् अवनिम् अनितान् अप्राप्तान् । किम्भूतं स्वपतिम् ? सावनिता चिह्नम् सभूमिताल-क्ष्माणम् । किम्भूता वनिता ? कृतभावा विहितचित्ताभिप्राया । अर्थात् नले (कृतभावा)[1] पुनः किम्भूता वनिता ? सुवासा शोभनाम्बरा । पुनः किम्भूता वनिता ? धार्मिके जने धर्मिष्टे लोके ध्रुवा निश्चला । पुनः किम्भूता वनिता ? अवनं रक्षणोपायम् इता अवनिता । अवनितया रक्षितया सह वर्तमाना ॥ ४९ ॥

**सुबोधिनी**—कृतेति-असौ वनिता भैमी भुवं भूमिमनितान् अप्राप्तान् भूमिस्पर्शरहितान् सुरान् देवानैक्षत अपश्यत् । कथं भूता सा ? इत्यनेन प्रकारेण कृतभावा कृतोभावश्चित्ताभिप्रायो यया सा । एवं सुवासाः सुष्ठु शोभनं वासो वस्त्रं यस्याः सा । वा शब्द-

१. कोष्ठके सम्पादकस्य ।

श्चार्थः । च पुनः स्वपतिं नलम् ऐक्षत । कीदृशं पतिम् ? अवन्या सह वर्तमानः सावनिः तस्य भावः सावनिता सैव चिह्नं यस्य तं भूमियुक्तपदत्वात् देवभिन्नत्वेन अपश्यदित्यर्थः । देवानां तद्राहित्यं स्वाभाविकम् । यस्य नलस्य अवनिता अवनं रक्षणमस्यास्तीति अवनी । अवनिनो भावोऽवनिता रक्षणवत्ता धार्मिकजनेषु साधु-जने ध्रुवा निश्चिता आस भवति स्म । बभूवार्थेऽव्ययम् ॥ ४९ ॥

**अनुवाद**—इस प्रकार के (पूर्वोक्त) भावो से युक्त उस सुन्दर वस्त्रों वाली वनिता (दमयंती) ने पृथ्वी को न पाये हुए देवों और पृथ्वी के रक्षण के चिह्नों से युक्त अर्थात् अंतरिक्ष में स्थित देवों और पृथ्वी में स्थित अपने पति (नल) को देखा । वह रक्षणवत्ता धार्मिक जन के लिए ध्रुव थी ।

**स्वरिरंसादेवाऽल्याकुलया दृष्ट्याऽर्थिताऽपि सा देवाल्या ।**
**वपुषि ससादे बाल्यादवृत नलमुपस्थितं[१] रसादेवाऽऽल्या ॥ ५० ॥**

**अन्वयः**—बाल्यात् वपुषि ससादे (सति) आल्याः रसात् देवाल्या अर्थिता अपि अल्याकुलया दृष्ट्या स्वरिरंसादा इव सा उपस्थितं नलम् एव अवृत ॥ ५० ॥

**अन्वयदीपिका**—स्वरिरंसेति-सा दमयन्ती आल्याः सख्या रसादेव स्नेहादेव तं नलमवृत अवृणुत । कथं भूतं नलम् ? उपस्थितं समीपे तिष्ठन्तम् । कस्मिन् सति ? वाल्या-त्बवयोरभेदः बाल्याद् वपुषि शरीरे ससादे सखेदे सति । सादेन खेदेन सह वर्तमाने सति । कथं भूता सा ? देवाल्या अर्थितापि । देवानाम् आलिः श्रेणिः देवालिः तया देवाल्या देवश्रेण्या याचितापि । पुनः कथं भूता सा ? दृष्ट्या नेत्रेण स्वरिरंसादा इव । स्वस्य रिरंसा स्वरिरंसा । स्वरिरंसां स्वक्रीडां ददाति सा स्वरिरंसादा स्वक्रीडाप्रदा इव । कथं भूतया दृष्ट्या ? अल्याकुलया अलिभिः आकुला अल्याकुला तया अल्याकुलया । भ्रमराकुलयेत्यर्थः ॥ ५० ॥

**यमकबोधिनी**—स्वेति-देवाल्या सुरश्रेण्या अर्थिता अपि दूतगिरा याचितापि सा दमयन्ती रसाद् रागान्नलमेव अवृत वृतवतीत्यन्वयः । कीदृशं नलम् ? आल्या वयस्या कृत्वा उपस्थितं निकटे स्थितम् । क्व सति ? बाल्यात् बालभावात् स्त्रीस्वभावाद्वा वपुषि ससादे सति दृष्टेऽपि नले देवमायाभ्रमेण संशयतया दमयन्त्याः शरीरखेदयुक्ते सतीत्यर्थः । कीदृश्या देवाल्या ? स्वरिरंसादेवाल्याकुलया स्वस्य आत्मनो या रिरंसा दमयन्त्या सह रमणेच्छा तस्यै देवाल्याकुलया देवानामिन्द्रियाणि एव अलयो भ्रमरास्तैराकुलया व्यग्रया । इन्द्रियभ्रमराकुलया दमयन्तीरमणाय आशारागेन्द्रि-यैर्दुःखितस्येत्यर्थः । अलयोऽपि पुष्पादिरसरिरंसयैव व्याकुला भवन्ति । तैरिन्द्रि-याणां साधर्म्यम् । देवः सुरे घने राज्ञि देवमाख्यातमिन्द्रियमिति यादवप्रकाशः । अथवा स्वरिरंसादेवाल्या कुलयेति पदद्वयम् । किं लक्षणा सा ? स्वरिरंसादेव स्व आत्मीया रिरंसा तस्यै देवो व्यवहारः स्वयंवररचनालक्षणो यस्याः सा तथा । देवनं

---
१. उपस्थिता इति 'ञ' पुस्तके पाठः ।

देव: दिवि क्रीडादाविति धातु: । अथवा किं लक्षणा सा ? उत्प्रेक्षते स्वरिरंसादा इव निजरमणेच्छाप्रदा इव । कीदृश्या देवाल्या ? अल्या अलिभिर्भ्रमरैराकुलया । अत्र देवैर्विधृतमन्दारकुसुमामोदमोदिनो नन्दनवनविहारिणो मधुपा: सुरश्रेणीमनुगता इति गम्यते । पुन: किं लक्षणया ? सुरश्रेण्या अदृष्टं दृष्टिज्ञानं यस्या: सा तथा । तया कामाकुलेन्द्रियत्वात् चञ्चलनेत्रया । अन्यथाङ्गीकृतनलायास्तस्या वरणाय तेषामागमनमप्यसम्भवमिति भाव: । दृष्टिर्ज्ञानेऽक्षिणि दर्शने इत्यमर: । योजनान्तरमयोग्यत्वादुपेक्षितमस्माभि: ॥ ५० ॥

**दीपिका—**स्वरिरंसादेति-सा दमयन्ती रसादेव रागादेव आल्या सख्या तं नलम् अवृणोत् वृतवती । कस्मिन् सति ? स्वरिरंसादे धूलिक्रीडनादे निजक्रीडनेच्छाप्रदे वपुषि शरीरे ससादे स्मरशरसाधमाने सति । किम्भूता सा ? अवाल्या न विद्यते बाल्यं यस्या सा । पुन: किम्भूता सा ? देवाल्या सुरश्रेण्या आकुलया अस्मान् अङ्गीकरिष्यति न चेति व्याकुलया दृष्ट्या दृशा बाल्यात् जाड्यात् अर्थितापि प्रार्थितापि । कथं भूता ? उपस्थिता निकटे वर्तमाना ॥ ५० ॥

**सुबोधिनी—**स्वेति-सा भैमी आल्या सख्या करणेन रसादेव प्रीतेरेव तं नलमवृत अवृणुत । कीदृशं नलम् ? उपस्थितं समीपे तिष्ठन्तम् । कस्मिन् सति ? बाल्याद् बाल्यादारभ्य बाला नवयौवना तस्या भावस्तस्माद् । बाल्याद्धेतोर्वा वपुषि ससादे सति । कीदृशी सा ? देवाल्या देवपङ्क्त्या अर्थितापि याचितापि । एवं स्वदृष्ट्या स्वरिरंसादा इव स्वस्य रिरंसा रन्तुमिच्छा तां ददाति स्वक्रीडाप्रदा इव । कीदृश्या दृष्ट्या ? आल्याकुलया भ्रमर इव चञ्चलया ॥ ५० ॥

**अनुवाद—**कातर स्वभाव के कारण संतप्त शरीर वाली, सखी के इशारे से नल को देखकर, देवसमूह के द्वारा चाही गई भी उस दमयंती ने चंचल दृष्टि से अपनी रिरंसा देती हुई सी स्नेह-वश पास में उपस्थित नल का वरण कर लिया ॥ ५० ॥

**[१]सत्सदसो माननया रुद्रसमो य: स्वतेजसोमा न न या ।**
**प्रवृत: सोमाननया नलो बभौ भुवि गुणेन सोऽमाननया ॥ ५१ ॥**

**अन्वय:—**य: सत्सदसो माननया रुद्रसम: भुवि गुणेन अमान् स: नल: या स्वतेजसा उमा न (इति) न, अनया सोमाननया प्रवृत: बभौ ॥ ५१ ॥

**अन्वयदीपिका—**सत्सदेति-स नल: बभौ शुशुभे । कथं भूत: स: ? अनया दमयन्त्या प्रवृत: पतित्वेन स्वीकृत: । स: क: ? यो नल: सत्सदस: माननया रुद्रसम: सतां सद: सत्सद: तस्य सत्सदस: सत्सभया माननया मान्यया रुद्रसम: महादेवतुल्य: । अनया कया ? या स्वतेजसा पातिव्रत्यधर्मेण उमा न इति न किन्तूमैव पार्वत्येव । कथं भूतयाऽनया ? सोमाननया चन्द्रवदनया । कथं भूत: स: ? गुणेन दानदाक्षिण्यशौर्यौ-

१. स्वच्छहस इति 'ज' पुस्तके पाठः ।

दार्यादिना भुवि पृथिव्याम् अमान् । मातीति मान् न मान् अमान् । पृथिव्या अधिक-गुण इत्यर्थः ॥ ५१ ॥

**यमकबोधिनी**—सत्सदस इति-सोमाननया चन्द्रमुख्यानया दमयन्त्या प्रवृतः प्रकर्षेण कण्ठदेशे वरणमालाया न्यासेन धृतः स नलः भुवि स्वयंवरभूमौ बभौ रेजे । केन कारणेन ? गुणेन सत्त्वसौन्दर्यादिना । सः कः ? यो नलः सत्सदसः साधुसभायाः माननाय पूजनेन रुद्रसमः शिवसमानः । यथा सत्सदसि रुद्रो मान्यते तथा सोऽपीति तेन तुल्यार्थोपमा । या दमयन्ती स्वतेजसा आत्मकान्त्या उमा गौरी न इति न किन्तु उमैव । उमासदृशीत्यर्थः । तेजः प्रभावे बले दीप्तौ शुक्रेऽपीति अमरः । कीदृशी दमयन्ती ? माने देवब्राह्मणादिपूजायां नयो नीतिर्यस्याः सा तथा । अमाननया अमानाय अगर्वाय नयो नीतिर्यस्याः सा नीति-युक्ता गर्वरहितेत्यर्थः । यद्वा अमानोऽपरिमाणो नयो यस्याः सा तथा । परिमाणे च पूजायां वाहङ्करणेऽपि चेति कोषान्तरः । गौरीमहेश्वरशब्दयोस्तयोर्युक्तो विवाह इत्यभिप्रायः । सदः शब्दः स्त्रीनपुंसकयोः । क्वचित् स्वहस्ते सोमाननयेति पाठः ॥ ५१ ॥

**दीपिका**—स्वच्छहस इति—तया सोमाननया चन्द्राननया प्रवृतः पतित्वेनाङ्गीकृतः सः नलः भुवि गुणेन राजलक्षणेन बभौ रराज । किम्भूतो नलः ? स्वच्छहसः निर्मलहासः । सः कः ? यो माननया मान्यतया रुद्रसमः शिवतुल्यः । सा का ? या स्वतेजसा उमा न इति न किन्तु उमैव । किम्भूता ? या अमाननया अमानः अपरिमितः नयः नीतिमार्गो यस्याः सा ॥ ५१ ॥

**सुबोधिनी**—सदिति-स नलो बभौ शुशुभे । कीदृशः ? अनया सोमाननया स्वीकृतः । सः कः ? यः सत्सदसः सतां देवानां साधूनां वा यत्सदः सभा तस्याः या मानना तया रुद्रसमः शिवसदृशः रुद्रांशत्वात् । अनया कया ? या स्वतेजसा पातिव्रत्येन उमा नेति न किन्तूमैव । एतेन शिवपार्वतीयोगोऽपि वर्णितः । कीदृशो नलः ? गुणेन शौर्यादिना भुवि पृथिव्याम् अमान् । अधिकगुण इत्यर्थः ॥ ५१ ॥

**अनुवाद**—जो सज्जनों की सभाओं की मान्यता से पृथ्वी में शिव के समान दान शौर्य आदि अपरिमित गुणों वाला था वह नल, जो अपने पतिव्रत धर्म के कारण पार्वती के समान थी, ऐसी चंद्रमुखी दमयंती के द्वारा वरण कर लेने से सुशोभित हुआ ॥५१ ॥

**मददम्भावरमस्यज् ज्ञात्वाऽथ मनो गुरुप्रभावरमस्य ।**
**सुर[१] वृषभा वरमस्य प्रदिश्य जग्मुर्गतप्रभावरमस्य[२] ॥ ५२ ॥**

**अन्वयः**—अथ सुरवृषभाः गुरुप्रभावरमस्य गतप्रभावरमस्य अस्य मनः अरं मददम्भौ अस्यत् ज्ञात्वा वरं प्रदिश्य जग्मुः ॥ ५२ ॥

१. गुरु प्रभावरमस्य इति 'ग' 'घ' 'ञ' पुस्तकेषु
२. श्लोकोऽयं ख पुस्तके त्रिपञ्चाशत्तमः । स चात्र द्विपञ्चाशत्तम इति पुस्तकेऽस्मिन् क्रमभङ्गः ।

**अन्वयदीपिका**—मददमिति-अथेत्यनन्तरं सुरवृषभाः सुरश्रेष्ठा इन्द्रादयः अस्य नलस्य वरं मनोरथं प्रदिश्य दत्वा जग्मुः ययुः । अस्य नलस्य मनः चित्तम् । किम्भूतं मनः ? अरम् अत्यर्थं मददम्भौ अस्यत् अत्यजत् । असु क्षेपणेऽस्य धातोः प्रयोगः । मदश्च दम्भश्च मददम्भौ । किम्भूतस्य अस्य ? गुरुप्रभावरमस्य प्रभावश्च मा च प्रभावरमे । गुर्व्यौ प्रभावरमे यस्य स गुरुप्रभावरमः तस्य गुरुप्रभावरमस्य । उत्कृष्टसामर्थ्यलक्ष्मीकस्येत्यर्थः । पुनः किम्भूतस्य अस्य ? गतप्रभावरमस्य गतः नष्टः प्रभायाः कान्तेः अवरम् अशोभनत्वं यस्मात् स गतप्रभावरमः तस्य गतप्रभावरमस्य । अतिशयितकान्तेरित्यर्थः ॥ ५२ ॥

**यमकबोधिनी**—मदेति-अथानन्तरं सुरवृषभाः देवश्रेष्ठाः शक्रादयोऽस्य नलस्य वरमभीष्टफलं प्रदिश्य प्रतिपाद्य जग्मुः स्वधाम्नि इति शेषः । कीदृशाः सुरवृषभाः ? गतप्रभाः भग्नमनोरथत्वाद् गतदीप्तयः । ननु मनोरथसिद्धये कथं न दम्भप्रपञ्चः कृत इति चेत् तत्राह-किं कृत्वा ? मददम्भावरमस्यत् ज्ञात्वा मदश्च दम्भश्च अवरश्च मददम्भावरं कामोद्रेकः तद्द्वन्द्वे एकवद्भावः । मददम्भादयोर्महद्भिर्निरस्या इति ज्ञात्वा विचार्य जग्मुरित्यर्थः । ननु गच्छन्तु नाम देवाः वरदानं तु किमर्थमिति चेत् तत्राह-कीदृशस्यास्य ? मनो गुरुप्रभावरमस्य मनसा यो गुरुः लघुश्चासौ (?) प्रभावः तेजो धैर्यलक्षणं तत्र रमते इति तथा तस्य नलस्यातिधीरत्वाद्युक्तं वरदानमित्यभिप्रायः । पुनः कीदृशस्यास्य ? वरमस्य वरा श्रेष्ठा मा लक्ष्मीर्यस्य स वरमः तस्य श्रेष्ठलक्ष्मीकस्य । यद्वा वरस्य वैवाह्यस्य मा शोभा यस्य स तथा । मददम्भावरमस्यत् ज्ञात्वेति पाठे[१] सुरवृषभाः अस्य नलस्य मनश्चित्तं ज्ञात्वा जग्मुः । किं लक्षणं मनः ? अरम् अत्यर्थं मददम्भौ अस्यत् क्षिपत् । किं लक्षणस्य अस्य ? गुरुप्रभावरमस्य गुरुप्रभावरमा लक्ष्मीर्यस्य स तथा तस्येति योजना । गतप्रभावरमस्यत् इत्यकेमेव वा पदं नलविशेषणम् । गतः प्रभायाः अवरमः उपरमो यस्मात् स तथा तस्य गतकीर्त्युपरमस्य प्रभायुक्तस्येत्यर्थः ॥ ५२ ॥

**दीपिका**—मददम्भाविति-अथ सुरवृषभाः सुरश्रेष्ठाः इन्द्रादयः वरमभीष्टं प्रदिश्य दत्त्वा जग्मुः ययुः । किं कृत्वा ? अस्य नलस्य मनः चित्तं ज्ञात्वा विज्ञाय । किम्भूतं मनः ? अरमस्यदित्यर्थे मददम्भौ अस्य क्षिपन् । किम्भूतस्यास्य ? गुरुप्रभावरमस्य अधिकप्रतापसम्पत्तेः । पुनः किम्भूतस्यास्य ? वरमस्य वरा उत्कृष्टा मा शोभा यस्य । किम्भूताः सुरवृषभाः ? गतप्रभाः हतकान्तयः ॥ ५२ ॥

**सुबोधिनी**—मदेति-अथ सुरवृषभाः देवश्रेष्ठाः इन्द्रादयोऽस्य नलस्य वरं प्रदिश्य दत्वा जग्मुर्ययुः । वरदाने हेतुमाह-अस्य नलस्य मनश्चित्तं मददम्भौ मदश्च दम्भश्च तौ अरं झटिति अस्यत् त्यजत् ज्ञात्वा । कीदृशस्य अस्य ? गुरुप्रभावरमस्य प्रभावश्च रमा च प्रभावरमे गुर्व्यौ प्रभावरमे यस्य तस्य । यद्वा गुर्वी प्रभावेण रमा लक्ष्मीर्यस्य । एवं

---

१. किन्तु अत्रापि तथैव पाठः

गतप्रभावरमस्य। गतः नष्टः प्रभायाः कान्तेरवरमोऽशोभनं यस्मात् सः तस्यातिशयितकान्तेरित्यर्थः ॥ ५२ ॥

**अनुवाद**—इसके बाद देवश्रेष्ठ इन्द्र आदि महान् प्रभाव और लक्ष्मी से युक्त, जिसके कान्ति की अशोभा नष्ट हो चुकी थी अर्थात् अति यशस्वी उस नल के मन को मद और दम्भ से विहीन जानकर उसे वर देकर चले गये ॥ ५२ ॥

**[१] गुरुमहिमा परमायास्तम्भी[२] नल एष वसतिमाप रमायाः।**

**प्रिययाऽमाऽऽप रमायाः स्वपुरमगुर्यत्र तं क्षमापरमाऽऽयाः ॥ ५३ ॥**

**अन्वयः**—यत्र क्षमापरं तम् आयाः अगुः (तत्) परमायाः रमायाः वसतिं स्वपुरम् एष परमायास्तम्भी गुरुमहिमा नलः प्रियया अमा आप ॥ ५३ ॥

**अन्वयदीपिका**—गुरुमहीति-एषः नलः प्रियया अमा दमयन्त्या सह तत् स्वपुरम् आप प्राप। अमेत्यव्ययं सहो भावः। गुरुमहिमा गुरुः महिमा यस्य स गुरुमहिमा। पुनः कथं भूतः एषः? परमायास्तम्भी परेषां माया परमाया परमायास्तम्भितुं शीलं यस्यासौ परमायास्तम्भी। शत्रुकपटनाशकः। किम्भूतं स्वपुरम्? रमायाः लक्ष्म्याः वसतिं स्थानम्। कथं भूताया रमायाः? परमायाः उत्कृष्टायाः। कथं भूतं तं नलम्? क्षमापरं क्षमायाः परः तं सहिष्णुमित्यर्थः ॥ ५३ ॥

**यमकबोधिनी**—गुर्विति-केवलं सुरवृषभा एव न जग्मुः किन्तु एष नलः प्रियया दमयन्त्या अमा सार्द्धं स्वपुरम् आर प्राप। निजनगरं प्राप। किं लक्षणो नलः? गुरुमहिमा गुरुरधिको गुरोः बृहस्पतेरिव महिमा प्रभावो यस्य स तथा। किं लक्षणं स्वपुरम्? परमायास्तम्भी परेषां शत्रूणां मायास्तम्भयितुं शीलमस्यास्तीति तथा तत्। दुर्गाश्रयत्वात्तस्य अव्याकुलत्वं ध्वनितम्। पुनः किं लक्षणम्? परमायाः श्रियो वसतिं गृहम्। वसती रात्रिवेश्मनोरित्यमरः। यत्र पुरे क्षमापरं क्षान्तिनिष्ठं नलम् आयाः लाभाः अगुः जग्मुः प्रापुरित्यर्थः। भैमीं परिणीय पुरं प्राप्तं नलं श्रुत्वा बहुधनोपायनजनागमनादायप्राप्तिरित्यभिप्रायः ॥ ५३ ॥

**दीपिका**—गुरुमहिमेति-एष नलः प्रियया अमा सार्द्धं पुरं स्वनगरीम् आप प्राप। यत्र यस्यां पुर्यां तं नलं क्षमापरमायाः भूसमुत्पन्नपरमलाभाः अगुः प्रापुः। क्षमापरमिति भिन्नपदं शान्तिपरमित्यर्थः। किम्भूतो नलः? परमायास्तम्भी अन्यकपटनिरसनः। किम्भूतं स्वपुरम्? परमायाः उत्कृष्टायाः रमायाः लक्ष्म्याः वसतिं निवासस्थानम् ॥ ५३ ॥

---

१. पृथु महिमा इति ञ पुस्तके पाठः

२. स्तम्भि च नल इति ग घ पुस्तकयोः किन्तु व्याख्यायामत्रापि स्तम्भीत्येव पाठः स्वीकृतः। 'ञ' पुस्तकेऽपि तथैव।

**सुबोधिनी**—गुर्विति-एष नलः प्रियया भैम्या सह तत् स्वपुरं भीमनगरम्[१] आप प्राप। स्यादमा सन्निधानार्थे सहार्थे इति हेमचन्द्रः। कीदृशः? गुरुमहिमा महतो भावः महिमा। गुरुर्महिमा यस्य सः। परमायास्तम्भी परेषां शत्रूणां या माया तस्याः स्तम्भी रिपुकपटनाशक इत्यर्थः। कीदृशं स्वपुरम्? परमाया रमाया उत्कृष्टाया रमायाः लक्ष्म्याः वसतिं स्थानम्। तत्किम्? यत्र पुरे आयाः धनागमनानि क्षमापरं सहिष्णुताशीलं तं नलमगुः प्रापुः॥ ५३॥

**अनुवाद**—जहाँ क्षमाशील उस (नल) को संपत्तियाँ प्राप्त हुईं, उस परम लक्ष्मी के निवासस्थल अपने नगर को महान् महिमाशाली तथा शत्रुओं के छल आदि के विनाशक इस नल ने प्रिया के साथ प्राप्त किया॥ ५३॥

**शशिना समहासमहा नगरे जनता समहा समहास्त मुदम्।**
**[२] अतिभासुरया सुरया व्यहरद् व्यतनोत् सुरया सुरयागमपि॥**

**अन्वयः**—शशिना समहासमहा समहा जनता नगरे मुदं समहास्त। अतिभासुरया सुरया व्यहरत् सुरया सुरयागमपि व्यनोत्॥ ५४॥

**अन्वयदीपिका**—शशिनेति-जनता जनानां समूहः। नगरे नलस्य पुरे मुदं हर्षं समहास्त। ओहाङ्गतावित्यस्य धातोः प्रयोगः। ये गत्यर्थास्ते ज्ञानार्थाः प्राप्त्यर्थाश्च। किम्भूता जनता? शशिना समहासमहा हासश्च महश्च हासमहौ समौ हासमहौ यस्याः सा समहासमहा। चन्द्रेण समस्मितहासमहोत्सवा। पुनः किम्? समहा महेन उत्सवेन सह वर्तमाना समहा समहोत्सवा इत्यर्थः। पुनः किम्भूता जनता? सुरया मदिरया व्यहरत् चिक्रीड। सुरयागमपि देवतार्चनमपि व्यनोत् अकरोत्। किम्भूतया सुरया स्वच्छया निर्मलया। पुनः किम्भूतया? सुरया शोभनया॥ ५४॥

**॥इति श्रीनृसिंहाश्रमविरचितायां नलोदयटीकायाम् अन्वयदीपिकायां प्रथम उल्लासः॥**

**यमकबोधिनी**—शशिनेति-जनताजनसमूहः नगरे निषधायां नलपुरे मुदं हर्षं समहास्त सम्प्राप्तवतीत्यन्वयः। समहास्तेति ओहाङ्गताविति धातोर्लुङि आत्मनेपदप्रथमपुरुषैकवचनम्। किं लक्षणा जनता? शशिना चन्द्रेण समस्तुल्यो हासमहो यस्याः सा समानहास्यतेजाः। पुनः किं लक्षणा? समहा महेनोत्सवेन सह वर्तमाना। अत्र अकारान्तो महशब्दः। अपि पुनः सुरया मदिरया व्यहरत् रेमे। किं लक्षणया सुरया? भासुरया दीप्त्या। अपि पुनः जनता सुरयागमपि व्यतनोत् देवयागं विस्तारयामास। किं लक्षणा जनता? सुरया सुष्ठु रयो वेगो यस्याः सा तथा। तोटकवृत्तमिदम्।

---

१. विद्यावती—स्वपुरमित्यस्य नलपुरमित्येवार्थः। न तु भीमपुरम् अप्रसङ्गात्। छ पुस्तके तु स्वपुरं स्वनगरमित्येव पाठो लभ्यते।

२. अपि इति ग घ ङ ञ पुस्तकेषु।

सतृतीयकषट्कमनन्तरते नवमं विरतिप्रभवं गुरु चेत् । घनपीनपयोधरभारनुते ननु तोटकवृत्तमिदं कथितम् ॥ ५४ ॥

**इति राम ऋषिर्दक्षो यथाबुद्धि बुधानुगः ।**

**नलोदयादिमाश्वासं व्याकरोत् करुणाकरः ॥ १ ॥**

**॥इति श्रीमद्रामऋषिविरचितायां यमकबोधिन्यां रविदेवविरचितमहाकाव्यनलोदयटीकायां दमयन्तीस्वयंवरो नाम प्रथम आश्वासः ॥**

**दीपिका**—शशिनेति-जनता जनसमूहः शशिना समहासमहा-नगरे शशिना चन्द्रेण समः तुल्यः हासो यस्य तत् शशिना समहासम् । हासं च तन्नगरं च तस्मिन् मुदं प्रीतिं समहास्त प्राप । अतिभासुरया दीप्त्या मा व्यहरत् विललास । सुरयागमपि देवनिमित्तपशुहिंसादिकमपि व्यतनोत् विस्तारयामास । किम्भूता जनता ? समहा सोत्सवा । पुनः किम्भूता जनता ? सुरया परमवेगयुक्ता ॥ ५४ ॥

**॥ इति श्रीमदात्रेयगोविन्दभट्टविरचितायां नलोदयदीपिकायां प्रथम आश्वासः ॥**

**सुबोधिनी**—शशिनेति-जनता जनसमूहः नगरे नलपुरे मुदं हर्षं समहास्त प्राप । ओहाङ्गताविव्यस्य धातोः प्रयोगः यो गत्यर्थास्ते प्राप्त्यर्थाः ज्ञानार्थाश्च । किम्भूता जनता ? शशिना चन्द्रेण समहासमहा । समं हास्यमहस्तेजो यस्याः सा । महश्चोत्सवतेजसोरित्यमरः । एवं समहा उत्सवेन सह वर्तमाना समहा । सुरया शोभनो रयः शब्दो यस्याः सा सुरया । पुनः जनतैव सुरया मदिरया व्याहरच्चिक्रीड । सुरयागमपि देवार्चनमपि व्यतनोदकरोत् । कीदृश्या सुरया ? स्वच्छया ? ॥ ५४ ॥

**॥ इति श्रीनलोदयटीकायां सुबोधिन्यां प्रथम उच्छ्वासः ॥**

**अनुवाद**—चंद्रमा की कान्ति के सदृश धवल हास से युक्त तथा उत्सव मनाती हुई जनता ने नगर में हर्ष प्राप्त किया । उसने सुन्दर शब्द करते हुए देवयागों का आयोजन किया और मदिरापान किया ॥ ५४ ॥

# द्वितीय उल्लासः

**अथ रतिरेकान्तेन प्रापि नलेनाऽत्र मन्दिरे कान्तेन।**

**तां पुनरेकान्तेन प्राप्तवता रिपुमदातिरेकान्तेन॥ १॥**

**अन्वयः**—अथ रिपुमदातिरेकान्तेन तां पुनः एकां प्राप्तवता कान्तेन तेन नलेन अत्र मन्दिरे एकान्तेन रतिः प्रापि॥ १॥

**अन्वयदीपिका**—अथेति—अथेत्यनन्तरं तेन कमनीयेन नलेन अत्र मन्दिरे स्वभवने रतिः क्रीडा। एकान्तेन अतिशयेन। किम्भूतेन नलेन? एकां महीं पुनः तां दमयन्तीं प्राप्तवता प्राप्तेन। पुनः किम्भूतेन नलेन? रिपुमदातिरेकान्तेन रिपूणां मदः रिपुमदः। रिपुमदस्य अतिरेकः आधिक्यम् अतिशयः। रिपुमदस्य अन्तः नाशकरः रिपुमदातिरेकान्तः तेन सम्पन्नाभिमानपक्षच्छेदकरेण॥ १॥

**यमकबोधिनी**—अथास्य नलस्य नवोढया भैम्या सह विहारवर्णनाय वसन्तं वर्णयिष्यन्नेकान्तक्रीडामाह। अथेति—अथानन्तरं पुनर्भूयः अत्र मन्दिरे अस्मिन् स्वे पुरे नलेन एकान्तेन रहसि अतिशयेन वा एकान्तेन रहसि रतिः क्रीडा प्रापि प्राप्तेत्यन्वयः। तीव्रैकान्तनितान्तानि गाढवाढदृढानि चेत्यमरः। किं लक्षणेन नलेन? कान्तेन सुन्दरेण। यद्वा अकारविश्लेषः। किं लक्षणेन? अकान्तेन नान्या कान्ता यस्य स तथा तेन। पुनः किं लक्षणेन? एकां मुख्यां तां दमयन्तीं प्राप्तवता लब्धवता। एकमुख्यान्यकेवल इत्यमरः। पुनः किं विशिष्टेन? रिपुमदातिरेकान्तेन रिपूणां मदस्य गर्वस्य हर्षस्य वा योऽतिरेक उद्रेकस्तस्य अन्तोऽवसानं नाशो वा यस्मात् स तथा तेन। हर्षप्रमोदामोदसम्मदा इत्यमरः। अन्तोऽस्त्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके इति वैजयन्ती॥ १॥

**दीपिका**—अथेदानीं द्वितीयमाश्वासमारभ्यते। अथेति—अथानन्तरं तेन नलेन अत्र नगरे मन्दिरे हर्म्ये रतिः विलासः प्रापि अन्वभावि। किम्भूतेन तेन? एकान्तेन तीव्रेण। तीव्रैकान्तनितान्तानीत्यमरः। पुनः किम्भूतेन तेन? कान्तेन मनोहरेण। पुनः किम्भूतेन तेन? तां प्रसिद्धाम् एकां मुख्यां दमयन्तीं प्राप्तवता लब्धवता। पुनः किम्भूतेन तेन? रिपुमदातिरेकान्तेन शत्रुगर्वाधिक्यनाशकेन॥ १॥

**सुबोधिनी**—अथेति—अथानन्तरं कान्तेन कमनीयेन। एवं तां भैमीं पुनरेकां महीं च प्राप्तवता। एवं रिपुमदातिरेकान्तेन रिपूणां शत्रूणां मदो गर्वस्तस्यातिरेक आधिक्यं तस्यान्तेन

नाशकेन तेन नलेनातिशयेनामुत्र मन्दिरे रतिः क्रीडा प्रापि प्राप्ता । यद्वा एकान्तेनामुत्र मन्दिरे रतिः क्रीडा न प्रापीति किन्तु प्राप्तैव । काक्वर्थे नञ् ॥ १ ॥

**अनुवाद**—शत्रुओं के दर्पविनाशक (पृथ्वी का भोग कर रहे किन्तु) पुनः एक (इस दमयंती) को प्राप्त करने वाले कमनीय उस नल ने इस भवन में अतिशय रति प्राप्त की ॥ १ ॥

**बभौ स सारसागरश्चकास सा रसार्द्रधीः ।**

**मधुः ससारसारवस्तदाऽऽससार सार्तवः ॥ २ ॥**

**अन्वयः**—सारसागरः सः बभौ । रसार्द्रधीः सा (च) चकास । तदा ससारसारवः सार्तवः मधुः आससार ॥ २ ॥

**अन्वयदीपिका**—बभाविति—सः नलः बभौ शुशुभे । सा दमयन्ती चकास शुशुभे दिदीप । तदा तस्मिन् समये मधुः वसन्तः आससार आजगाम । किम्भूतः सः ? सारसागरः बलोदधिः । सारो बले दृढांशे चेत्यमरः । किम्भूता सा ? रसेन प्रेम्णा आर्द्रा धीः बुद्धिर्यस्याः सा रसार्द्रधीः प्रेमरसकोमलबुद्धिः । किम्भूतो मधुः ? ससारसारवः सारसानां पक्षिणाम् आरवः शब्दः सारसारवः । सारसारवेण सह वर्तमानः ससारसारवः पक्षिविशेषशब्देन सहितः । पुनः किम्भूतः मधुः ? सार्तवः । ऋतौ भवानि आर्तवानि । आर्तवैः सह वर्तमानः सार्तवः । पुष्पफलादिभिर्युक्तः इत्यर्थः ॥ २ ॥

**यमकबोधिनी**—बभाविति—स नलो बभौ अचकासत् । कीदृशः ? सारसागरः द्रव्यसागरः समुद्रः । यद्वा सारस्य बलस्य सागरः अतिबलवत्वादस्य सुरतकल्पत्वेन कामिनीप्रियत्वं ध्वनितम् । सा भैमी चकास अद्युतत् । कीदृशी ? रसार्द्रधीः रसेन शृङ्गारादिना वा रागेण आर्द्रा सुकुमारा स्निग्धा धीर्यस्याः सा तथा । अस्याः सानुरागतया अनुकूलनायकत्वं ध्वनितम् । तदा रहःक्रीडाप्राप्त्यनन्तरावसरे मधुर्वसन्तः आससार आसरत् । क्रमेण आजगाम । कीदृशः स मधुः ? ससारसारवः सारसाः पुष्कराह्वास्तेषाम् आरवेण सह वर्तमानः । सारसध्वनिसंयुक्तः । यद्वा सारसः सरसि भवः आरवः पक्षिजनतो ध्वनितः । तेन सह वर्तमानः । पुनः कीदृशः सः ? सार्तवः आर्तवानि ऋतूचितानि पुष्पाणि । तैः सह वर्तमानः । अस्मिन्नाश्वासे वसन्तवर्णनं बोद्धव्यम् । नगस्वरूपिणी वृत्तम् । तल्लक्षणम् द्वितुर्यषष्ठमष्टमं गुरुप्रयोजितं यदा, तदा निवेदयन्ति तां बुधा नगस्वरूपिणीम् ॥ २ ॥

**दीपिका**—बभाविति—सारसागरः बलसमुद्रः स नलः बभौ बभासे । रसार्द्रधीः कामरसद्रवीभूता प्रज्ञा । किम्भूतो मधुः ? ससारसारवः सारसशब्दसहितः । पुनः किम्भूतो मधुः ? सार्तवः ऋतूद्भवकुसुमसहितः[१] ॥ २ ॥

---

१. विद्यावती—नहि टीकेयं पूर्णतया लिखितेति लेखकप्रमाद एव कल्प्यते । अव्याख्यातानि कानिचित् पदानि सन्ति-तदा तस्मिन् काले नलदमयन्त्योः समागमकाले इत्यर्थः । मधुः वसन्तः आससार

**सुबोधिनी**—बभाविति—स नलो बभौ शुशुभे । सारो बले स्थिरांशे चेत्यमरः । एवं रसार्द्रधीः रसेन प्रेम्णा आर्द्रा रसकोमला धीर्बुद्धिर्यस्याः सा दमयन्ती शुशुभे । तदा तस्मिन्नवसरे मधुः वसन्तः ससार आजगाम । मधुश्चैत्रर्तुदैत्येष्विति हेमचन्द्रः । कीदृशो मधुः ? ससारसारवः सारसानाम् आरवः शब्दस्तेन सहितः । पुनः कीदृक् ? सार्तवः ऋतौ भवम् आर्तवं पुष्पादि तत्सहितः । सृ गतौ इत्यस्य लिटि ससारेति ॥ २ ॥

**अनुवाद**—शक्ति का समुद्र वह (नल) सुशोभित हुआ । प्रेम से कोमलबुद्धि वाली वह दमयन्ती भी सुशोभित हुई । उस समय सारस पक्षियों के शब्दों तथा उस ऋतु में उत्पन्न पुष्प फल आदि के साथ वसंत आ गया ॥ २ ॥

**समुदधिताऽऽशालीनां करेण कणिशाग्ररुचिजिता शालीनाम् ।**
**दिनभर्ता शालीनामिव नलिनीमथ समुत्थिताऽऽशाऽलीनाम् ॥ ३ ॥**

**अन्वयः**—दिनभर्ता शालीनां कणिशाग्ररुचिजिता करेण आशालीनां नलिनीं शालीनाम् इव समुदधित । अथ अलीनाम् आशा समुत्थिता ॥ ३ ॥

**अन्वयदीपिका**—समुदधीति- दिनभर्ता सूर्यः करेण किरणेन नलिनीं समुदधित विकासयामास समुद्बोधयत् । अथ पश्चात् अलीनाम् आशा समुत्थिता । भ्रमराणाम् इच्छा उदिता जाता । किम्भूतेन करेण ? शालीनां ब्रीहीणां कणिशाग्ररुचिजिता कणिशाग्ररुचिं जयतीति कणिशाग्ररुचिजित् तेन कणिशाग्ररुचिजिता । ब्रीहिमञ्जर्यग्रकान्तिजितेत्यर्थः । किम्भूतां नलिनीम् ? आशालीनां दिग्व्याप्ताम् । आशासु लीना आशालीना ताम् आशालीनाम् दिक्षुव्याप्तामित्यर्थः । उत्प्रेक्षते । शालीनामिव लज्जितामिव । यथा कश्चित् पुमान् करेण काञ्चित् कामिनीं गृह्णाति । सा यथा लज्जिता भवति तथैवेत्यर्थः ॥ ३ ॥

**यमकबोधिनी**—स इति—दिनभर्ता सूर्यः करेण रश्मिना नलिनीं पद्मिनीं समुदधित समुत्थापितवान् विकाशितवानित्यर्थः । कीदृशीं नलिनीम् ? आशालीनां दिक्प्रसुप्ताम् । कीदृशेन करेण ? शालीनां कणिशाग्ररुचिजिता करेण शालीनां ब्रीहिविशेषाणां कणिशस्य धान्यमञ्जर्याः अग्रशिखरस्य रुचिं शोभां जयतीति कणिशाग्ररुचिजित् तेन । तथाग्रं शिखरमित्याहुरपि शृङ्गे च तन्मतम् इति धरणिः । कीदृशीमिव नलिनीम् ? शालीनामिव लज्जितामिव । अन्योऽपि भर्ता लज्जितां दिक्संल्लीनां स्त्रियं करेण समुत्थापयति । अथ पद्मिनीविकाशानन्तरम् अलीनां षट्पदानाम् आशा मकरन्दग्रहणेच्छा समुत्थिता उत्पन्ना । स्यादधृष्टे तु शालीन इत्यमरः । क्वचित् कणिकाग्ररुचिजितेति पाठः ॥ ३ ॥

**दीपिका**—समुदधितेति—दिनभर्ता सूर्यः करेण किरणेन नलिनीं कमलिनीं समुदधित व्यकाशयत् । किम्भूतां नलिनीम् ? आशालीनाम् उदयाशया रात्रौ चन्द्रकरस्य स्पर्शात्

---

आजगाम । अथवा टीकाकृताऽव्याख्यातमेतत् ।

निलीनाम् । किम्भूतेन करेण ? शालीनां सस्यानां कणिशाग्ररुचिजिता मञ्जर्यग्रकान्तिजिता । कामिव ? शालीनामिव सलज्जितामिव । अथानन्तरम् अलीनां भ्रमराणाम् आशा मकरन्दाशा समुत्थिता उत्पन्ना ॥ ३ ॥

**सुबोधिनी**—समुदधीति—दिनभर्ता सूर्यः करेण किरणेन नलिनीं समुदधित समुत्थापितवान् विकाशयामासेति यावत् । अथानन्तरम् आलीनां भ्रमराणाम् आशा इच्छा समुत्थिता समुदिता । कीदृशेन करेण ? शालीनां धान्यानां कणिशाग्ररुचिजिता कणिशाग्रस्य या रुक् तां जयति तत् तेन । ब्रीहिमञ्जर्यग्रकान्तिजिता । कणिशं सस्यमञ्जरीत्यमरः । कीदृशीं नलिनीम् ? आशालीनां चन्द्रकरस्पर्शात् आशासु दिक्षु लीनाम् । अदर्शनगताम् । कामिव ? शालीनामिव लज्जितामिव । अन्यापि परपुरुषकराकृष्टा लज्जिता भवति । परपुरुषभुक्तापि स्वामिना न त्यक्ता करेणोद्धृता । तत्र षिङ्गानाम् आशा भवतीति भावः । आलिः षिङ्गे च षट्पदे इति रन्तिः ॥ ३ ॥

**अनुवाद**—सूर्य ने अनाज की बालों के अग्रभाग की शोभा को जीतने वाले अपने हाथों (किरणों) से दिशाओं में लज्जित नायिका की भांति छिपी कमलिनी को जगाया । इससे भ्रमरों की (मकरंद पान की) आशा जगी ॥ ३ ॥

**कुरवाप च सारसकाकुरवान् कुरवाख्यनगोऽपि तथाङ्कुरवान् ।**
**कमलङ्कृतवद् गतपङ्कमलं कमलं न विलोभयितुं कमलम् ॥ ४ ॥**

**अन्वयः**—कुः सारसकाकुरवान् अवाप । तथा कुरवाख्यनगः अपि अङ्कुरवान् (जातः) । गतपङ्कमलम् अलङ्कृतवत् कं कमलं च कं विलोभयितुं न अलम् ॥ ४ ॥

**अन्वयदीपिका**—कुरिति—कुः पृथिवी सारसकाकुरवान् अवाप । सारसानां पक्षिविशेषाणां काकवश्च ते मनोहराश्च ते रवाश्च ते शब्दाश्च सारसकाकुरवाः तान् सारसकाकुरवान् । पक्षिविशेषमनोहरशब्दान् प्रापेत्यर्थः । तथा च कुरवाख्यनगोऽपि अङ्कुरवान् आस । कुरवकवृक्षोऽपि सपल्लवाङ्कुरवान् जातः । च परं कमलं पद्मं कं पुरुषं विलोभयितुं वशीकर्तुं न अलं न समर्थम् । अपितु सर्वमपि जनं विलोभयितुम् अलं समर्थम् । किम्भूतं कमलम् ? कं जलम् अलङ्कृतवत् अशोभयत् । किम्भूतं कम् ? गतपङ्कमलम् गतः पङ्क एव मलो यस्मात् । विगतपङ्कमलम् । कर्दमरहितमित्यर्थः ॥४ ॥

**यमकबोधिनी**—कुरिति—कुः पृथ्वी च सारसकाकुरवान् अवाप प्राप । चकारस्य पूर्वश्लोकेन सम्बन्धः । सारसानां पुष्कराणां काकुरवाः भिन्नकण्ठध्वनयस्तान् । भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते इति हलायुधः । तथा तद्वत् कुरवाख्यनगोऽपि कुरवकसंज्ञकवृक्षोऽपि बाणाख्यवृक्षोऽङ्कुरवान् । जात इति शेषः । कमलं वसन्तकालीनं सरोजं कं नरं विलोभयितुं न अलं समर्थं न ? अपितु अलमेव । कमलमिति जातावेकवचनम् । वसन्तकालीनानि कमलानि वीक्ष्य सर्वेऽपि नितरां लुब्धा भवन्तीत्यर्थः । कीदृशं कमलम् ? कं जलम् अलङ्कृतवत् भूषितवत् । येन जलं

भूषितमित्यर्थः । पुनः कीदृशम् ? गतपङ्कमलम् अपनीतकर्दममलम् । मलोऽस्त्री पापविट्-किट्टानि इत्यमरः । क्वचिदुत्तरपाठवैपरीत्यम् । यथा गतपङ्कमलं कमल-ङ्कृतवन्न विलोभयितुं कमलङ्कमलम् इति । तत्तु न युक्तम् आद्यन्तयमकत्वात् । यथा वरणाः प्रसूननिकरा वरणा मालिनां वहन्ति । पटली मलिनां तरवः सदाऽत्र शिखिजास्तरवः । सरसश्चातिनिकटे सरसः । तोटकवृत्तम् ॥ ४ ॥

**दीपिका**—कुरवापेति—कुः भूः सारसकाकुरवान् सारसाभिधपक्षिविशेषशब्दान् अवाप लेभे । च पुनः कुरवाख्यवृक्षोऽपि बाणवृक्षोऽपि अङ्कुरवान् । कं जलम् अलङ्कृतवत् भूषितवत् कमलं सरोजं कं पुमांसं विलोभयितुं मोहयितुं न अलं न समर्थम् ? किम्भूतं कम् ? गतपङ्कमलं निर्गतशादमलमित्यर्थः[1] ॥ ४ ॥

**सुबोधिनी**—कुरवापेति—तदा वसन्तसमये कुः पृथिवी सारसकाकुरवान् सारसानां काकवो मनोहराः ये रवाः शब्दाः तान् अवाप प्राप । कुरवाख्यनगोऽपि अङ्कुरवान् । जात इति शेषः । कमलं पङ्कजं कमलङ्कृतवान् अशोभयत् । एवं कं पुरुषं विलोभयितुं न अलम् ? अपितु सर्वानेव रञ्जयितुं समर्थम् । कीदृशं कम् ? गतपङ्कमलं गतः पङ्करूपो मलो यस्य तत् । कर्दमरहितमित्यर्थः ॥ ४ ॥

**अनुवाद**—पृथ्वी ने सारस पक्षियों की मनोहर ध्वनि को प्राप्त किया । कुरबक वृक्ष भी पल्लवित हो उठा । कीचड़ आदि से रहित जल और कमल किस पुरुष को आकर्षित करने में समर्थ नहीं थे ? ॥ ४ ॥

**अगुरतिमहिमानीतस्ततो रविमहांसि गुरुतमहिमानीतः ।**
**भवनं महि मानीतः स्मरेण परितः शराख्यमहिमानीतः ॥ ५ ॥**

**अन्वयः**—अतिमहिमानि रविमहांसि गुरुतमहिमानीतः इतस्ततः अगुः । स्मरेण परितः शराख्यम् अहिम् आनीतः मानी महि भवनम् इतः ॥ ५ ॥

**अन्वयदीपिका**—अगुरिति—रविमहांसि सवितृतेजांसि गुरुतमहिमानीतः सकाशात् इतस्ततः अगुः प्रासरन् । अतिशयेन गुरु इति गुरुतमा । गुरुतमा चासौ हिमानी च गुरुतमहि-मानी । गुरुतमहिमान्याः इति गुरुतमहिमानीतः । अतिशयितहिमात् इतस्ततः अगुः चेरुः बभ्रमुः । किम्भूतानि रविमहांसि ? अतिमहिमानि अतिमहिमा येषां तानि महाप्रभावाणि । मानी अभिमानी नलः भवनं गृहम् इतः प्राप्तः । इण् गतौ । ये गत्यर्थास्ते प्राप्त्यर्थाः । अपि च स्मरेण कामेन परितः सर्वत्र शराख्यम् अहिम् आनीतः गरलनामानं व्यालं सर्पम् प्रापित इत्यर्थः । किम्भूतं भवनम् ? महि महाः उत्सवाः यस्मिन् तत् महि । सोत्सवमित्यर्थः । कामः पञ्चशरः स्मरः इत्यमरः ॥ ५ ॥

**यमकबोधिनी**—अगुरिति—रविमहांसि इतः समीपे ततो दूरे चतुर्दिक्षु इत्यर्थः । अगुः गच्छन् व्याप्नुवन् इत्यन्वयः । रवेः सूर्यस्य महांसि तेजांसि रश्मयः इत्यर्थः । कीदृशानि ?

---

१. विद्यावती—शादो जम्बालशष्पयोरित्यमरः ।

गुरुतमहिमानीतः अतिमहिमानि गुरुतमा महत्तरा या हिमानी तुषारसमूहस्तस्याः । पञ्चम्यास्तस् । अतिप्रकृष्टो महिमा महत्त्वं येषां तानि तथा । महत्तरतुषारसमूहादपि अत्युज्जवलानीत्यर्थः । स्मरेण कामेन शराख्यम् उन्मादनादि बाणाभिधानम् अहिं सर्पम् आनीतः प्रापितो मानी अभिमानी अभिमानवान् जनः परितः समन्ततः प्रवासाद् भवनम् इतः प्राप्तः । कीदृशं भवनम् ? महि महस्तापनाशलक्षण उत्सवो यस्मिन्नस्ति इति तथा । स्मरशरप्रदाः कुवशगाः मानिनो जनाः तं निराकरणाय सर्वतो भवनानि प्राप्ता इत्यर्थः ॥ ५ ॥

**दीपिका—** अगुरिति—रविमहांसि सूर्यगभस्तयः गुरुतमहिमानीतः गरिष्ठहिमसमूहतः इतस्ततः यत्र कुत्रापि अगुः बभ्रमुः । किम्भूतानि रविमहांसि ? अतिमहिमानि शीत-निराकरणाल्लोकानां श्लाघ्यानि । स्मरेण कामेन मानी नलः परितः सर्वतः शराख्यम् अहिम् बाणाभिधमाशीविषम् आनीतः प्रापितः । किम्भूतो मानी ? महि सोत्सवं भवनं हर्म्यम् इतः प्राप्तः ॥ ५ ॥

**सुबोधिनी—**अगुरिति—रविमहांसि सूर्यतेजांसि गुरुतमहिमानीतः अतिगुरुर्गुरुतमा । गुरुतमा चासौ हिमानी च सा तथा । ततः पञ्चम्यास्तसिल् । इतस्ततः अगुः प्रासरन् । कीदृशानि रविमहांसि ? अतिमहिमानि अत्यन्तं महिमा येषां तानि महाप्रभावाणि । मानी अभिमानी स नलः महि मह उत्सवस्तद्युक्तभवनं प्रासादमितः प्राप्तः कीदृशः ? परितः समन्तात् स्मरेण कामेन शराख्यम् अहिं सर्पम् आनीतः प्रापितः । सर्पसदृश-स्वबाणगोचरीकृत इत्यर्थः । कामपीडया रश्मिप्रतापेन च बहिः स्थातुमशक्नुवन् गृहं गत इति भावः ॥ ५ ॥

**अनुवाद—**अत्यन्त महिमाशाली सूर्य का तेज शीतलता से निकल कर इधर उधर फैलने लगा । चारों ओर से कामदेव के बाण रूपी सर्पों से विद्ध वह अभिमानी (नल) उत्सवों से युक्त अपने भवन में पहुंचा ॥ ५ ॥

**स्मररसूचितया जगतः[१] क्षितिसूचितयाऽभवद्धि चम्पकमुकुलम्[२] ।**

**तदसूचि तया व्यथया निरसू चितया यया वियुग्दम्पतिकौ ॥ ६ ॥**

**अन्वयः—**तत् चम्पकमुकुलं हि स्मरसूचितया जगतः क्षितिसूचितया अभवत् । यया असूचि-तया चितया व्यथया वियुग्दम्पतिकौ निरसू (कृतौ) ॥ ६ ॥

**अन्वयदीपिका—**स्मरसूचितयेति—तत् चम्पकमुकुलं चम्पकपुष्पम् । हि इति निश्चितम् । स्मरसूचितया अभवत् । स्मरस्य सूचिः स्मरसूचिः । स्मरसूचेर्भावः स्मरसूचिता । तया कामविधया अभवत् जातम् । तत् किम् ? यत् चम्पकमुकुलं पुष्पं तया व्यथया असूचि । तया पीडया कथितम् । ज्ञापितमिति भावः । तया कया ? यया असूचितया

१. क्षितिसूचितयेति ग, घ,ङ, छ पुस्तकेषु

२. मुकुलः इति 'ग', 'घ'ञ पुस्तकेषुः ।

चितया व्यथया वियुग्दम्पतिकौ निरसू जातौ वियुजौ च तौ दम्पतिकौ च वियुग्दम्पतिकौ विरहितस्त्रीपुरुषौ। निरस्ताः निर्गताः असवः[१] ययोस्तौ निरसू गतप्राणौ अभूतां जातौ। किम्भूतया स्मरसूचितया? जगतः विश्वस्य क्षतिसूचितया। विश्वस्य हृदयविदारणे अतिशयेन योग्यतया ॥ ६ ॥

**यमकबोधिनी**—स्मरेति—चम्पकमुकुलः जगतः क्षितिसूचितया क्षयसूचकत्वेन अभवत्। जगतो भुवनस्य कामिलोकस्येति यावत्। क्षितेः क्षयस्य सूचिः सूचकस्तस्य भावस्तत्ता तया। क्षयवासावपि क्षितिः इत्यमरः। तत्र तृतीयान्तं हेतुमाह—कया? स्मरसूचितया स्मरस्य कामस्य सूचितुं शीलमस्यास्तीति स्मरसूचितस्तस्य भावस्तत्ता तया। भोः कमितारः युष्मन्नाशाय सपरिकरः स्मरः प्राप्त इति सूचकत्वेन जातमित्यर्थः। यथा कर्णेजपः शरारुमागच्छन्तं सूचयति तद्वदित्याशयः। क्षितिमेव दर्शयति। हि यतः यया व्यथया वियुक्तदम्पती निरसू गतप्राणौ। जाताविति शेषः। तया व्यथया वेदनया अन्येषामपि वियुक्तकामिनां तत् क्षितिसूचितम् असूचि इति योजना। चम्पकमुकुलः स्मरसूचितया अभवत्। स्मरस्य सूचिः अर्थात् बाणस्तत्तत्तया कामबाणत्वेनेत्यर्थः। कीदृश्या स्मरसूचितया? जगतः क्षितिव्रणेषु सुतराम् उचितया यया जगतः क्षितिः कर्तुं शक्यते इत्यर्थः अन्यत् समानमेत्र। ईषद्विकसितकलिका मुकुलः। कीदृश्या व्यथया? चितया विस्तृतया। अत्र वियुक्ताः सर्वेऽपि कामिनः म्रियन्ते इति ॥ ६ ॥

**दीपिका**—स्मरसूचितयेति—तच्चम्पकमुकुलं चम्पकस्य ईषद्विकसितं कुसुमं स्मरसूचितया कामलौहशलाकात्वेन अभवत् बभूव। किम्भूतया स्मरसूचितया? जगतः विश्वस्य क्षतिसूचितया क्षतिषु मारणेषु सुष्ठु उचितया। यथायोग्ययेत्यर्थः। तत् किम्? यत् तया व्यथया असूचि सूचितम्। तया कया? यया वियुग्दम्पतिकौ विरहितजायापती निरसू निष्प्राणौ। भवत इति शेषः। किम्भूतया तया? चितया चितातुल्यतया व्याप्तयेति ॥ ६ ॥

**सुबोधिनी**—स्मरेति—हि निश्चये। तच्चम्पकमुकुलं चम्पककुड्मलं स्मरसूचितया अनङ्गसूचेर्भावत्वेन जातम्। तत्किम्? यन्मुकुलं जगतः क्षितिसूचितया जगतः संसारस्य क्षितौ प्रहरे सुतराम् उचितया योग्यतया तया तज्जन्यया व्यथया असूचि ज्ञापितम्। तया कया? यया चितया वृद्धिं प्राप्तया व्यथया वियुग्दम्पतिकौ विरहितस्त्रीपुरुषौ निरसू गतप्राणौ कृतौ। स्वार्थे कः ॥ ६ ॥

**अनुवाद**—चम्पक की वह अधखिली कली कामदेव (के आगमन) की सूचना देने वाली होकर संसार के विदारण की सूचना देने वाली सी हो गई। बढ़ी हुई जिस अज्ञात पीड़ा ने विरही दंपतियों को प्राण रहित कर दिया ॥ ६ ॥

---

१. विद्यावती—असवः प्राणा इत्यर्थः

**विरलोच्चपलाशस्य प्रचुरं पुष्पं बभूव च पलाशस्य।**

**स्मरनीचपलाशस्य प्राश्याध्वगपिशितचारुचपलाशस्य ॥ ७ ॥**

**अन्वयः**—विरलोच्चपलाशस्य स्मरनीचपलाशस्य प्राश्याध्वगपिशितचारुचपलाशस्य च पलाशस्य प्रचुरं पुष्पं बभूव ॥ ७ ॥

**अन्वयदीपिका**—विरलोच्चेति—पलाशस्य वृक्षस्य प्रचुरं बहुलं पुष्पं बभूव। किम्भूतस्य पलाशस्य? विरलोच्चपलाशस्य विरलानि अप्रचुराणि उच्चपलाशपत्राणि यस्मिन् स विरलोच्चपलाशस्तस्य विरलोच्चपलाशस्य। किम्भूतं पुष्पम्? स्मरनीचपलाशस्य प्राश्याध्वगपिशितचारु पलं मासम् अश्नातीति पलाशः। नीचश्चासौ पलाशश्च नीचपलाशः स्मरश्चासौ नीचपलाशश्च स्मरनीचपलाशः। तस्य स्मरनीचपलाशस्य कामदुष्टराक्षसस्य। प्राश्याध्वगपिशितचारु। अध्वनि गच्छन्तीति अध्वगाः। अध्वगानां मार्गगामिनां पिशितं मासम्। प्राश्यं च तत् अध्वगपिशितं चारु मनोहरं चेति प्राश्याध्वगपिशितम्। प्राश्याध्वगपिशिते चारु यथा स्यात् तथा। चपला आशा यस्य सः प्राश्याध्वगपिशितचारुचपलाशः। तस्य प्राश्याध्वगपिशितचारुचपलाशस्य। चञ्चलस्येत्यर्थः। यद्वा व्याख्यान्तरम्। किम्भूतस्य स्मरनीचपलाशस्य? प्राश्याध्वगपिशिते चारु सुन्दरा चपला आशा यस्य सः प्राश्याध्यवगपिशितचारुचपलाशः। तस्य प्राश्याध्वगपिशितचारुपलाशस्य ॥ ७ ॥

**यमकबोधिनी**—विरलेति—केवलं कामिनः कामोद्रेकश्चम्पकमुकुलादेव नाभूत् किन्तु पलाशस्य किंशुकस्य प्रचुरम् अधिकं पुष्पं बभूव। पुष्पमिति जात्यभिप्रायमेकवचनम्। वसन्ते प्रभूतानि जातानीत्यर्थः। कीदृशस्य विरलोच्चपलाशस्य? ि-वरलानि उच्चानि उन्नतानि पलाशानि पत्राणि यस्य स तथा तस्य। कीदृशं पुष्पम्? स्मरनीचपलाशस्य प्राश्याध्वगपिशितचारुः स्मरः काम एव नीचपृथग्जनः। पलाशः पलं मांसम् अश्नातीति तथा। राक्षस्य तस्य प्राश्यं प्राशनयोग्यं यद् अध्वगपिशितं विरहमांसं तद्वच्चारु सुन्दरम् अरुणतरत्वात् किंशुककुसुमस्य रक्ताक्तमांसपिण्डोपमः। कीदृशस्य पलाशस्य? चपलाशस्य चपला चञ्चला आशा मनोरथः यस्मात् स तथा तस्य ॥ ७ ॥

**दीपिका**—विरलोच्चेति—च पुनः पलाशस्य किंशुकस्य प्रचुरम् अधिकतरं पुष्पं बभूव जातम्। किम्भूतस्य पलाशस्य? विरलोच्चपलाशस्य छिन्नोन्नतपत्रस्य। किम्भूतं पुष्पम्? स्मरनीचपलाशस्य कामाधमराक्षसस्य प्राश्याध्वगपिशितं चारु भोज्यं पथिकमांसवन्मनोहरम्। किम्भूतस्य स्मरनीचपलाशस्य? चपलाशस्य चञ्चलाकाङ्क्षस्य। यद्वा प्राश्याध्वगेत्येकं पदमापद्यसमाप्ति। प्राश्याध्वगपिशितचारूचपला आशा यस्य सः ॥ ७ ॥

**सुबोधिनी**—विरल इति—च पुनः विरलोच्चपलाशस्य विरलानि अप्रचुराणि उच्चानि पलाशानि यस्य सः। पत्रं पलाशं छदनं दलं पर्णच्छदः पुमानित्यमरः। तस्य पलाशस्य

ब्रह्मवृक्षस्य प्रचुरं पुष्पं बभूव जातम्। कीदृशं पुष्पम्? चपला आशा यस्य तस्य स्मरनीचपलाशस्य। स्मर एव नीचस्तुच्छः पलाशो मांसासिराक्षसस्तस्य। प्राश्याध्वगपिशितचारु प्राश्यं भक्षणयोग्यं यद् अध्वगस्य पथिकस्य पिशितं मांसं तद्वच्चारु मनोहरम्। पथिकप्राणहारकत्वे स्मरस्य राक्षसतुल्यत्वम् ॥ ७ ॥

**अनुवाद**—विरल तथा ऊपर विद्यमान पत्तों वाले दुष्ट कामदेव राक्षस के समान पथिकों के मांस को खाने की प्रबल इच्छा वाले उस पलाश वृक्ष में खूब फूल हो उठे ॥ ७ ॥

**ऋतौ बभुर्निशाह्वया विभाविभाविभाविभाः[१] ।**

**कलाश्च तेषु सत्पतेरदारदारदा रदाः[२] ॥ ८ ॥**

**अन्वयः**—विभाविभाविभौ ऋतौ निशाह्वयाः इभाः तेषु (च) सत्पतेः अदारदारदाः रदाः कलाः च बभुः ॥ ८ ॥

**अन्वयःदीपिकाः**— ऋताविति—ऋतौ वसन्ते निशाह्वयाः इभाः बभुः रेजुः। निशा एव आह्वयं नाम येषां ते निशाह्वयाः रात्रिनामानो गजाः बभुः शुशुभिरे। च अपरं तेषु निशा-इभेषु सत्पतेः चन्द्रमसः कलाः रदाः दन्ताः शुशुभिरे। किम्भूते ऋतौ? विभाविभाविभौ विशेषेण भाविनी विभाविनी। विभाविनी चासौ भा विभा। विभया विभुः विभाविभाविभुः। तस्मिन् विभाविभाविभौ। प्रभौ समर्थे। किम्भूताः रदाः? न विद्यन्ते दाराः अदाराः। अदाराणां दारम् अदारदारं द्यन्ति ते आदारदारदाः[३]। जायारहितपुरुषहृदयविदारकाः। यद्वा कथं भूते ऋतौ? विशेषेण भातीति विभुः तस्मिन् विभौ शोभमाने। किम्भूताः इभाः? विभाः विशेषेण भान्ति। ते विभाः शोभमानाः। किम्भूताः रदाः विभाः शोभायमानाः। विभाः विशेषेण भाः येषां ते विभाः दीप्तिमन्तः ॥ ८ ॥

**यमकबोधिनी**—ऋताविति—ऋतौ वसन्ते निशाह्वयाः रात्रिसंज्ञकाः इभाः गजाः बभुः शुशुभिरे। कीदृशे ऋतौ? विभाविभाविभौ विभावी तीव्रो भा विभुः सूर्यः दीप्तिनाथः प्रज्ञाकरो यत्र स तथा तस्मिन्। विभावो विद्यते यस्याः सा विभाविनी। तथा भूता या कान्तिस्तया विभुः व्यापकस्तस्मिन्नेव। तेषु रात्रिसंज्ञकेषु इभेषु सत्पतेश्चन्द्रमसः कलाः रदाः दन्ताः च बभुः। पाण्डुरत्वाच्चन्द्रकलानां गजदन्तसादृश्यम्। सन्तः प्रशस्ताः ब्राह्मणाः तेषां पतिर्द्विजराज इति। तस्य कीदृशाः रदाः? अदारदारदाः अदाराणाम् अस्त्रीकाणां दारं विदारणं ददति ते तथा। अन्येऽपि दन्तिनो दन्तैर्वप्रविदारिणो भवन्ति। निशाह्वयाः गजाः चन्द्रकलारूपैर्दन्तैर्विरहिविदारणा इति वाक्यार्थः। नगस्वरूपिणी वृत्तम्। द्वितीयतुर्यपादयमकालङ्कारः ॥ ८ ॥

---

१. विभाविभाविभाविताः इति 'घ' पुस्तके पाठः। विभाविभाविभावि भाः इत्यपि विच्छेदः क्वचित्।

२. अन्वयदीपिकीयां सप्तमोऽयं श्लोक इति तत्र क्रमविरोधः।

३. विद्यावती—न सन्ति दाराः येषां ते अदाराः। अदारेभ्यो जायारहितेभ्यः प्रियाविप्रयुक्तेभ्यो दारं विप्रलम्भक्लेशं ददतीति अदारदारदाः इति सम्यक्।

**दीपिका**—ऋताविति—ऋतौ वसन्ते निशाह्वयाः रात्रिसंज्ञकाः इभाः गजाः बभुः रेजुः । किम्भूताः इभाः ? विशिष्टप्रभायुक्ताः पुनः किम्भूताः ? अदारदारदाः अस्त्रीप्रदाः । रात्रौ व्यभिचाराय स्तुपयति अनुवर्तयति । अथवा अदाराणां प्रियारहितानां दारदाः विषतुल्या इत्यर्थः । दारदो वत्सनागश्चेत्यमरः । पुनः किम्भूताः ? निशाह्वयाः इभाः रदाः विरहिजनखण्डकाः । किम्भूते ऋतौ ? विभाविभौ प्रभौ । च पुनः तेषु निशाह्वयेषु गजेषु सत्पतेः नक्षत्रपतेश्चन्द्रमसः कलाः कान्तिपरम्परा बभुः । अथवा तेषु चन्द्रमसः कलाः रदाः कलास्वरूपाः दन्ता रेजुः । सन्नक्षत्रं च तारका इति हलायुधः ॥ ८ ॥

**सुबोधिनी**—ऋताविति—विभाविभाविभौ विभावो रत्यादिकारणं विद्यते यस्याः सा विभा । विभाविनी भा कान्तिस्तया विभौ व्यापके ऋतौ वसन्ते निशाह्वयाः इभाः निशैवाह्वानं येषां ते इभा हस्तिनः । मदजनकत्वात् रात्रिरूपा हस्तिन इति रूपकम् । बभुः शुशुभिरे । च पुनस्तेषु रात्रिलक्षणगजेषु सत्पतेश्चन्द्रस्य कलाः रदाः दन्ताः बभुः । कीदृशाः ? अदारदारदाः अदाराः जायारहितास्तेषां दारदाः दारं हृदयविदारणं ददतीति ते । यद्वा किम्भूते ऋतौ ? विभौ विशेषेण शोभमाने । किम्भूताः इभाः ? विभाः विशेषेण शोभमानाः । किम्भूताः रदाः ? विभाः विशेषेण शोभमानाः ॥ ८ ॥

**अनुवाद**—रति आदि के विभावों से युक्त समर्थशाली उस वसन्त ऋतु में 'निशा' (इस) नाम से पुकारे जाने वाले हाथी और उनमें विरही जनों को विदारित करने वाली चंद्रमा की दांत रूपी किरणें सुशोभित हुईं ॥ ८ ॥

**इह ललनाशोकालिप्रदेन येनाऽत्ममहविनाशोऽकालि ।**[१]

**कामेनाऽशोकालिस्वनहुङ्कृतिभिः स दिक्ष्वनाशोऽकालि ॥ ९ ॥**

**अन्वयः**—इह येन आत्ममहनाशः अकारि सः अनाशः ललनाशोकालिप्रदेन कामेन अशोकालिस्वनहुङ्कृतिभिः दिक्षु अकालि ॥ ९ ॥

**अन्वयदीपिका**—इहेति—इह वसन्ते येन पुरुषेण आत्ममहविनाशः आत्ममहस्य कामोत्सवस्य विनाशः आत्ममहविनाशः कामोत्सवभङ्गः अकारि । सः पुरुषः कामेन दिक्षु दिशासु अकालि अबन्धि । बद्ध इत्यर्थः । कलबन्धनाङ्गीकारयोः एतस्य धातोः प्रयोगः । काभिः ? अशोकालिस्वनहुङ्कृतिभिः अशोकेषु वृक्षेषु अलयः भ्रमराः अशोकालयः । अशोकालीनां स्वनाः अशोकालिस्वना एव हुङ्कृतयः तर्जनवाचः अशोकालिस्वनहुङ्कृतयः । ताभिः अशोकालिस्वनहुङ्कृतिभिः अशोकभ्रमरस्वनगर्जनावाग्भिः । किम्भूतः सः ? अनाशः न विद्यते आशा यस्य स अनाशः । विषये विगताभिलाषः । किम्भूतेन येन ? ललनाशोकालिप्रदेन ललनायाः कामिन्याः शोकस्य आलिं प्रददातीति ललनाशोकालिप्रदः । तेन ललनाशोकालिप्रदेन स्त्रीणां शोकप्रदेन ॥ ९ ॥

१. अकारीति 'ञ' पुस्तके

**यमकबोधिनी**—इहेति—इह वसन्तसमये येन नरेण आत्ममहविनाशः अकालीत्यन्वयः। आत्मभूः[१] कामः तस्यात्मनः स्वस्य कामस्येति यो मह उत्सवः तस्य विनाशोऽकारि। रलयोः[२] सावर्ण्यात् कृत इत्यर्थः। कीदृशेन येन ? ललनानां शोकस्य आलिं पङ्क्तिं प्रददातीति ललनाशोकालिप्रदः तेन। कन्दर्पोत्सवविनाशकत्वादेव कामिनीशोकदो वृतः स नरः कामेन स्मरेण। अशोकालिस्वनहुङ्कृतिभिः अशोकवृक्षस्य अलयस्तेषां स्वनास्त एव हुङ्कृतयः ताभिः अशोकवृक्षगतभ्रमरशब्दहुङ्कारैस्तर्जनेन दिक्षु आशासु आकालि विद्धः। अनाशो निराशः। अकालीति कलधातोर्भावे रूपम् ॥९ ॥

**दीपिका**—इहेति—इह वसन्ततौ येन पुंसा गृहाद्गतं तेन आत्ममहविनाशः निजोत्सवभङ्गः अकालि अकारि। किम्भूतेन येन ? ललनाशोकालिप्रदेन कामिनीशोकसमूहदात्रा। कामेन स्मरेण स पुमान् दिक्षु काष्ठासु अशोकालिस्वनहुङ्कृतिभिः अशोकवृक्षस्थितभ्रमरारावहुङ्कारैः अकालि अबन्धि बद्ध इत्यर्थः। कलबन्धनाङ्गीकारयोरित्यस्य धातोः प्रयोगः। किम्भूतः ? अनाशः अजीवनाशः ॥ ९ ॥

**सुबोधिनी**—इहेति—इह वसन्ते ललनाशोकालिप्रदेन येन ललना स्त्री तस्याः शोकस्यालयः पङ्क्तयस्ताः प्रददातीति कामिनीविरहं विस्तारयता येन पुरुषेणात्ममहविनाशः आत्मनो यो महः कामोत्सवस्तस्य विनाशः अकालि अकारि। सः पुरुषः दिक्षु दिशासु अशोकालिस्वनहुङ्कृतिभिः अशोकवृक्षसम्बन्धिनो ये अलयः भ्रमरास्तेषां स्वनाः शब्दास्त एव हुङ्कृतयस्तर्जनावाचस्ताभिः करणेन। कामेन अनाशः आशा वाञ्छा तया रहितोऽपि अकालि अबन्धि। जितेन्द्रियोऽपि वसन्ते भ्रमरशब्दादिना बद्धो भवतीति भावः। अथवा न विद्यते नाशो यस्य स मृत्युञ्जयतुल्योऽपि कामेन बद्ध इत्यर्थः ॥ ९ ॥

**अनुवाद**—जिस पुरुष ने इस वसंत समय में कामोत्सव को नष्ट किया। अभिलाषा रहित होकर भी वह स्त्रियों को शोक-ग्रस्त करने वाले कामदेव के कारण अशोक के पेड़ों में गुञ्जार कर रहे भ्रमरों के स्वर से कामोत्पीड़ित हो उठा ॥ ९ ॥

**स्मरस्य युद्धरङ्गतां रसाऽऽर सारसारसा।**
**जिता वियोगिनः समुन्नतेनतेन तेन ते[३] ॥ १० ॥**

**अन्वयः**—सारसारसा रसा स्मरस्य युद्धरङ्गताम् आर। समुन्नतेनतेन तेन ते वियोगिनः जिताः ॥१० ॥

१. विद्यावती—पुष्पधन्वा रतिपतिर्मकरध्वजआत्मभूः इत्यमरः।
२. डलयो रलयोश्चैव शसयोर्बवयोस्तथा। वदन्त्येषां हि सावर्ण्यमलङ्कारविदो जनाः॥
३. ख-ञ- पुस्तकयोः द्वाशोऽयं श्लोक इति क्रमभङ्गस्तत्र।

**अन्वयदीपिका**—स्मरस्येति—रसा पृथ्वी स्मरस्य युद्धरङ्गतां युद्धाङ्गणभूमि (त्वम्[1]) आर आप। किम्भूता रसा? सारसारसा सारा: शोभना: सारसा: पक्षिणो यस्यां सा सारसारसा। यद्वा सारसानाम् आरस: शब्दो यस्यां सा। तेन कामेन पुरुषा: जिता: वशीकृता:। ते के? ये वियोगिन: विरहिण:। किम्भूतेन तेन कामेन? समुन्नतेन सम्यक् उन्नता उत्कृष्टा इनता स्वामिनो वसन्तोद्यमो यस्य स: समुन्नत:। तेन समुन्नतेन। उत्कृष्टप्रभुणेत्यर्थ: ॥ १० ॥

**यमकबोधिनी**—स्मरस्येति—रसा भूमि: स्मरस्य कामस्य युद्धरङ्गतां सङ्ग्रामस्थलत्वम् आर प्राप्तवती। कीदृशी रसा? सारसारसा सारसानाम् आ समन्तात् रस: शब्दो यस्यां सा। यद्वा सारा: श्रेष्ठा: सारसा: पुष्कराह्वया: यस्यां सा तथा। यद्वा साराणि श्रेष्ठानि सारसानि कमलानि यस्यां सा। यद्वा सा वसन्तकालीना रसेति योजना। कीदृशी रसा? रसेन पुष्पादिद्रवेण आ सर्वतो लसते शोभते। यथा रलयोरेकश्रुति:। युद्धलक्षणमाह तेन स्मरेण ते प्रसिद्धा: वियोगिन: विरहिणो जना: जिता: वशीकृता:। तत्र कारणमाह। कीदृशेन कामेन? समुन्नतेनतेन समुन्नता समृद्धा इनता प्रभुता प्रभावो यस्य स तथा तेन। यथा युद्धभूमौ समृद्धेन प्रभुणा जीयते तथा वसन्ते स्मरेण वियोगिरूपा: शत्रव: स्वाधीना: कृता: इति वाक्यार्थ: ॥ १० ॥

**दीपिका**—स्मरस्येति—रसा पृथ्वी स्मरस्य कामस्य युद्धरङ्गतां सङ्ग्रामोत्सवताम् आर प्राप। किम्भूता रसा? सारसा उत्कृष्टा पक्षिविशेषा। तेन कामेन ते वियोगिन: जिता: पराजिता:। किम्भूतेन तेन? समुन्नतेनतेन समुन्नता उत्कृष्टा इनता ईश्वरता यस्य तेन ॥ १० ॥

**सुबोधिनी**—स्मरस्येति—सारसारसा सारा: श्रेष्ठा: पक्षिणो यस्यां सा रसा पृथ्वी स्मरस्य युद्धरङ्गतां समरभूमिभावम् आर प्राप। समुन्नतेनतेन सम्यक् प्रकारेणोन्नता उत्कृष्टा इनता प्रभुता यस्य स: तेन। कामेन ते पुरुषा: जिता: स्ववशीकृता:। ते के? ये वियोगिन: सस्त्रीका: स्त्रीरहिता वा स्मरतापराजिता: सन्त: स्त्रीभि: सह सक्ता बभूविरिति भाव:। यद्वा कीदृशी रसा? सारसारसा आरस्यत इत्यारस: शब्द:। सारसानां य: शब्दस्तद्विशिष्टा ॥ १० ॥

**अनुवाद**—सुन्दर सारस पक्षियों से युक्त पृथ्वी कामदेव की युद्धभूमि सी बन गई। समुन्नत प्रभुता वाले उस कामदेव ने उन वियोगियों को जीत लिया ॥ १० ॥

**नुन्नमना मधुना नाऽश्रयति मृतिं को विनाऽङ्गनामधुना ना।**

**इति ललना मधु नानाविधमधयत् किल तदर्थनामधुनाना ॥ ११ ॥**

**अन्वय:**—मधुना नुन्नमना: क: ना अधुना अङ्गनां विना मृतिं न आश्रयति? इति तदर्थनाम् अधुनाना किल ललना नानाविधं मधु अधयत्।

---

१. कोष्ठके सम्पादकस्य।

**अन्वयदीपिका**—नुन्नेति—अधुना वसन्तसमये कः ना कः कामी अङ्गनां कामिनीं विना मृतिं मरणं न आश्रयति न म्रियते। अपि तु सर्वोऽपि कामी कामिनीरहितो मृतिम् आश्रयति प्राप्नोतीत्यर्थः। किम्भूतः कामी? मधुना मद्येन नुन्नमनाः। नुन्नं प्रेरितं मनो यस्य स नुन्नमनाः। किल इति सत्ये। इति हेतोः ललना कामिनी नानाविधं नानाप्रकारं मधु मद्यम् अधयत् पपौ अपिबत्। किम्भूता ललना? तदर्थनाम् अधुनाना तस्य कामिनः अर्थना प्रार्थना तां तदर्थनां याचनाम् अधुनाना अनिराकुर्वाणा इत्यर्थः ॥११॥

**यमकबोधिनी**—नुन्नमना इति—अधुना इदानीं वसन्ते को ना पुरुषः अङ्गनां स्त्रीं विना मरणं नाश्रयति न प्राप्नोति। अपि तु सर्वोऽपि जनः कान्तारहितः निधनमाश्रयति इत्यर्थः। कीदृशः? मधुना वसन्तेन नुन्नमनाः क्षिप्तचेताः। इति हेतोः कान्तमरणभयात् तदर्थनाम् अधुनाना अकम्पयन्ती अनिराकुर्वती ललना कामिनी नानाविधम् अनेक-प्रकारं मधु मद्यम् अधयत् पीतवती। किलेत्यव्ययं सत्ये ॥ ११ ॥

**दीपिका**—नुन्नमना इति—मधुना वसन्तेन नुन्नमनाः प्रेरितचित्तकः पुमान् अधुना अस्मिन्नवसरे अङ्गनां विना कामिनीं विना मृतिं मरणं न आश्रयति नाङ्गीकरोति। इति हेतोः ललना विलासिनी नानाविधमनेकप्रकारं मधु अधयत् अपिबत्। किलेति निश्चये। किम्भूता ललना? तदर्थनां नायकप्रार्थनाम् अधुनाना अतिरस्कुर्वती। कामिनः क्षणमात्रमप्यस्मिन् ऋतौ रतिं विना न स्थास्यन्ति। अतो निरन्तरसुरतसहनार्थं मधुपानं चक्रुरिति भावः ॥ ११ ॥

**सुबोधिनी**—नुन्नेति—अधुना वसन्तसमये मधुना वसन्तेन नुन्नं प्रेरितं मनश्चित्तं यस्य सः। कः ना पुरुषः योऽङ्गनां रमणीं विना मृतिं नाश्रयति न प्राप्नोति। अपि तु सर्वोऽपि मृत्युम् आश्रयत्येव। किल सत्ये। इति हेतोः ललना स्त्री नानाविधं नानाप्रकारं मधु मद्यम् अधयत् अपिबत्। कीदृशी ललना? तदर्थनां तस्य नायकस्य अर्थनाम् अधुनाना अनिराकुर्वाणेत्यर्थः। रतिसमये पुरुषः अस्माकं वशताम् एष्यत्यानन्देन मधु अपायदितिभावः। यद्वा तन्मरणशङ्कया मधु अधरामृतम् अपायदिति भावः ॥११॥

**अनुवाद**—इस वसंत से चंचल चित्त वाला कौन पुरुष स्त्री के बिना मृत्यु को नहीं प्राप्त करता? अतः प्रिय की प्रार्थना का निरादर किए बिना युवती अनेक प्रकार के आसवों का पान की ॥ ११ ॥

**पिकोऽपि कोऽपि कोपिको वियोगिनीरभर्त्सयत्।**

**वचांसि भङ्गमालपन्नितानि तानि तानि ताः[1] ॥ १२ ॥**

**अन्वयः**—कोऽपि कोपिकः पिकः अपि तानि तानि भङ्गम् इतानि वचांसि आलपन् ताः वियोगिनीः अभर्त्सयत् ॥ १२ ॥

१. 'ख' 'ज' पुस्तकयोः चतुर्दशोऽयं श्लोकः।

**अन्वयदीपिका**—पिक इति—कोऽपि पिकः कश्चिदपि कोकिलः ताः वियोगिनीः विरहिणीः अभर्त्सयत् । किम्भूतः पिकः ? कोपिकः कोपो यस्यास्तीति कोपी कोप्येव कोपिकः । सकोप इत्यर्थः । किं कुर्वन् ? तानि तानि वचांसि आलपन् अभिप्रायानुसाराणि वचांसि उच्चरन् । किम्भूतानि वचांसि ? भङ्गम् इतानि भङ्गं रचनाविशेषम् इतानि प्राप्तानि । षड्जमध्यमगान्धारधैवपञ्चम ऋषभश्चैव निषादाः सप्तस्वराः । षड्जं वदन्ति मयूरो गावः ऋषभमेव च । अजा वदन्ति गान्धारं क्रौञ्चो वदति मध्यमम् । पुष्पप्रसरणे काले कोकिला वदति पञ्चमम् । अश्वस्तु धैवतं वक्ति निषादं वक्ति कुञ्जरः ॥ १२ ॥

**यमकबोधिनी**—पिक इति— ननु कान्तमरणभयादेव तत्प्रार्थनाङ्गीकारः । तत्र दुस्सहवियोग-लक्षणं हेत्वन्तरमाह—कोऽपि कश्चित् पिकः कोकिलोऽपि ताः वियोगिनीरभर्त्सयत् तर्जयामास । अपि शब्दस्य पूर्वश्लोकेन सम्बन्धः । कीदृशः पिकः ? कोपिकः कोपिनां प्रणयकलहवतां कोपिकः कोपदायकः । किं कुर्वन् ? भङ्गमितानि प्राप्तानि तानि तानि प्रसिद्धानि वचांसि आलपन् आभाषमाणः । भङ्गं विभागं क्रुद्धवा इति हि परभृतनिर्भर्त्सनवचोभिः दुःसहपरितापात् प्रियप्रार्थनाङ्गीकार इत्यभिप्रायः । अपका-रवाणी भर्त्सनम् ॥ १२ ॥

**दीपिका**—पिकोपीति—कोऽपि पिकोऽपि कश्चित् कोकिलोऽपि ताः वियोगिनीः विरहिणीः अभर्त्सयत् अव्यथयत् । किम्भूतः पिकः ? कोपिकः कोपः क्रोधोऽस्यास्तीति कोपी । स एव कोपिकः । स्वार्थे कः । पुनः किम्भूतः पिकः ? तानि तानि तादृशानि वचांसि वचनानि आलपन् । किम्भूतानि वचांसि ? भङ्गं रचनाविशेषम् इतानि प्राप्तानि ॥१२ ॥

**सुबोधिनी**—पिकेति—कोऽपि कोपिकः कोपोऽस्यास्तीति कोपी । कोप्येव कोपिकः । सकोप इत्यर्थः । यद्वा कोपयतीति कोपिकः । तासामेव कोपकर्त्रेति यावत् । अपि सम्भाव-नायाम् । एतादृशः कोपी पिकः कोकिलस्ताः वियोगिनीरभर्त्सयत् भर्त्सितवान् । भर्त्सनं त्वपकारगीरित्यमरः । किं कुर्वन् ? भङ्गं रचनाविशेषमितानि प्राप्तानि तानि तानि वचांसि वसन्तकालीनानि आलपन् ॥ १२ ॥

**अनुवाद**—किसी क्रुद्ध कोयल ने उन उन भंग प्राप्त वचनों को अलापते हुए उन वियोगिनियों की भर्त्सना किया ॥ १२ ॥

**श्रीरापि कलापेन प्रवृद्धमाम्रावलिषु पिकलापेन ।**

**न कलापिकलापेन प्रनर्तनमकारि[1] वागपि कलाऽऽपे न ॥ १३ ॥**

**अन्वयः**—कलापेन श्रीः आपि । पिकलापेन आम्रावलिषु प्रवृद्धम् । कलापिकलापेन प्रनर्तनं न अकारि ? अपि कला वाक् न आपे ? ॥ १३ ॥

---

१. प्रवर्तनम् इति 'ख' पुस्तके पाठः । प्रणर्तनमिति 'क' 'च' पुस्तकयोः ।

**अन्वयदीपिका**—श्रीरापीति—कलापेन चन्द्रेण श्रीः शोभा आपि प्रापि । कलाः पातीति कलापश्चन्द्रमाः । पिकलापेन आम्रावलिषु प्रवृद्धम् ।[1] कलापिकलापेन मयूरसमूहेन प्रवर्तनं चुम्बनम् अकारि । च अपरं कला मधुरा वागपि न आपि इति न । अपितु मधुरं वचनम् ऊचे । कलाः बर्हा विद्यन्ते येषां ते कलापिनः । कलापिनः कलापः । तेन मयूरसमूहेनेत्यर्थः ॥ १३ ॥

**यमकबोधिनी**—श्रीरिति—कलापेन चन्द्रमसा श्रीः शोभा आपि प्रापि । वसन्ते इति सर्वत्र बोद्धव्यम् । पिकलापेन वनप्रियाभाषणेन आम्रावलिषु चूतश्रेणिषु प्रवृद्धम् एधितं प्रनर्तनमिति नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृनृवर्जमिति[2] वाक्यात् णत्वापवादः । णितेः क्तः विकल्पः । रसालीषु निलीना परभृता उच्चैः स्वरमालपन्नित्यर्थः । कलापिकलापेन मयूरसमूहेन प्रनर्तनं प्रकृष्टताण्डवं न अकारि न कृतम् । कला मधुरस्फुटा वाक् अपि वाणी वाचो न आपे न लेभे । प्रावृट्-कालीनत्वान्नीलकण्ठनटनस्य वसन्ते कलकेकायाश्चाभावः । मधुरस्फुटध्वनौ कलशब्दः स्त्रीलिङ्गः ॥ १३ ॥

**दीपिका**—श्रीरापीति—कलापेन चन्द्रेण श्रीः शोभा आपि प्राप्ता । आम्रावलिषु चूतपङ्क्तिषु पिकलापेन प्रवृद्धम् । कलापिकलापेन मयूरसमूहेन प्रनर्तनं न अकारि न कृतम् । कला अव्यक्तमधुरावाणी अपि न आपि न प्राप्ता ॥ १३ ॥

**सुबोधिनी**—श्रीरापीति—कलापेन कलाः पातीति कलापश्चन्द्रः तेन श्रीः शोभा आपि प्राप्ता । पिकलापेन पिकानां लापः संलापस्तेन आम्रावलिषु वृक्षपङ्क्तिषु प्रवृद्धम् । अतिवृद्धिं प्राप्तम् कलापेन प्रनर्तनम् प्रकृष्टं नृत्यं नाकारीति न किन्तु कृतमेवेति भावः । च पुनः कला परिस्फुटा वागप्याप प्राप ॥ १३ ॥

**अनुवाद**—चन्द्रमा ने शोभा को प्राप्त किया । कोयलों की कूक आम के बगीचों में बढ़ गई । मयूरों के समूहों ने नृत्य किया । उन्हें मधुर वाणी मिली ॥ १३ ॥

**[3]सहकारवृते समये सहका रहणस्य के नु[4] सस्मार पदम् ।**

**सहकारमुपरिकान्तैः सह का रमणी पुरः सकलवर्णमपि ॥ १४ ॥**

**अन्वयः**—सहकारवृते समये के नु रहणस्य सहकाः । कान्तैः सह का रमणी पुरः सकलवर्णम् अपि उपरि सहकारपदं सस्मार ॥ १४ ॥

---

१. विद्यावती—आम्रावलिषु चूतवृक्षपङ्क्तिषु पिकलापेन कोकिलानां स्वरेण प्रवृद्धं वृद्धिं प्राप्तमित्यर्थः । आपे इत्यस्य स्थाने 'आपि' इति पाठो भृशं दृश्यते टीकासु । किन्तु यमकानुरोधात् 'आपे' इत्येव स्वीकृतम् ।

२. विद्यावती—णो नः(पा० सू० ६.१.६५) सूत्रे समुद्धृतं भाष्यवचनमिदम् ।

३. 'ख' पुस्तके दशमोऽयं श्लोकः ।

४. न इति च पुस्तके ।

**अन्वयदीपिका**—सहकारेति—सहकारवृते समये सहकारपुष्पफलैरावृते समये वसन्ते का रमणी नायिका कान्तैः भर्तृभिः सह इदं पदं वाक्यं सस्मार अनुस्मरति स्म। इदं कीदृशम्? सहकारं हकारेण सह वर्तमानं सहकारम्। पुरः पूर्वं सकलवर्णमपि। कश्च लश्च कलौ। कलौ च तौ वर्णौ च कलवर्णौ। कलवर्णाभ्यां सह वर्तमानं सकलवर्णम्। कलहपदमित्यर्थः। पुनस्तस्मिन्नेव समये वसन्ते रहणस्य स्त्रीविरहस्य के सहकाः। के पुरुषाः सहकाः सहनसमर्थाः। न केऽपीत्यर्थः॥ १४॥

**यमकबोधिनी**—सहारवृत इति—सहकारवृते सहकारस्य कुसुमानि तैर्वृतः। प्रसवितचूतसहिते समये काले वसन्ते इत्यर्थः। वसन्ते एव आम्राणामतिसौरभत्वात् रहणस्य विरहस्य के पुरुषाः सहकाः सोढारः? न केऽपीत्यर्थः। समयाः शपथाचारकालसिद्धान्तसंविद इत्यमरः। नु इति वितर्के। का रमणी का सुन्दरी कान्तैः प्रियैः सह पुरः पूर्वतः सकलवर्णम् अपि कल इत्यक्षरसहितम् उपरि सहकारं हकारसहितं कलहमित्येतत्पदं शब्दमपि सस्मार न कापीत्यर्थः। चतुःपदाद्यमकालङ्कारः॥ १४॥

**दीपिका**—सहकारेति—सहकारवृते चूतव्याप्ते समये वसन्ततौ रहणस्य विरहस्य के असहनशीलाः न। अपि तु सर्वे एव। का रमणी अपि कान्तैः सह इदं पदं वा सस्मार स्मृतवती। किम्भूतं पदम्? उपरि सहकारम् अन्त्यभागे हवर्णयुक्तम्। पुनः किम्भूतं पदम्? पुरः पूर्वभागे सकलवर्णम्। ककारलकाराभ्यां सहितं कलहपदमित्यर्थः॥१४॥

**सुबोधिनी**—सहकारेति—सहकारवृते सहकारः आम्रवृक्षस्तत्पुष्पमपि सहकारं तेन वृते समये वसन्ते के पुरुषाः रहणस्य स्त्रीविरहजन्यदुःखस्य सहकाः सहनक्षमाः। न केऽपीत्यर्थः। का रमणी कान्तैः सह भर्तृभिः सह उपरि अन्ते सहकारं हकारवर्णसहितं पुर आदौ सकलवर्णमपि कश्च लश्च कलौ। ताभ्यां सहितं पदं वाक्यं कलहमिति यावत् न सस्मार न स्मृतवती। तथा च सर्वमेष कलहं विस्मृत्य कान्तसङ्गमं चकारेति भावः॥ १४॥

**अनुवाद**—आम्रमंजरियों से भरे हुए इस वसंत में कौन विरह को सहने वाला है? प्रियों के साथ किस रमणी ने आगे क-ल वर्ण से युक्त तथा अन्त में हकारवर्ण वाले (कलह) पद का स्मरण किया?॥ १४॥

**[1] अधिगतकामधुराऽगादगमेत्य भ्रमरपटलिका मधु रागात्।**

**पीत्वोत्का मधुरा गा द्रुतमकृत ततः श्रियोऽधिका मधुरागात्॥ १५॥**

**अन्वयः**—अधिगतकामधुरा भ्रमरपटलिका अगात् अगम् एत्य रागात् मधु पीत्वा उत्का मधुराः गाः द्रुतम् अकृत्। ततः मधुः अधिकाः श्रियः अगात्॥ १५॥

---

१. ख ञ पुस्तकयोः त्रयोदशोऽयं श्लोकः।

**अन्वयदीपिका**—अधिगतेति—भ्रमरपटलिका भ्रमरश्रेणि: अगात् अगम् एत्य मधुरा: गा: अकृत जगु: । अलिश्रेणि: वृक्षात् वृक्षं प्राप्य सुन्दरा: वाच: जगु: । किम्भूता भ्रमरपटलिका ? रागात् स्नेहात् द्रुतं शीघ्रं मधु पुष्परसं पीत्वा उत्का उत्सुका । अभिलषितमधुरसं पीत्वा मञ्जुलं गुञ्जारवम् अकरोदित्यर्थ: । पुन: किम्भूता भ्रमरपटलिका ? अधिगतकाममधुरा अधिगता प्राप्ता कामस्य धू: यया सा अधिगतकाममधुरा । अविलम्बितमन्मथविधेयसमुदाया । ततोऽनन्तरं मधु: वसन्त: अधिका: श्रिय: सौभाग्यशोभा: अगात् प्रापत् ॥ १५ ॥

**यमकबोधिनी**—अधिगतेति—भ्रमरपटलिका भृङ्गसंहति: अगात् अगमेत्य वृक्षात् वृक्षमेत्य रागात् स्नेहात् मधु मकरन्दं पीत्वा उत्का उन्मना: सती द्रुतं शीघ्रं मधुरा: गा: वाच: अकृत कृतवतीत्यन्वय: । यद्वा अगात् अगमेत्य पर्वतात् पर्वतमेत्य भ्रमरपटलिका द्रुतं शब्दमकृत । किं लक्षणात् अगात् पर्वतात् मधुरागात् प्रियवृक्षात् । अन्यत् तथैव । छदिर्नेत्ररुजो: क्लीबं समूहे पटलं न ना इत्यमर: । मधु मद्ये पुष्परसे क्षौद्रेऽपीत्यमर: । स्वादुप्रियौ तु मधुरावित्यमर: । कीदृशी ? अधिगतकाममधुरा अधिगता कामस्य धुरा यया सा । प्राप्तकन्दर्पभारा । तत: पीतमकरन्दोत्सवमधुकरमधुरहुङ्कारविधानात् मधुर्वसन्त: अधिका: प्रचुरा: श्रिय: शोभा: अगात् प्राप्तवान् । आद्यतृतीययमकालङ्कार: ॥ १५ ॥

**दीपिका**—अधिगतेति—भ्रमरपटलिका मधुपपङ्क्ति: अगात् वृक्षात् अगं वृक्षान्तरमेत्य रागाद् रसात् मधु पुष्परसं पीत्वा उन्नतमस्तका सती मधुरा: माधुर्ययुक्ता: गा: वाच: द्रुतं शीघ्रम् अकृत अकरोत् । किम्भूता भ्रमरपटलिका ? अधिगतकाममधुरा प्राप्तकामभारा । मधु: वसन्त: तत: भ्रमरारावादधिका: उत्कृष्टा: श्रिय: शोभा:अगात् प्रापत् ॥ १५ ॥

**सुबोधिनी**—अधीति—रागात् प्रीते: मधु पुष्परसं पीत्वा द्रुतं शीघ्रम् उत्का उत्कण्ठिता सा । अधिगतकाममधुरा अधिगता कामस्य धू: भारो यया सा । त्वयैतत्कर्तव्यमिति स्वीकृतमन्मथाज्ञा समुदायेति यावत् । एवं भूता भ्रमरपटलिका मधुपश्रेणि: रागाद् वृक्षात् अगं वृक्षमेत्य मधुरा: गा: वाणी: अकृत अकरोत् । तत: भ्रमरमधुगुञ्जितात् मधुर्वसन्तोऽधिका: श्रिय: शोभा: अगात् प्राप ॥ १५ ॥

**अनुवाद**—कामदेव का भार वहन करने वाली भ्रमरपटलिका एक वृक्ष से दूसरे वृक्ष में जाकर मधुपान करने से मतवाली होकर गुंजार की । इससे वसंत और भी सुशोभित हुआ ॥१५ ॥

**न स मानसमानसमानसमागममाऽऽप समीक्ष्य वसन्तनभ: ।**

**भ्रमदभ्रमदभ्रमदभ्रमदभ्रमरच्छलत: खलु कामिजन: ॥ १६ ॥**

**अन्वय:**—स: कामिजन: भ्रमदभ्रम् अदभ्रमदभ्रमदभ्रमरच्छलत: वसन्तनभ: समीक्ष्य मानसमानसमानसमागमं न खलु आप ॥ १६ ॥

**अन्वयदीपिका**—न स मानेति—खलु इति निश्चितम्। स कामिजनः मानसमानसमानसमागमम् आप। मानेन समानः मानसमानः। मानसमानश्चासौ समानसमागमश्च मानसमानसमानसमागमः॥ तं मानसमानसमानसमागमम्। जाताभिमानसमागमं लेभे इत्यर्थः। किं कृत्वा? वसन्तनभः समीक्ष्य अवलोक्य। वसन्तकालसम्बन्ध्याकाशम् अवलोक्येत्यर्थः। किम्भूतं नभः? अदभ्रमदभ्रमदभ्रमरच्छलतः। भ्रमदभ्रं भ्रमन्ति अभ्राणि यस्मिंस्तत् भ्रमदभ्रं भ्रमद्वारिवाहम्। अभ्रं मेघो वारिवाह इत्यमरः। अदभ्रं बहुलं बहु इत्यमरः। अदभ्रं मदो येषां ते अदभ्रमदाः। भ्रमं ददति ते भ्रमदाः। अदभ्रमदाश्च ते भ्रमदाश्च ते भ्रमराश्च अदभ्रमदभ्रमदभ्रमराः। अदभ्रमदभ्रमदभ्रमराणां छलं मिषम् अदभ्रमदभ्रमरच्छलं तस्मात् अदभ्रमदभ्रमदभ्रमरच्छलतः। भ्रमदभ्रमित्यर्थः॥ १६॥

**यमकबोधिनी**—नेति—खलु निश्चितम्। स प्रसिद्धः कामिजनः कामिलोकः वसन्तनभः वसन्त एव नभः वसन्ताकाशं समीक्ष्य आलोक्य मानसमानसमानसमागमं न आप न प्राप्तवानित्यन्वयः। मनसि भवो मानसो यो मानोऽभिमानस्तेन समानः सदृशः समागमः संयोगस्तां चित्तोद्भवाभिमानतुल्यप्राप्तिमित्यर्थः। कीदृशं नभः? अदभ्रमदभ्रमदभ्रमरच्छलतो भ्रमदभ्रम्। अदभ्रमदेन बहून्मादेन अनल्पहर्षेण वा। भ्रमं कामोद्रेकलक्षणं मोहं ददति ते भ्रमदास्ते च ते भ्रमरा भृङ्गास्तेषां छलतो व्याजात् भ्रमन्ति अभ्राणि मेघा यस्मिन् तत्। श्यामलत्वात् चञ्चलत्वाच्च अलीनां च बलाहकतुल्यत्वम्। मधुलुब्धमधुपोड्डयनाकाशदर्शनेन मनसः प्रभूतमनोरथाकुलित्वात् स्वाहङ्कारसदृशप्राप्त्यभावः इति तात्पर्यम्॥ १६॥

**दीपिका**—न समेति—खलु निश्चितम्। कामिजनः विषयीजनः वसन्तनभः मधुसमयसम्बन्धि खं समीक्ष्य प्रेक्ष्य मानसमानसमागमं न आप न प्राप। मानसे मानः मानसमानः। मानसमानश्चासौ समानसमागमश्च तं कान्तासङ्गमित्यर्थः। किम्भूतं वसन्तनभ? अदभ्रमदभ्रमदभ्रमरच्छलतः बहुगर्वभ्रमप्रदद्विरेफकपटतः भ्रमदभ्रमदवारिदम्। अदभ्रं बहुलं बहु इत्यमरः। अभ्रं मेघो वारिवाह इति च॥ १६॥

**सुबोधिनी**— न समानेति—खलु निश्चये। कामिजनः कामुकसमूहः समानसमानसमानसमागमं न आप। मानसे मानो मानसमानस्तेन सह वर्तमानः समानसमानः। समानसमानश्चासौ समानः बन्धुश्च मनोवर्तिमानसहितबन्धुरिति यावत्। तस्य समागमं न प्रापेति काकुः। प्रापैवेत्यर्थः। यद्वा स कामिजनः मानसोचिते यो मानस्तेन समानस्तुल्यो यः समागमः तम्। खलु निश्चितं न प्राप। किन्तु वसन्तोद्दीपितः सन् अकालसमागमं प्रापेत्यर्थः। किं कृत्वा? वसन्तनभः वसन्तसम्बन्धिनभः आकाशं दृष्ट्वा। कीदृशं नभः? अदभ्रमदभ्रमदभ्रमरच्छलतः। भ्रमदभ्रम् अदभ्रं ददतीति भ्रमदाः। अदभ्रमदाश्च ते भ्रमदाश्च ते भ्रमराश्च तेषां छलतो व्याजात् भ्रमन्त्यभ्राणि मेघा यत्र तत्। अभ्रं मेघो वारिवाह इत्यमरः। अदभ्रं बहुलमित्यमरः॥ १६॥

**अनुवाद**—वे कामीजन भ्रमण कर रहे अत्यधिक मतवाले भ्रमरों के मेघमाला के रूप में भ्रमित कर देने से वसन्त आकाश को देखकर इच्छा के अनुकूल समागम प्राप्त नहीं कर सके? ॥ १६ ॥

**गतमत्र च येन गृहादसमुत्तरताऽन्तरतान्तरतान्तरताम्।**

**पर एव विकार इयाय वृहत्तमसन्तमसन्तमसन्तमसन्॥ १७ ॥**

**अन्वयः**—अत्र च अतान्तरतान्तरताम् असमुत्तरता येन गृहाद् गतम् असन् पर एव विकारः अन्तः वृहत्तमसन्तमसम् असन्तं तमियाय ॥ १७ ॥

**अन्वयदीपिका**—गतमिति—अत्र वसन्तसमये येन गृहाद् गतं निर्गतम् असन् अपरिहारः एव विकारः तम् इयाय। वसन्तसमये येन सहचरी परित्यक्ता रोगः तं प्रापेत्यर्थः। किम्भूतो विकारः? परः महान् शत्रुः। किम्भूतेन येन? अतान्तरतान्तरताम् असमुत्तरता। अन्यत् रतं रतान्तम्। अतान्तं च स्वल्पं च तत् रतान्तरं अतान्तरतान्तरम्। अतान्तरतान्तरस्य भावः अतान्तरतान्तरता। अतान्तरतान्तरताम् असमुत्तरता अप्राप्तवता। किम्भूतं पुरुषम्? अन्तः मध्ये वृहत्तमसन्तमसम्। अतिशयेन वृहत् इति वृहत्तमम्। वृहत्तमं सन्तमसम् अज्ञानं यस्य सः वृहत्तमसन्तमसः तं वृहत्तमसन्तमसम्। चित्ते महामोहावृतमित्यर्थः। किम्भूतं तम्? असन्तम् अविवेकिनमित्यर्थः ॥१७ ॥

**यमकबोधिनी**—गतमिति—अत्र वसन्ते येन नरेण गृहाद् भवनाद् गतं प्रोषितं चलितमिति यावत्। कीदृशेन येन? अन्तः हृदि अतान्तरतान्तरताम् अग्लानरतिविशेषत्वमसमुत्तरता अनतिलङ्घयिता। अतान्ता अनल्पा वा या रतान्तरता सम्भोगविशेषता तां समुत्तरतीति समुत्तरन्। न समुत्तरन् असमुत्तरन् तेन। अन्तरशब्दो विशेषवाची। यद्वा अन्तरशब्देन अत्र अवधिरवसरो वा यदुक्तम् अरं शीघ्रम्। अन्तरमवकाशावधिपरिधानान्तर्द्धिवरतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च[1]। अतान्तशब्दोऽत्र तमु ग्लानाविति धातोः। पर एव अन्य एवानिर्वचनीयो विकारो मरणलक्षणं तं नरम् इयाय प्राप्तः। कीदृशं नरम्? वृहत्तमसन्तमसं वृहत्तमं महत्तरं सन्तमसम् अज्ञानलक्षणम् अभितस्तमो यस्य स तथा तम्। पुनः कीदृशम्? असन्तं दुष्टम्। पुनः किं लक्षणम्? असम् अस्यते क्षिप्यते कामेनेत्यसंस्तम्। असन् इति पाठे विकारविशेषणम्। वसन्तकाले मनसा रतिं चिन्तयतो गृहान्निर्गतस्य कामिनो मरणमेवाभूदिति तात्पर्यम् ॥ १७ ॥

**दीपिका**—गतमिति—च पुनः येन पुंसा गृहाद् गतं निर्गतम् असन्तम् अविवेकिनं तं पर एव उत्कृष्ट एव विकारः विकृतिविशेषः इयाय प्राप। किम्भूतेन येन? अतान्तरतां

---

१. अमरादुद्धतोऽयम्।

स्वल्पसुरतान्तरतम् । असमुत्तरता अप्राप्तवता । किम्भूतं तम् ? अन्तः मध्ये वृहत्त-मसन्तमसम् अत्यन्ताज्ञानान्धकारम् । किम्भूतो विकारः ? असन् अक्षिपन् । ।१७ ॥

**सुबोधिनी**—गतमिति—अत्र वसन्तसमये येन पुरुषेण गृहाद्गतम् । परः शत्रुः विकार एव तम् इयाय प्राप । कीदृशेन ? अन्तः अतान्तरतान्तरताम् असमुत्तरता । अन्तः हृदि अता-न्तम् अविस्तीर्णं यद्रतान्तरं सुरतान्तरं तस्य भावस्तत्ताम् असमुत्तरता अप्राप्तवता । यद्वा अन्तः हृदि अतान्तम् असमाप्तं रतं यस्याः सा अतान्तरता अन्तर्मानसा । अनति स्वामिनं गच्छति सततं ध्यायतीति यावत् सा अतान्तरता । अतान्तश्चासौ अन्तरता चेति सा । तामसमुत्तरता अलङ्घ्यता त्यक्त्वा । तृ प्लवनसन्तरणयोरिति । किम्भूतं पुरुषम् ? वृहत्तमसन्तमसम् । वृहत्तममधिकं सन्ततममज्ञानं यस्य तम् । एवम् अस-न्तम् अविवेकिनम् । कीदृशः विकारः ? असन् अपरिहार्योऽसाधुर्वा ॥ १७ ॥

**अनुवाद**—इस समय सुखपूर्वक प्राप्त होने वाली स्वल्प रति को प्राप्त किये बिना जिसने घर को छोड़ा उस महान् अविवेकी को कोई और ही अपरिहार्य विकार प्राप्त हुआ ॥ १७ ॥

**क्रुधि कान्तवशं नवदामसमापनयापनयाऽऽप न याऽपनया ।**

**तमृतेऽनुशयेन च तामशनैरवतारवताऽऽर वताऽरवता ॥ १८ ॥**

**अन्वयः**—या अपनया नवदामसमापनयापनया क्रुधि कान्तवशं न आप तां तमृते अशनैः अवतारवता अनुशयेन च अरवता आर वत ॥ १८ ॥

**अन्वयदीपिका**—क्रुधि इति—या नायिका क्रुधि कोपे सति कान्तवशं न आप । नायिका कोपे सति वल्लभानुकूल्यं तथा न आप । वत इति खेदे । अरवता मूकता मौनत्वम् अनुशयेन पश्चात्तापेन सह अशनैः शीघ्रम् । तमृते तं कान्तं विना । तां नायिकाम् आर आप कया ? नवदामसमापनया । नवं च तत् दाम नवदाम माला । नवदाम्नः । समापनया समाप्तिः । नवदामसमापनया या अपनया नवदामसमापनयापनया व्याजेन कालं क्षपयतीत्यर्थः । किम्भूता ? या अपनया अपगतः नयो यस्याः सा अपनया । नीतिसमारहिता निर्भयेत्यर्थः । किम्भूतेन अनुशयेन ? अवतारवता अव-तारो विद्यते यस्यासौ अवतारवान् तेन अवतारवता । शीघ्रमुत्पन्नेन ॥ १८ ॥

**यमकबोधिनी**—क्रुधीति—या नारी क्रुधि रुषि सत्यां नवदामसमापनयापनया दूत्यादिभिः प्रत्यग्रपुष्पमालासमाप्तिप्रापणेन कान्तवशं प्रियाधीनत्वं नाप न प्राप्तवती । कीदृशी या ? अपनया अपगतो नयो नीतिर्यस्याः सा तथा । नवं च तद् दाम च तस्य समापनं समाप्तिस्तेन यापनं तया तथा । वतेति खेदे । तां च नारीं तं कान्तं विना अशनैर्वेगेन अवतारवता उत्पन्नेन अनुशयेन पश्चात्तापेन अरवता मूकता आर प्राप । ऋ गतौ प्रापणे च । आर आरतुः आरुः । वसन्ते हि मानादीनामधिककालावस्थायित्वात् न तन्निर्वाह इति भावः । अनुशयो दीर्घद्वेषानुतापयोरित्यमरः ॥ १८ ॥

**दीपिका**—क्रुधीति—या नायिका क्रुधि क्रोधे सति कान्तवशं नायकाधीनतां न आप न प्राप। वत इति खेदे। अरवता मौनता तमृते तं नायकं विना अनुशयेन पश्चात्तापेन सह अशनैः शीघ्रं तां नायिकाम् आर प्राप। किम्भूता? नवदामसमापनयापनया पुष्पमालाग्रथनावमानेन यापनया यापनं कालक्षेपं यातीति सा। पुनः किम्भूता? अपनया नीतिरहिता निर्भयेत्यर्थः। किम्भूतेनानुशयेन? अवतारवता उत्पत्तिवता॥ १८॥

**सुबोधिनी**—क्रुधीति—या स्त्री क्रुधि क्रोधे सति नवदामसमापनयापनया नवं च तद् दाम च नवदाम नवीनमाला। तस्याः समापनं समाप्तिस्तया यापना कालातिक्रमस्तेन कारणेन कान्तवशं न आप न प्राप। यापनं कालविक्षेप इति हैमः। कीदृशी या? अपनया अपगतो नयो नीतिर्यस्याः सा। अरवता मूकत्वम् अनुशयेन पश्चात्तापेन सह अशनैः शीघ्रं तं कान्तम् ऋते विना तां नायिकाम् आर प्राप। कीदृशेनानुशयेन? आ समन्तात् अवतारवता अवतारोऽस्यास्तीति अवतारवान् तेन इदानीमुत्पन्नेन। वत खेदे॥१८॥

**अनुवाद**—जो नई माला बनाने के बहाने व्यर्थ ही समय नष्ट करती रही और निर्भीक वह क्रोध से प्रियतम के पास नहीं गई। उसे उस (प्रियतम) के बिना शीघ्र उत्पन्न हुए पश्चात्ताप के साथ नीरवता ही मिली॥ १८॥

युग्मकम्—

**नभसो विवरं कुसुमेक्षणभागतरो गतरोगतरोऽगतरो।**
**वद कान्तमवेक्ष्य यथाऽद्य मधावरमेव रमेव रमे वर मे॥ १९॥**
**श्रितेति गामनागतस्वबन्धुका[1] मनागतः।**
**पराऽऽप नाम नाऽऽगतस्तताम कामनागतः॥ २०॥**

**अन्वयः**—हे वर! अगतरो! (त्वं) गतरोगतरः कुसुमेणभाक् नभसो विवरम् अतरः। मे कान्तम् अवेक्ष्य (तथा) वद यथा अद्य मधौ (अहम्) अरम् एव रमा इव रमे। इति श्रिता परा अनागतस्वबन्धुका अतः अगतः मनाक् गां न आप नाम। कामनागतः तताम॥१९-२०॥

**अन्वयदीपिका**—एतद्युग्मेन प्रलापोन्मादव्याधयः इति तिस्रोऽवस्थाः सूचिताः। ताः आह अनेन युग्मेन। हे वर! हे श्रेष्ठ! अगतरो! हे पर्वतवृक्ष! हे अग! हे पर्वत! हे तरो! हे वृक्ष! त्वं नभसः विवरम् आकाशाद् विवरम् अतरः तीर्णोऽसि। तस्मात् कारणात् मे मम कान्तं भर्तारम् अवेक्ष्य अवलोक्य तथा वद तथैव वद। तथा कथम्? यथा मधौ एव वसन्ते एव अहं रमा इव रमे। लक्ष्मीरिव क्रीडे। अरम् अत्यर्थं क्रीडामि। किं विधः त्वम्? कुसमेक्षणभाक् पुण्डरीकनयनकान्तिः। पुनः किम्भूतः त्वम्? गतरोगतरः गतः रोगो यस्मात् इति गतरोगः। अतिशयेन गतरोगः गतरोगतरः।

---

१. स्वबन्धुगाम्मनागत इति 'ञ' पुस्तके।

नष्टव्याधिः । इति अनेन प्रकारेण श्रिता स्थिता परा विलासिनी । अतः अस्मात् अगतः वृक्षात् मनाक् ईषदपि गां वाचं न प्राप । प्रत्युत्तरं न प्राप । किम्भूता ? अनागतस्वबन्धुका अप्राप्तस्वभर्तृका । पुनः किम्भूता ? कामनागादिति कामनागतः । स्मरसर्पात् । सा उत्तरं न अगादित्यर्थः । पूर्वश्लोके च प्रलापोक्तिः । उत्तरेणोन्मादव्याधी ॥१९-२० ॥

**यमकबोधिनी**—काचिद् निरहिणी पर्वतशिखरस्थं प्रफुल्लं वृक्षमवलोक्य कामाकुलत्वेन दूतमिव कल्पयित्वा प्राह नभस इति श्लोकद्वयेन । हे अगतरो ! हे पर्वतजातवृक्ष ! त्वं नभसः आकाशस्य विवरं छिद्रम् अतरः तीर्णवान् असि । पर्वतजातत्वात् तीर्णाकाशकुहरत्वाच्च तवात्यन्तोन्नतत्वात् दूरदर्शनसमार्थ्यमिति भावः । ननु दर्शनस्य चक्षुर्विषयत्वाद् वृक्षस्य च तद्धीनत्वात् कथं दर्शनसामर्थ्यमिति चेत् तत्राह—कीदृशस्त्वम् ? कुसुमेक्षणभाक् कुसुमान्येव पुष्पाण्येव ईक्षणानि भजते इति तथा । बहुनेत्रत्वात् त्वं दर्शने क्षम इत्यर्थः । पुनः कीदृशः ? गतरोगतरः अतिशयेन गताः रोगाः वातातपदावाग्निच्छेदकोटराद्या उपद्रवा यस्य स तथा । रोगितस्य वृद्धदर्शनाद्यसम्भवात् तव तु तद्रहितत्वात् सामर्थ्यम् । यद्वा हे गतरोगतरः । हे गतरोगवेग इति सम्बोधनम् । गतः रोगस्य तरः वेगो यस्य तत्सम्बुद्धौ । अतो मम कान्तं भर्तारम् अवेक्ष्य दृष्ट्वा वद कथय । ननु किं पतिज्ञापनेनेति चेत् तत्राह—अद्यैव इदानीमेव मधौ वसन्ते अरं द्रुतं रमा इव लक्ष्मीरिव रमे क्रीडामि । कीदृशे मधौ ? वरमे श्रेष्ठलक्ष्मीके ॥ १९ ॥ श्रितेति—इति नभस इत्यदिनोक्तप्रकारेण श्रिता अगमिति शेषः । पर्वतं प्राप्ता परा अन्या काचित् अस्मात् अगतो वृक्षात् मनाक् ईषदपि नामेति प्रसिद्धौ गां वाचं न आप न प्राप्तवतीत्यन्वयः । स्थावरत्वाद् वृक्षस्तस्यै न किञ्चिदपि उत्तरमदादित्यर्थः । ननु तर्हि किमर्थमगमाश्रितेति चेत् तत्राह कीदृशी परा ? अनागतस्वबन्धुका गृहं प्रत्यप्राप्तस्वभर्तृका । भर्तृप्राप्त्यै अतिलालसतया पर्वताश्रयणमित्यर्थः । अत एव कामनागतः कामाख्यसर्पात् ततामं अतमत् ग्लानिं जगामेत्यर्थः । विचित्रपर्वतदर्शनेन प्रवृद्धकामत्वात् ग्लाना बभूवेत्यर्थः । केचित्तु पूर्वोक्तां वाणीं श्रिता परा अतो वृक्षात् मनाग् स्तोकं नापेति योजयन्ति ॥ २० ॥

**दीपिका**—नभस इति श्रितेति युग्मम् । हे वर ! हे श्रेष्ठ ! अगतरो ! शैलवृक्ष ! त्वं नभसः विवरम् आकाशस्यान्तरम् अवतीर्णोऽसि । किम्भूतस्त्वम् ? कुसुमेक्षणभाक् पुष्पनेत्रभाक् । पुनः किम्भूतस्त्वम् ! गतरोगतरः निर्गतदुष्टरोगः । मे मम कान्तमवेक्ष्य तथा वद कथय यथा अद्य मधौ वसन्ते अरमेव अत्यर्थमेव रमेव लक्ष्मीरिव रमे क्रीडामि ॥ १९ ॥ श्रितेति—इति श्रिता वृक्षमवलम्ब्य स्थिता परा नायिका अगतः वृक्षात् मनाक् स्वल्पमपि गां वाचं न आप न प्राप । नाम इति सम्भावनायाम् । अतः हेतोः कामनागतः स्मरसर्पात् ततामं ताम्यतिस्म । किम्भूता परा ? अनागतस्वबन्धुका अनधिगतात्मरमणा ॥ २० ॥

**सुबोधिनी**—नभस इति श्रितेति युग्मम् । हे वर ! हे श्रेष्ठ ! अगतरो ! हे पर्वतसम्बन्धिवृक्ष ! त्वं नभस आकाशविवरम् अतरः तीर्णवानसि । अत्युच्चासीत्यर्थः । कीदृशस्त्वम् ? कुसुमेक्षणभाक् कुसुमान्यवेक्षणानि नेत्राणि तद्भाक् तद्युक्तः । एवं गतरोगतरः अतिशयितो रोगो रोगतरः यस्य यस्माद्वा सः । दुस्सहरोगरहित इत्यर्थः । अतो मे कान्तमवेक्ष्य दृष्ट्वा तथा वद कथय यथा अद्य मधौ वसन्ते अरमेव शीघ्रमेव रमेव लक्ष्मीरिव रमे क्रीडां करोमि । लघुक्षिप्रमरं द्रुतम् । क्षीराब्धितनया रमेत्यमरः ॥ १९ ॥ श्रितेति युग्मम् । परा उत्कृष्टा नायिका इत्यनेन प्रकारेण श्रिता आश्रिता अर्थाद् वृक्षमेव (आश्रयत्वेनाङ्गीक्रियमाणा[1]) । अतः एतस्माद् वृक्षात् मनाक् ईषदपि गां प्रत्युत्तरवचनं न आप न प्राप । कीदृशी ? अनागतस्वबन्धुका । न आगतः स्वकीयो बन्धुः भर्ता यस्याः सा । नाम निश्चये । कामनागतः काम एव नागः कृष्णसर्पः तस्मात् ततास ताम्यति स्म । अनेन प्रलापोन्मादव्याधय इति तिस्रो दशाः सूचिताः ॥ २० ॥

**अनुवाद**—हे पतझड़ आदि रोगों से रहित पर्वत में उत्पन्न श्रेष्ठ वृक्ष ! पुष्प रूपी आंखों से युक्त तुम आकाश के छिद्र को छू रहे हो । मेरे प्रिय को देख कर ऐसा कहो जिससे मैं इस वसन्त में लक्ष्मी के समान अत्यधिक रमण कर सकूं ॥ १९ ॥ इस प्रकार कहने वाली वृक्ष का आश्रय लेकर खड़ी हुई वह नायिका जिसका भर्ता नहीं आया था, वृक्ष से कोई भी उत्तर न पाकर काम रूपी सर्प से पीड़ित हुई ॥ २० ॥

**का ललना दिवसन्तं कुसुमशरमसोढ हृद्यनादि वसन्तम् ।**
**अलिभिरनादि वसन्तं दृष्ट्वा यत्राऽऽत्मनोऽर्थनादिव सन्तम् ॥ २१ ॥**

**अन्वयः**—का ललना दिवसं हृदि अनादि वसन्तं तं कुसुमशरम् असोढ । अलिभिः आत्मनः अर्थनादिव सन्तं वसन्तं दृष्ट्वा यत्र अनादि ॥ २१ ॥

**अन्वयदीपिका**—का ललनेति—का ललना कामिनी तं दिवसं तस्मिन् वसन्ते ऋतौ कुसमशरं कामम् असोढ । कामहतेः सोढा न कापीत्यर्थः । अत्र वने सन्तं विद्यमानं वसन्तं मधु दृष्ट्वा अलिभिः भ्रमरैः अनादि अरावि नादम् अकारि । उत्प्रेक्षते-आत्मनः अर्थनादिव । आत्मनः प्रार्थनादिव स्वयाचनादिव । किम्भूतं कुसुमशरम् ? हृदि मानसे अनादि सर्वदा वसन्तं स्थितमित्यर्थः ॥ २१ ॥

**यमकबोधिनी**— ननु विरहिणीनामपि कृतधैर्याणां किमिति कामग्लानिरिति चेत् तत्र कामस्य दुस्सहत्वमाह—केति—यत्र यस्मिन् दिवसे वसन्तं पुष्पसमूहं दृष्ट्वा समीक्ष्य अलिभिः भृङ्गैरनादि अरावि । कीदृशं वसन्तम् ? उत्प्रेक्षते—आत्मनः स्वस्य भृङ्गाणामिति यावत् । अर्थनादिव याचनादिव सन्तं भृङ्गयाचनयेव आविर्भूतमित्यर्थः । तं दिवसं का ललना का प्रमदा कुसुमशरं कामम् असोढ असहत । न कापीत्यर्थः । वसन्ते भृङ्गनादस्य दुःसहकामजनिहेतुत्वात् तदसहनम् । कीदृशं कुसुमशरम् ? हृदि चित्ते अनादि आदिरहितं यथास्यात् तथा वसन्तं निवसन्तम् । यदि

१. वाक्यपूर्त्यै प्रायोजि सम्पादकेनेदम् ॥

वसन्ते सभर्तृकाणामपि स्त्रीणां दुस्सहकामताया आविर्भावः किमुत पुनस्तर्हि भृङ्गनादेनोन्मूलितधैर्याणां विरहिणीनामिति भावः। तं दिवसमिति कालाध्वनोरत्यन्तसंयोगे द्वितीया। तस्मिन् दिवसे इत्यर्थः। असोढेति सहेर्लुङ् आत्मनेपदप्रथमपुरुषैकवचनम् ॥२१ ॥

**दीपिका**—का ललनेति—का ललना का नायिका तं दिवसं तस्मिन् वसन्तदिने कुसुमशरं कामबाणमसोढ सहते स्म। यत्र वने आत्मनः स्वस्य अर्थनादिव प्रार्थनादिव वसन्तं वर्तमानं वसन्तं मधुं दृष्ट्वा विलोक्य अलिभिः भ्रमरैः अनादि गुञ्जारवोऽकारि। किम्भूतं कुसुमशरम्? हृदि स्वान्ते अनादि निरन्तरं वसन्तं स्थितमिति ॥ २१ ॥

**सुबोधिनी**—केति—का ललना कामिनी तं दिवसं तस्मिन् दिवसे वसन्तर्तौ कुसुमशरमसोढ सहितवती। न कापीत्यर्थः। दिवसमिति कालाध्वनोरत्यन्तसंयोगेति द्वितीया। किम्भूतं कुसुमशरम्? हृदि मानसे अनादि सर्वदा स्थितम्। यत्र दिवसे सन्तं वर्तमानं वसन्तम् ऋतुं दृष्ट्वा अलिभिः भ्रमरैरनादि। नादोऽकारीत्यर्थः। उत्प्रेक्षते—आत्मनोऽर्थनादिव सुरतप्रार्थनादिव। तथा च कीटा अपि सुरतं प्रार्थयन्ति किमुत मानुषीति भावः ॥ २१ ॥

**अनुवाद**—इस वसंत काल के दिन में कौन सी स्त्री हृदय में निरंतर रहने वाले कामदेव को सहन कर सकती है।जिसमे भ्रमरों ने अपनी याचना की तरह विद्यमान वसंत को देखकर शब्द किया ॥ २१ ॥

**स्वयमथ मन्दारितया युक्तो युक्तं नलः स मन्दारितया।**

**आरामं दारितया मदनेन धियाऽऽपदुत्तमं दारितया ॥ २२ ॥**

**अन्वयः**—अथ सः नलः मन्दारितया मदनेन दारितया धिया दारितया युक्तः मन्दारितया युक्तम् उत्तमम् आरामं स्वयम् आपत् ॥ २२ ॥

**अन्वयदीपिका**—स्वयमिति—अथेत्यनन्तरं सः नलः स्वयम् उत्तमम् आरामम् क्रीडावनम् आपत् प्राप। किम्भूतः सः नलः? मन्दारितया युक्तः। मन्दाः अरयो यस्यासौ मन्दारिः। मन्दारेर्भावः मन्दारिता। तया मन्दारितया युक्तः। कर्तव्यविचारानभिज्ञशत्रुत्वेन युक्तः। पुनः किम्भूतः सः? दारितया युक्तः दाराः अस्य सन्तीति दारी। दारिणो भावः दारिता। तया दारितया युक्तः। स्त्रीतया संयुक्तः। किम्भूतः सः? धिया युक्तः बुद्ध्या युक्तः। किम्भूतया धिया? मदनेन दारितया कामेन पीडितया खण्डितया इत्यर्थः। किम्भूतम् आरामम्? मन्दारितया युक्तम्। मन्दाराः अस्मिन् सन्तीति मन्दारी। मन्दारिणो भावः मन्दारिता। तया मन्दारितया युक्तम्। मन्दारवृक्षसमूहसहितमित्यर्थः ॥ २२ ॥

**यमकबोधिनी**—वसन्तमुपवर्ण्येदानीं नलस्य तत्कालीनामुपवनक्रीडामाह—स्वयमिति—अथानन्तरं नलो वैरिसेनिः स्वयम् अरामम् उपवनम् आपत् प्राप्तवानित्यन्वयः। कीदृशो नलः? मन्दारितया युक्तः। मन्दाः अल्पाः निर्भाग्या वा अरयो यस्य स

मन्दारिः। तस्य भावस्तत्ता। तया युक्तः। हीनशत्रोरेवाव्याकुलत्वात् आरामक्रीडा-वसरः। मूढाल्पापटुनिर्भाग्या मन्दाः इत्यमरः। किम्भूतमारामम्? मन्दारितया युक्तम्। मन्दारा वृक्षविशेषा विद्यन्ते यस्मिन् इत्यर्थः। मन्दारा सन्ति यस्मिन्निति मन्दारी। तस्य भावस्तत्ता तया युक्तम्। पुनः कीदृशम्? उत्तमं प्रधानम्। आराम-गमनकारणमाह—पुनः कीदृशो नलः? मदनेन कामेन दारितया भिन्नतया धिया बुद्धया युक्तः उपलक्षितः। युक्त इत्यस्य सर्वत्रानुषङ्गः। पुनः कीदृशो नलः? दारितया युक्तः। दाराः अस्य सन्तीति दारी भार्यायुक्तस्तस्यभावस्तत्ता। तया युक्तः॥ २२॥

**दीपिका**—स्वयमिति—अथानन्तरं सः नलः मदनेन कामेन दारितया खण्डितया धिया बुद्धया आरामम् उपवनम् आपत् प्राप। किम्भूतो नलः? मन्दारितया युक्तः। मन्दाः अरयो यस्यासौ मन्दारिः। मन्दारेर्भावः मन्दारिता तया। नष्टशत्रुतयेत्यर्थः। पुनः किम्भूतो नलः? दारितया। कामिनीमत्तया युक्तः। किम्भूतमारामम्? मन्दारितया युक्तम्। मन्दारोऽस्यास्तीति। मन्दारिणो भावः मन्दारिता तया युक्तम्। समन्दार-वृक्षमित्यर्थः। पुनः किम्भूतम् आरामम्? उत्तमम् उत्कृष्टम्॥ २२॥

**सुबोधिनी**—स्वयमिति—अथानन्तरं स नलः स्वयं मन्दारितया युक्तं सहितं मन्दारा अस्य सन्तीति मन्दारी। मन्दारिणो भावः मन्दारिता। तया युक्तं सहितम् उत्तमं श्रेष्ठमा-राममुपवनमाप प्राप। कीदृशो नलः? मन्दारितया युक्तः। मन्दाः अरयो यस्य सन्त्यसौ मन्दारी। तस्य भावस्तत्ता। तया सहितः। कर्तव्यविचारानभिज्ञशत्रु-त्वसहितः। यद्वा मन्दश्चासौ अरिश्च मन्दारिः। तस्य भावः मन्दारिता तया। हेतोस्तृतीया। शत्रुभावेन कामेन खण्डितया धिया इत्यर्थः। एवं मदनेन स्मरेण दारितया बुद्धया युक्तः। एवं दारितया युक्तः। दाराः अस्य सन्तीति दारी। दारिणोभावः दारिता तया सहितः। स्त्रीमत्तया संयुक्तः॥ २२॥

**अनुवाद**—इसके बाद अल्पशत्रुओं वाला वह नल कामदेव के द्वारा बुद्धि के विदीर्ण हो जाने के कारण अनेक स्त्रियों के साथ मन्दार वृक्षों से युक्त उस श्रेष्ठ उपवन में गया॥२२॥

**अनुव्रता समाननं समानन्द भीमजा।**

**तमिन्दुना समाननं समाननन्दने वने॥ २३॥**

**अन्वयः**—तं समाननम् इन्दुना समाननम् अनुव्रता भीमजा समाननन्दने वने समानन्द॥ २३॥

**अन्वयदीपिका**—अनुव्रतेति—भीमजा दमयन्ती वने समानन्द तुतोष। किम्भूता भीमजा? तं नलम् अनुव्रता अनुसृता अनुगतेत्यर्थः। किम्भूतं तम्? मानेन पूजया सह वर्तमानम् आननं यस्य तं समाननम्[1]। सपूजनमित्यर्थः। किम्भूते तम्? इन्दुना समाननं

१. विद्यावती—नैतादृश्या व्युत्पत्या समाननमिति रूपस्य प्राप्तिः। अतो माननया पूजनया सह वर्तमानं समाननं प्रजाभिः सुपूजितं तं नलमित्यर्थः। मा लक्ष्मीः समं लक्ष्म्या सहितम् आननं यस्य तमित्यपि न, तमिन्दुना समाननमित्यनेन मुखवर्णनात्।

चन्द्रतुल्यवदनमित्यर्थः । किम्भूते वने ? समाननन्दने समाननन्दनं तस्मिन् समानन-न्दने । नन्दनतुल्य इत्यर्थः ॥ २३ ॥

**यमकबोधिनी**—अनुव्रतेति—वने आरामे तं नलम् अनुव्रता अनुगता भीमजा दमयन्ती समाननं मानना सहितं सादरं यथा स्यात् तथा समाननन्द सम्यक् अनन्दीत्यन्वयः । कीदृशं नलम् ? इन्दुना समाननम् । इन्दुना चन्द्रेण समं सदृशम् आननं मुखं यस्य स तथा । कीदृशे वने ? समाननन्दने समानं सदृशम् इन्द्रवनं नन्दनं येन तत्तथा तस्मिन् । मध्ययकमकम् । नगस्वरूपिणी वृत्तम् । अन्येऽपि कामिनः कामार्तिशान्त्यै सस्त्रीका उपवनान्याश्रिता इति बोद्धव्यम् । भीमजा तं नलं समाननन्द आनन्दति स्मेति तत्र आनन्दनं भाजनं तदेवोपवनगता ॥ २३ ॥

**दीपिका**—अनुव्रतेति—तं नलम् अनुव्रता अनुसृता भीमजा दमयन्ती वने उपवने समानन्द विललास । किम्भूतं तम् ? सपूजनम् । समं सलक्ष्मीकमाननं यस्येति वा । पुनः किम्भूतम् ? तम् इन्दुना चन्द्रेण समाननं तुल्यमुखम् । किम्भूते वने ? समाननन्दने । समानं तुल्यं नन्दनं देवोद्यानं यस्य ॥ २३ ॥

**सुबोधिनी**—अनुव्रतेति—समाननं मानना पूजा । तं पूज्यमित्यर्थः । इन्दुना समाननं चन्द्रसदृशमुखं नलम् अनुव्रता अनुगता अनुबद्धा वा । समा सलक्ष्मीका भीमजा दमयन्ती समाननन्दने वने । समानं सदृशं नन्दनम् इन्द्रवनं यस्य तस्मिन् वने ननन्द आनन्दं प्राप्तवती । समाननन्देति वा क्रियापदम् ॥ २३ ॥

**अनुवाद**—उस पूज्य और चन्द्रमा के समान मुख वाले नल का अनुगमन करती हुई दमयन्ती नंदन वन के समान (उस) वन में आनन्दित हुई ॥ २३ ॥

**इह रुचिरामाऽऽवलय स्वदृशमिति पृथक् प्रियस्य रामावलयः ।**

**प्राप्तारामा वलयस्फुरो गिरा यदुदरेऽभिरामा वलयः ॥ २४ ॥**

**अन्वयः**—इह रुचिरां स्वदृशम् आवलय इति पृथक् प्रियस्य गिरा वलयस्फुराः यदुदरे अभिरामा वलयः (ताः) रामावलयः प्राप्तारामा अभवन् ॥ २४ ॥

**अन्वयदीपिका**—इह रुचीति—ताः रामावलयः स्त्रीपङ्क्तयः प्रियस्य भर्तुरिति पृथक् गिरा वाण्या स्फुराः तुष्टाः बभूवुः भवन्ति स्म । इतीति किम् ? हे रामे ! हे प्रिये ! त्वम् इह मयि विषये रुचिरां स्वदृशं स्वदृष्टिम् आवलय व्यापारय कुरु । ताः काः ? यदुदरे अभिरामाः वलयः आसन् । यासाम् उदरं यदुदरं तस्मिन् यदुदरे । अभिरामा मनोहराः वलयः त्रिवलयः अभूवन् । किम्भूताः रामावलयः ? प्राप्तारामावलयः । आरामाणाम् आवलयो यासां ताभिस्ताः प्राप्तारामावलयः प्राप्तवनश्रेण्यः ॥ २४ ॥

**यमकबोधिनी**—इहेति—रामावलयः रमणीपङ्क्तयः इत्यमुना प्रकारेण पृथक् प्रत्येकं प्रियस्य भर्तुः गिरा वाचा प्राप्तारामा इत्यन्वयः । आरामं प्राप्ताः प्राप्तारामाः । भूतपूर्ववदमाद्यन्तस्य परत्वम् । अथवा प्राप्त आरामो याभिस्तास्तथेति । इतीति किम्? इह अस्मिन् उपवने रुचिरां मनोहरां स्वदृशं निजदृष्टिं त्वम् आवलय आवर्तयेति । एवं प्रत्येकं स्वभर्तुर्वाक्याद् उपवनं प्राप्ता इत्यर्थः । वीथ्यालिरवलिः पङ्क्तिरित्यमरः । रामावलय इति बहुवचनम् । आवलयेत्येकवचनं प्रत्येकं भिन्नवाक्यान्न दोषः । कीदृश्यो रामावलयः? वलयस्फुरः वलयेन मण्डलेन वलयैः कटकैर्वा स्फुरन्ति दीव्यन्ति ताः वलयस्फुराः । क्विप् प्रत्ययान्तस्फुरशब्दवत् अवाप । कः परिहार्यः? कटकं वलयोऽस्त्रियामित्यमरः । यदुदरे यासामुदरेऽपि अभिरामाः मनोरमाः त्रिवलयः उदररेखास्तास्तथा । यास्त्रिवलीसुन्दरोदरा इत्यर्थः । करोपहारयोः पुंसि वलिः प्राण्यं गजेऽस्त्रियामित्यमरः ॥ २४ ॥

**दीपिका**—इहरुचिरेति—रामावलयः स्त्रीततयः प्रियस्य भर्तुरिति पृथक् भिन्नया गिरा वाण्या स्फुरः रुष्टाः भवन्तीति शेषः । यदुदरे यासाम् उदरे यासां मध्यभागे अभिरामा मनोहरा वलयः त्रिवलयः । इतीति किम्? इह मद्विषये रुचिरां मनोहरां स्वदृशम् आवलय भ्रामय । किम्भूता रामावलयः? अङ्गीकृतो घनश्रेण्यः ॥ २४ ॥

**सुबोधिनी**—इहेति—हे सुन्दरि ! इह वने रुचिरां मनोज्ञां दृशं चक्षु आवलयस्व आवर्तय इत्यनेन प्रकारेण प्रियस्य भर्तुर्गिरा वचनेन ता रामावलयः स्त्रीश्रेण्यः पृथक् एकैकशः प्राप्तारामा आरामगता अभवन्नरण्यं जग्मुरित्यर्थः । कीदृश्यः? वलयैः कटकैः स्फुरन्तीति वलयस्फुरः । कटकं वलयोऽस्त्रियामित्यमरः । अथवा प्रियस्य वचनेन स्फुरस्तुष्टा बभूवुः । कथं भूताः? प्राप्तारामावलयः प्राप्तः आरामाणाम् आवलयो याभिस्ता इत्यर्थः । ताः काः? यदुदरे यासामुदरेऽभिरामाः सुन्दरा वलयः त्रिवली इत्यर्थः । करोपहारयोः पुंसि वलिः प्राण्यं गजेऽस्त्रियामित्यमरः ॥ २४ ॥

**अनुवाद**—इस सुन्दर उद्यान में अपनी दृष्टि लगाओ । ऐसे प्रत्येक के लिए कहे गए प्रिय के वचनों से कंगनों के कारण स्फुरित होने वाली, जिनके उदरों में सुन्दर त्रिवलियां थीं, उन स्त्रियों की श्रेणियां उपवन में पहुंची ॥ २४ ॥

**नवकुसुमानमनागा गन्तुं नैच्छत् परा समानमना गाः ।**

**अजनि पुमानमनागाऽऽश्रित्य स सत्कुसुमदानमानमनागाः[1] ॥ २५ ॥**

**अन्वयः**—समानमना परा नवकुसुमानमनागाः गाः गन्तुं नैच्छत् । स पुमान् अमनाक् सत्कुसुमदानमानम् आश्रित्य अनागाः अजनि ॥ २५ ॥

**अन्वयदीपिका**—नवकुसुमेति—यः पुमान् अमनाक् शीघ्रं नवकुसुमदानसन्मानमाश्रित्य अनागाः अजनि निरपराधो जातः । पदादेः कर्त्रर्थेऽपीण् वक्तव्यः । अजनि जात

१. नवकुसुमेति ख पुस्तके पाठः । लसत्कुसुमेति च 'ञ' पुस्तके ।

इत्यर्थः । नवानि जातानि कुसुमानि नवकुसुमानि । नवकुसुमानां दानं नवकुसुमदानम् । नवकुसुमदानेन सन्मानम् आश्रित्य स्वीकृत्य अङ्गीकृत्य । किम्भूतः सः? अनागाः । न विद्यते आगः अपराधो यस्यासौ अनागाः । निरपराधी आसीत् । परा कामिनी गाः भूप्रदेशान् गन्तुं नैच्छत् । किम्भूताः गाः? नवकुसुमानमनागाः । नवकुसुमैः आनमनं येषां ते नवकुसुमानमनाः । अगाः वृक्षाः यासु ताः नवकुसुमानमनागाः । नवकुसुमानतवृक्षाः । किम्भूता परा? समानमनाः । साभिमानचित्ता ॥२५ ॥

**यमकबोधिनी**—नवेति—परा अन्या काचित् स्त्री नवकुसुमानमनागाः गाः भूमिं गन्तुं नैच्छत् न इयेष । नवैः प्रत्यग्रैः कुसुमैः प्रसूनैः आनमनं सम्यक् नम्रता येषां ते नवकुसुमानमनाः । तथाभूताः अगाश्चम्पकादयो वृक्षाः यासु तास्विति द्वितीयाबहुवचनम् । ननु कामिनीनाम् अतिप्रियत्वात् कथं पुष्पावचयाय तत्र गन्तुं नाकाङ्क्षदिति चेत् तत्राह—समानमनाः समानं मानसह्तिं मनो मानसं यस्याः सा तथा । तेषामपि प्रियापराधेन मानवतीत्यर्थः । ननु वसन्ते कामिनीरहितस्य कामिनोमहद्दुःखाविर्भावात् मरणमेव सम्भवेदितिं चेत् तत्राह—स तस्याः मानिन्याः पतिः पुमान् पुरुषः अमनाक् अनल्पं सत्कुसुमदानमानमाश्रित्य अनागाः अनपराधः अजनि जातः । सत्कुसुमानां दानैर्मान आदरस्तं समृद्धिमद्वनं गन्तुमनिश्चिन्त्याः कस्याश्चित् स्त्रियः पतिः स्वयं बहुपुष्पाण्याहृत्य दत्त्वा मानापनोदनेनात्मवशामकरोदिति तात्पर्यम् ॥ २५ ॥

**दीपिका**—नवकुसुमेति—समानमना मानसहितान्तःकरणा अपरा नायिका गाः भूप्रदेशान् गन्तुं यातुं नैच्छत् न इयेष । किम्भूता गाः? नवकुसुमानमनागाः । नवकुसुमैर्नूतनपुष्पैरानमनं नीचैर्गमनं येषां तादृशा अगा वृक्षा यासु ताः गाः नवकुसुमानमानागाः गाः । नायकः अमनाक् वारं वारं सत्कुसुमदानम् उत्कृष्टकुसुमदानसन्मानम् आश्रित्य अङ्गीकृत्य अनागाः निरपराधः अजनि जातः ॥ २५ ॥

**सुबोधिनी**—नवेति—नवकुसुमानमनागाः नवैः कुसुमैरानमन्तीति नवकुसुमानमनास्तादृशा अगा वृक्षा यासु ताः गाः वनभुवः गन्तुं यातुं परा अन्या स्त्री नैच्छन्नासीदिति[१] । कीदृशी? समानमनाः समानं मानसहितं मनो यस्याः सा । कृतमानेत्यर्थः । स पुमान् सापराधः पुरुषः अमनाक् अनल्पं सत्कुसुमदानमानं सुकुसुमानां दानमेव मानः सम्मानता तामाश्रित्य अनागा निरपराधः अजनि जातः । स पुष्पदानं गन्तुमनिश्चित्याः मानिन्याः स्वावचितसत्पुष्पदानेन मानमपाचकार । सत्कुसुमदानमदानमिति पाठे पुष्पमालादानमाश्रित्येत्यर्थः ॥ २५ ॥

**अनुवाद**—रुठी हुई वह नायिका, जिनमें नए पुष्पों के कारण नम्रता आ गई थी ऐसे वृक्षों से युक्त वनभूमि में जाने को तैयार नहीं हुई । वह अपराधी पुरुष सुन्दर फूलों को देकर निरपराध हो गया ॥ २५ ॥

---

१. विद्यावती—नैच्छन्नासीदिति नेच्छावती बभूवेत्यस्मिन्नर्थे स्यात् । तथात्वेऽपसिद्धिरर्थभ्रमश्च ।

त्रिभिः कुलकम्

**रुषितं सखि सादममुष्य लसत्तनुतेतनुते तनु ते तनुते[1] ।**
**न न वाननवाननवाननवागिह ते चरणे मृतिमेष्यति सः ॥ २६ ॥**
**अपि चैत्य नगानवतानवता नवता न बताऽस्ततरा मधुना ।**
**इह सौख्यमगोचरमाऽऽचर मा च रमा चरमाऽस्य न रम्यतरा ॥ २७ ॥**
**इति लालिकयाऽलिकयातकचैरतिकालिकयाऽलिकया कथिता ।**
**दयितं समया समयादपरा व्यहरत् समया स मया च तया ॥ २८ ॥**

**अन्वयः—**हे लसत्तनुतेतनुते सखि ! ते तनु रुषितम् अमुष्य सादं न तनुते ? सः वाननवाननवान् अनवाक् इह ते चरणे मृतिं न एष्यति ? ॥ २६ ॥ अपि च अवतानवता मधुना नगान् एत्य नवता न अस्ततरा (अतः) अगोचरं सौख्यम् आचर । अस्य चरमा च रमा मा रम्यतरा न (भवति) ॥ २७ ॥ इति अलिकयातकचैः अतिकालिकया (इत्याख्यया) आलिकया कथिता (सा) अपरा दयितं समया समयात् । सः मया च तया व्यहरत् ॥२८ ॥

**अन्वयदीपिका—**अपीति, रुषीति, इतीति त्रिभिर्विशेषकम् । केनचित् प्रेयसा पुरुषेण प्रियवचनैः प्राप्तया तया सह चिक्रीडेति श्लोकत्रयस्य तात्पर्यार्थः । अपीति सम्भावनायाम् । मधुना वसन्तेन अगान् वृक्षान् एत्य प्राप्य । बतेति खेदे । नवता सौन्दर्यं न अस्ततरा त्यक्तम् । किम्भूतेन मधुना ? अवतारवता । अवतारो विस्तारो विद्यते यस्यासौ अवतारवान् तेन अवतारवता । विस्तारवतेत्यर्थः । हे सखि ! यतः कारणात् अस्य वसन्तस्य रमा लक्ष्मीः चरमा अन्त्या श्रीः रम्यतरा न शोभनतरा न । अतिशयेन रम्या इति रम्यतरा । अतः कारणात् हे सखि ! इह वसन्ते त्वम् अगोचरं सौख्यं मा आचर । निर्विषयं सौख्यं मा आचर मा कृथाः । सौख्यं कान्तगोचरं दृष्टिविषयं कुर्वित्यर्थः ॥ २६ ॥ रुषितमिति—हे लसत्तनुते लसन्ती चासौ तनुश्च लसत्तनुः । लसत्तनोर्भावः लसत्तनुता । लसत्तनुतया इता प्राप्ता नुतिः स्तुतिः यया सा लसत्तनुतेतनुतिः । तस्याः सम्बोधनं हे लसत्तनुतेतनुते । हे सखि ! इह वसन्ते ते तव अमुष्य भर्तुः सादं खेदं तनुते विस्तारयति । तव क्रोधः दयितस्य क्लेशकरो भवति । सः ते तव भर्ता ते चरणे मृतिं न एष्यति इति न किन्तु एष्यति प्राप्स्यति । किम्भूतः सः ? वाननवाननवान् वानं शुष्कं नवम् आननं विद्यते यस्य सः वाननवाननवान् । शुष्कमुखवान् । पुनः किम्भूतः सः ? अनवाक् अवाचतीति अवाक् न अवाक् इति अनवाक् अनम्र इत्यर्थः ॥ २७ । । इतीति—इति अकस्मात् अपरा कामिनी दयितं भर्तारं समया समीपं समयात् । भर्तारं कान्तं समीपं ययावित्यर्थः । किम्भूता सा ? आलिकया सख्या इति अनेन प्रकारेण कथिता उक्ता । किम्भूतया सख्या ? इति पूर्वोक्तप्रकारेण लालिकया ।

१. ख पुस्तके सप्तविंशोऽयं श्लोकः । अतोऽन्वयदीपिकायामपि स एव क्रमो रक्षितः ।

लालयति सा लालिका तया लालिकया । किम्भूतया तया ? अलिकयातकचैरति-कालिकया । ललाटगकुन्तलैः । अतिनीलिमाधिकरणया । अलिके ललाटे याताश्च ते प्राप्ताश्च ते कचाश्च अलिकयातकचाः । अलिकयातकचैः अतिश्यामयेत्यर्थः । पुनः किम्भूतया तया ? मया लक्ष्म्या समया तुल्यया ॥ २८ ॥

**यमकबोधिनी**—प्रियाविरहव्यथासहनासमर्थेन केनचित्तन्मानापनोदनाय नियुक्ता सखी च मृदुवचनैस्तामनुनयन्ती प्राह रुषितमिति श्लोकद्वयेन। हे लसत्तनुतेतनुते ! हे सखीति सम्बोधनद्वयम्। लसन्ती शोभमाना तनू मूर्तिर्यस्याः सा तथा। तस्या भावस्तत्ता। तया इता प्राप्ता नुतिः स्तुतिः यया सा। तस्याः सम्बोधनम्। हे लसत्तनुतेतनुते। हि विराजमानमूर्तित्वात् प्राप्तश्लाघे ! ते तवाऽतनु बहुरुषितं क्रोधोऽमुष्य अस्य तव भर्तुः सादं खेदं तनुते विस्तारयति। अतस्त्वच्चरणप्रतिपा-तनत्यक्तक्रोधां भवतीं प्रियो लभतामिति भावः। नन्वत्यन्तापराधित्वात् कृतचरण-प्रणिपातजातमप्यनङ्गीकार्यमिति चेत् तत्राह—स तव भर्ता इह वसन्ते तव चरणे पादे अनवाक् अनधोमुखो मृतिं मरणं न एष्यति इति न अपि तु एष्यति गमिष्यत्येव। अतस्तन्मरणवञ्चनाय अवश्यं क्रोधः परित्याज्य इति भावः। न अवाक् अनवाक्। ते चरणे अकृतनमस्कार इत्यर्थः। स्यादवाङप्यधोमुख इत्यमरः। खेदचिह्नमाह—कीदृशः सः ? वाननवाननवान् वानं ग्लानं च नवाननं नूतनमुखमिति वाननवाननम्। तदस्यास्तीति वाननवाननवान्। शुष्कनूतनमुखयुक्तः। वानं शुष्के गतौ गन्धे इति वैजयन्ती। शुष्केऽपि वाते वातं चेति शब्दप्रभेदः कृतः। अथवा वानेन स्तवनेन युक्तं नवाननं विद्यतेऽस्येति। वा गतिगन्धनयोरिति धातोर्ल्युट्प्रत्ययान्तो वानशब्दो गन्धनशब्दः स्तवनार्थवाचित्वादपि वानशब्देन स्तवनं ज्ञेयम् ॥ २६ ॥ अपीति—अपि चेति सखी एव पुनः कथयति—मधुना वसन्तेन नगान् वृक्षान् एत्यावृज्य नवता नवीनता न अस्ततरेत्यन्वयः। अतिशयेन अस्ता इति अस्ततरा। नातिशयेन निर-स्तेत्यर्थः। कीदृशेन मधुना ? अवतानवता विस्तारो विद्यतेऽस्मिन्निति तथा तेन। विस्तरणशीलेनाऽपि वसन्तेन नूतनता न निरस्ता। किन्तु इदानीं नवीन एव वसन्तोऽस्तीत्यर्थः। बतेत्यव्ययम्। हे सखीह वसन्ते—अगोचरम् इन्द्रियातीतम् एवं करिष्यामीति मनोरथलक्षणं सौख्यं सुखत्वम् आचर। मा तिष्ठस्व। अङ्गस्थ-प्रतिज्ञानेऽस्य वसन्तस्य चरमा पश्चात् कालीना प्रवृद्धपुष्पभ्रमरपिकादिलक्षणा रमा शोभा न रम्यतरा नातिशयेन रम्या। विरहिणीनामिति शेषः। अतो यावद्विरहिणी-शत्रुर्वसन्तो नवीनत्वलक्षणवान् लतादिप्रवृद्धिलक्षणप्रगल्भतां तनोति तावन्मनोर-थान् परित्यज्य प्रियं भजस्वेति तात्पर्यम्। बहुबलस्य शत्रोर्दुर्जयत्वान्मरणसम्भव इति मानिन्या भीतिदर्शनम् ॥ २७ ॥ इतीति—इत्यमुना प्रकारेण आलिकया वयस्या कथिता उक्ता अपरा अन्या स्त्री दयितं समया प्रियं निकषा समीपे समयात् समव्राजीत्। प्रियसमीपमगादित्यर्थः। कीदृश्या आलिकया ? लालिकया लालयतीति लालिका तया। लल क्रीडायां लाल पालने वा। पुनः कीदृश्या ?

अलिकयातकचैः अतिकालिकया। अलिकं ललाटं याता केनापि लीलाभिनयेन ललाटं प्राप्ता ये कचाः केशास्तैः अतिकालिकया। अतिश्यामलया। अथवा अतिक्रान्ता कालिका मेघजालं यया सा तथा तया। स्निग्धत्वान्मेचकत्वाच्च मेघघटायाः कचसादृश्यम्। मेघजालेऽपि कालिकेत्यमरः। अथवा कीदृश्या आलिकया? अलिकयातकचैरुपलक्षितया। पुनः कीदृश्या? अतिकालिकया। अतिक्रान्ता केनापि चातुर्यविशेषेण उल्लङ्घिता कालिका गौरी यया सा तथा तया। यद्वा अतिक्रान्ताविगणय्यैवोल्लङ्घिता कारिका मानिनीकृततिरस्कारजनितातीव्रवेदना यया सा तथा तया। कारिका यातनावृत्योरित्यमरः। रलयोरभेदः। स दयितः तया अपनीतमानया कान्तया सह व्यहरत् चिक्रीड। कीदृश्या तया? मया लक्ष्म्या सदृश्या अतिसुन्दर्येत्यर्थः। तोटकवृत्तम्॥ २८॥

**दीपिका**—रुषितमिति इति लालिकयेति अपि चैत्येति—त्रिभिर्विशेषकम्। हे सखि! हे लसत्तनुतेतनुते! लसत्तनुतया शोभमानाङ्गत्वेन इता प्राप्ता नुतिः स्तुतिः यया सा। तस्याः सम्बोधनम्। ते तव स्वल्पोऽपि रोषः अमुष्य नायकस्य सादं दुःखं तनुते विस्तारयति। सः इह वसन्ते ते तव चरणे तव पादे मृतिं मरणं नेष्यति न प्राप्स्यति इति न। अपितु एष्यत्येवेत्यर्थः। किम्भूतः सः? वाननवाननवान्। वानं शुष्कं नवम् आननं मुखम् अस्य। आने फले शलाटुः स्यात् शुष्के वानम् उभे त्रिषु इत्यमरः। पुनः किम्भूतः सः? अनवाक् अनम्रः॥ २६॥ बत इति खेदे। मधुना वसन्तेन नगान् वृक्षान् एत्य प्राप्य नवताऽपि नव्यताऽपि न अस्ततरा नातिशयेन त्यक्ता। चकारः समुच्चये। किम्भूतेन मधुना? अवतानवता विस्तारवता। इह अगोचरं सौख्यम् आचर। कान्तदृग्विषयरहितं सौख्यं व्याहर। च पुनः अस्य वसन्तस्य चरमा रमा अन्त्या रमा श्रीः न रम्यतरा न शोभनतरा॥ २७॥ इति लालिकयेति—इत्युक्तप्रकारेण आलिकया सख्या कथिता उक्ता अपराधिनं नायकं कान्तसमीपं समयाद् अगच्छत्। च पुनः स दयितः मया समया लक्ष्म्या तुल्यया तया व्यहरत् विलसति स्म। किम्भूतया अलिकया? अलिकयातकचैः ललाटप्राप्तकेशैः अतिकालिकया अतिश्यामया॥ २८॥

**सुबोधिनी**—रुषितमिति—नायकप्रेरितदूतीवाक्यम्। हे सखि! लसत्तनुते लसन्ती तनुर्यस्या असौ लसत्तनुस्तद्भावस्तत्ता। तया इता प्राप्ता नुतिः स्तुतिः यया सा तत्सम्बुद्धिः। कमनीयशरीरतया लब्धस्तुते! ते तव तनु स्वल्पमपि रुषितं रोषोऽमुष्य तव प्रियस्य सादम् अवसन्नतां तनुते विस्तारयति। त्वयि रुष्टायामस्य बहुदुःखं जायत इति भावः। स तव कान्तः इह अस्मिन् वसन्ते ते चरणे त्वत्पदेऽनवाक् अवाक् अधोमुखः अनवाक् अभिमुखः। अथवा अवाक् मूकः अनवाक् स्तुतिवाक्यसहितः सन्नित्यर्थः। कथं भूतः? वाननवाननवान् वानं शुष्कं नवं यौवनोदयसुन्दरम् आननं मुखं यस्य। स एतादृशः स प्रियः मृतिं न एष्यति इति नापि तु एष्यत्येव मरिष्यत्येव। त्वच्चरणपतितस्यास्य प्राणास्तिष्ठन्ति। नो चेन्मदनव्यथया शुष्कमुखस्य मरणमेवेति भावः। मृतिमित्यत्र नतिमिति पाठे नतिं प्रणामम् एष्यतीत्यर्थः। स्तवःस्तोत्रं नुतिः

स्तुतुरित्यमरः। वानं शुष्के गतौ गन्धे इति वैजयन्ती। पराङ्मुखः पराधीनः। स्यादवाङप्यधोमुख इत्यमरः। इण गतावित्यस्य एष्यति ॥ २६ ॥ पुनस्तामेवाह—अपीति—हे सखि ! अवतानवता अवतानो विस्तारोऽस्यास्तीति अवतानवान्। तेन मधुना वसन्तेन नवता नवीनता अस्ततरा अतिशयेन त्याज्या। बताश्चर्ये। किन्तु वसन्तो नूतनतां त्यजिष्यत्येवेति भावः। किं कृत्वा? नगान् वृक्षान् एत्य प्राप्य। इह प्रौढवसन्तेऽगोचरं वक्तुमशक्यं सौख्यं लभस्व। अस्य वसन्तस्य चरमा पश्चिमा लक्ष्मीश्च पुनः शोभा रम्यतरा न भवति। वसन्तमध्ये भर्त्रा सह रत्यादिकं सुखमनुभूयताम्। पश्चात्तनी शोभा न भव्येति भावः। नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः। नवीनो नूतनो नवः[१]। आचरेति चर गतिभक्षणयोरित्यस्य लोटि ॥ २७ ॥ इतीति—इत्यनेन प्रकारेण लालिकया लालयन्त्या अलिकया सख्या कथिता उक्ता अपरा स्त्री दयितं समया भर्तुः समयात् अगात्। दयितमिति समयायोगे द्वितीया। समयान्तिकमध्ययोरिति मेदिनी। समयादिति यातेर्लुङि। च पुनः स कामुकः मया लक्ष्म्या समया तुल्यया तया स्त्रिया सह व्यहरद् विचिक्रीड। कीदृश्या? अलिकयातकचैः अलिके याता ये कचाश्चूर्णकुन्तलास्तैः कालिकया श्यामलया। सख्या वा विशेषणम्। ललाटमलिकं गोधिः कचः केशः शिरोरुह इत्यमरः ॥ २८ ॥

**अनुवाद**—हे शोभायमान शरीर की कृशता से स्तुति पाने वाली सखि ! तुम्हारा यह थोड़ा भी रूठना उसे (नायक को) कष्ट नहीं देता? वह सूखे तरुण मुख वाला मूक यहां तेरे चरणों में मर नहीं जायेगा? ॥ २६ ॥ चारों ओर फैला हुआ यह वसन्त वृक्षों को पाकर अभी नवीनता को नहीं छोड़ रहा। इसलिए (संभोग आदि) अगोचर सुखों को प्राप्त करो। इसकी बाद की शोभा बहुत अच्छी नहीं होती ॥ २६ ॥ इस प्रकार निरंतर मनाने वाली, जिसके ललाट में केश आ गए थे ऐसी उस अति श्यामल सखी द्वारा कहे जाने पर वह विलासिनी प्रिय के समीप गई। और वह (नायक) लक्ष्मी के समान सुन्दर उस (नायिका) के साथ क्रीड़ा किया ॥ २८ ॥

**अतिरुचिमानस्तबकः सरस्तटोऽयं[२] विचीयमानस्तबकः[३]।**

**इह खलु मानस्तव कः प्रियामिति परोऽनयत् समानस्तवकः[४] ॥ २९ ॥**

**अन्वयः**—अयम् अतिरुचिमान् अस्तबकः विचीयमानस्तबकः सरस्तटः। इह तव को मानः? खलु समानस्तवकः प्रियां परः अनयत् ॥ २९ ॥

**अन्वयदीपिका**—अतिरुचिमानिति—परः कामी इति उक्त्वा प्रियां कामिनीं सरस्तटम् अनयत् प्रापयत्। इतीति किम्? हे प्रिये अयं सरस्तटः तडागतटः अतिरुचिमान् वर्तते।

---

१. अमरादुद्धृतोऽयम्।

२. सरित्तटोऽयमिति 'ञ' पुस्तके पाठः।

३. निचीयमानेति 'ञ' पुस्तके

४. विद्यावती—समानस्तवकः इत्यत्र स्वार्थे कः। मानस्तुतिभ्यां सह वर्तमानः कश्चित् कामी प्रियां प्रलोभयन् विजनेऽनयत् इति विवक्षति।

किम्भूतोऽयम् ? अस्तबक: ? अस्ता: गता: बका: पक्षिविशेषा: यस्मात् स अस्त-बक: । निर्गतकलहंस इत्यर्थ: । पुन: किम्भूतोऽयम् ? विचीयमानस्तवक: । विचीय-माना: हस्तग्राह्या: स्तवका: पुष्पगुच्छा: यस्मिन् असौ विचीयमानस्तवक: । सुखग्राह्यपुष्पगुच्छ: । हे कामिनि ! खलु इति निश्चितम् । इह कान्ते तव क: मान: ? बवयोरैक्यम् । किम्भूत: पर: ? समानस्तवक: । मानश्च स्तवकश्च मानस्तवकौ । मानस्तवकाभ्यां सह वर्तमान: समानस्तवक: । सपूजास्तुति- रित्यर्थ:[1] ॥२९ ॥

**यमकबोधिनी**—तच्चरितं समाप्येदानीं पृथकं कामिचरितमाह अतिरुच्यादिना—खल्विति अनुनये । हे प्रिये अयं सरस्तट: अतिरुचिमान् अतिद्युतियुक्त: । रुचेराधिक्यमे-वाह—कीदृशोऽयं सरस्तट: ? अस्तबक: । अस्ता: नुन्ना: बका यस्मात् स तथा । बकरहित इत्यर्थ: । बकानामभावकथनेन हंसादिसत्पक्षियुक्तो द्रष्टव्य: । पुन: कीदृश: ? विचीयमानस्तवक: विचीयमाना: कामिनीजनैर्मृग्यमाणा: अवचिता: स्तबका गुच्छा: यस्मिन् तत्तथा । पुष्पसङ्घातो गुच्छ: । परोऽन्य: कश्चित् कामीत्यमुना प्रकारेण प्रियां वल्लभाम् अनयत् । पूर्वं सरस्तटवर्णनेन सरस्तटं नीतवान् इति ज्ञातव्यम् । इतीति किम् ? हे कान्ते ! इह वसन्ते तव को मान इति । कीदृश: कामी सरस्तटो वा ? उभयविशेषणम् । समानस्तवक: समान: श्रेष्ठ: स्तवक: श्लाघा यस्य स तथा ॥ २९ ॥

**दीपिका**—अतिरुचिमानमिति—अयं सरस्तट: अतिरुचिमान् परमकान्तिमान् किम्भूत: सरस्तट: ? अस्तबक: निरस्तपक्षिविशेष: । पुन: किम्भूत: सरस्तट: ? विचीयमान-स्तवक: हस्तप्राप्यपुष्पगुच्छ: । खलु निश्चितम् । इह अस्मिन् प्रदेशे तव क: मान: । (मानो) न कर्तव्य इत्यर्थ: । इति अनेन प्रकारेण प्रियां सरस्तटमनयत् । किम्भूत: पर: ? समानस्तवक: । मानस्तवकाभ्यां नायिकासन्मानस्तुतीभ्यां सह वर्तमान: । । २९ ॥

**सुबोधिनी**—कश्चिन्मानवतीमानयन् आह अतीति—हे सुन्दरि ! अयं विचीयमानस्तवको वीभि: पक्षिभिर्भ्रमरप्रभृतिभिश्चीयमाना मकरन्दपानान्विष्यमाणस्तवका: पुष्पगुच्छा यस्मिन् तादृक् । अथवा विचीयमाना अवचीयमाना: समृद्धा: स्तवका: यस्मिं-स्तादृक् । अस्तबक: अस्ता: बका यस्मात् तादृक् सरस्तटस्तडागतीरम् । अतिरुचि-मान् अतिसुन्दर: । इहास्मिन् स्थले तव क: खलु निश्चितं क: प्रस्ताव: । इति क्रमेण समानस्तवक: समान: मानसहित: सादर इति यावत् । स्तवक: स्तुतिर्यस्य स तादृक् कामुक: प्रियां स्त्रियम् अनयत् अनैषीत् । पुष्पवासलोभभ्रमद्भ्रमरे बकादिराहित्येन निर्जने मानोऽनुचित इत्येतादृशान्यस्थानलाभादिह सम्भोगो भवत्विति हस्ते गृहीत्वा कुञ्जमविशदिति भाव: । अनयदिति नयो लङि ॥ २९ ॥

**अनुवाद**—यह (सामने) ही अति सुन्दर, जिससे बकुले चले गए हैं तथा हाँथें से ही मिल जाने वाले फूलों के गुच्छे हैं (ऐसा) तालाब का किनारा है । यहां जाने में तुम्हें क्या आपत्ति

---

१. अत्र अस्पष्टत्वात् किञ्चित् त्यक्तम् ।

है ? ऐसा कह कर मान और स्तुति से युक्त वह कामी प्रिया को एकांत में ले गया ॥ २९ ॥

**अरुणतरपरागस्य प्रसवं प्रैक्षिष्ट न पुनरपराऽगस्य ।**
**हसितैरपरागस्य स्वैस्तिष्ठन्त्यपि लवेप्सुरपरागस्य ॥ ३० ॥**

**अन्वय**—अरुणतरपरागस्य अगस्य लवेप्सुः अपरा स्वैः हसितैः अपरागस्य अस्य अपराक् तिष्ठन्ती अपि पुनः प्रसवं न प्रैक्षिष्ट ॥ ३० ॥

**अन्वयदीपिका**—अरुणेति—अपरा कामिनी पुनः अस्य अगस्य वृक्षस्य प्रसवं न प्रैक्षिष्ट न ददर्श । कथं भूता अपरा ? अपराक् सम्मुखं तिष्ठन्त्यपि । किम्भूतस्य अगस्य ? अरुणतरपरागस्य । अतिशयेन अरुणः इति अरुणतरः अरुणतरः परागो यस्य सः तस्य । रक्ततरपुष्परजसः । पुनः किम्भूतस्य अगस्य ? स्त्रीसहितैः कामिनीसहितैः अपरागस्य अपगतस्वरागस्य[1] । कीदृशस्य अस्य प्रसवस्य ? अरुणतरपरागस्य । अरुणतरोऽतिशोणः परागः कुसुमरेणुर्यस्य स तथा तस्य परागः । परागः कौसुमो रेणुः स्नानीयादौ । प्रसवदर्शनकारणमाह पुनः कीदृशस्य अगस्य ? अपरागस्य । अपगतो रागोऽनुरागो यस्मात् तथा तस्य ॥ ३० ॥

**यमकबोधिनी**—अरुणेति—अन्या काचित् स्त्री अगस्य वृक्षस्य प्रसवं पुष्पं पुनः न प्रैक्षिष्ट नापश्यत् । कैः कृत्वा ? स्वैः हसितैः कृत्वा । किं लक्षणापरा ? हसितैरुपलक्षिता । स्वैः हसितैरपरागस्येति अगस्य विशेषणम् । हासस्याक्षेपत्वात् । स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने इत्यमरः । किं कुर्वती ? अस्य प्रसवस्य अपराक् सम्मुखं लवेप्सुरपि तिष्ठन्ती । न पराक् अपराक् प्रत्यक्षतयेत्यर्थः । लवोऽभिलावो लवने इत्यमरः पुष्पावचयमीप्सती । कीदृशस्य अस्य प्रसवस्य ? अरुणतरपरागस्य । अरुणतरोऽतिशोणः परागः कुसुमरेणुर्यस्य स तथा तस्य परागः । परागः कौसुमो रेणुः स्नानीयादौ । प्रसवदर्शनकारणमाह पुनः कीदृशस्य अगस्य ? अपरागस्य अपगतो रागोऽनुरागो यस्मात् तथा तस्य ॥ ३० ॥

**दीपिका**—अरुणतरेति—अपरा अस्य पुरो वर्तमानस्य अगस्य अशोकवृक्षस्य प्रसवं पुष्पं पुनः न प्रैक्षिष्ट न ददर्श । किम्भूतस्य अगस्य ? अरुणतरपरागस्य रक्ततरकुसुमरजसः । पुनः किम्भूतस्यागस्य ? स्वहसितैः आत्मीयैर्हासैः अपरागस्य निर्गतनिजरागस्य । किम्भूता अपरा ? लवेप्सुः पुष्पावचयेसुः । पुनः किम्भूतापरा ? अपराक् तिष्ठन्ती अपि सन्मुखा सती अपि वर्तमानापि ॥ ३० ॥

**सुबोधिनी**—अरुणेति—अपरा अङ्गना अरुणतरपरागस्य अरुणतराः अतिशयेनारुणाः परागाः कुसुमरजांसि यस्य । तादृशस्य अस्य अगस्य वृक्षस्य स्वैः स्वकीयैर्हसितैर्हासैरप-

---

१. विद्यावती—अत्र लेखकप्रमादः । स्वैः हसितैः कामिनीहसितैः अपरागस्य अपगतो निर्गतो रागो यस्य तस्य । शुक्लीभूतस्येत्यर्थः । स्त्रीसहितैः इत्यस्य स्थाने हसितैरेवोचितम् ।

रागस्य अपगतलौहितस्य अपराक् सम्मुखं लवेप्सुः पुष्पमवचिकीर्षुः तिष्ठन्त्यपि विद्यमानापि प्रसवं पुष्पं न पुनः प्रैक्षिष्ट नापश्यत्। लोहितकुसुमस्य स्वहासेन शुक्लीभूतत्वाद् विस्मयो जात इति भावः। लवोऽभिलावो लवने स्यात्। उत्पादे फले पुष्पे प्रसवे गर्भमोचने। शैलवृक्षौ नगावगावित्यमरः। ईक्षदर्शनाङ्कनयोरित्यस्मात् प्रपूर्वकाल्लुङि अटि सिचि इटि रूपम्॥ ३०॥

**अनुवाद**—लाल पराग वाले वृक्ष के पल्लवों को चाहने वाली दूसरी कामिनी अपने हास के कारण सफेद हुए इस (अशोक) वृक्ष के सामने बैठी हुई भी उसके पुष्पप्रसूति को नहीं देख सकी॥ ३०॥

**अवेक्ष्य पल्लवालयानगान् श्रितालवालया।**
**[1]लतातयेव बालया बभेऽन्यया ववाल या॥ ३१॥**

**अन्वयः**—श्रितालबालया अन्यया बालया या पल्लवालयान् अगान् अवेक्ष्य लततया इव ववाल (तया) बभे॥ ३१॥

**अन्वयदीपिका**—अवेक्ष्येति—अन्यया श्यामया षोडशवार्षिक्या बालया बभे शुशुभे। अन्यया कया? या ववाल पत्रग्रहणार्थं चचालेत्यर्थः। वलस्खलनेऽस्य धातोः प्रयोगः। किं कृत्वा? पल्लवालयान् अगान् वृक्षान् अवेक्ष्य अवलोक्य। पल्लवानाम् आलयाः[2] पल्लवालयाः। तान् पल्लवालयान्। किम्भूतया अन्यया? श्रितालवालया आश्रितवृक्षाधिष्ठानया। श्रितानि आलवालानि यया सा श्रितालवाला तया श्रितालवालया। किम्भूतयाऽनया कामिन्या? उत्प्रेक्षते। लतातया इव लतायाः भावः लतात तया लतातया। वल्लीत्वेनेव या ववाल तया शुशुभे इत्यर्थः॥ ३१॥

**यमकबोधिनी**—अवेक्ष्येति—अन्यया बालया षोडश्या प्रभवया लतातयेव वल्लीत्वेनेव बभे अशोभि। लतातया इव। लताया भावः लताता। लतातावद् भा यस्याः सा लतातयेव। कीदृश्याऽन्यया? श्रितालवालया श्रितम् आलवालम् यया सा तथा तया। अन्यया कया? या पल्लवालयान् अगान् वृक्षान् अवेक्ष्य दृष्ट्वा ववाल चालितवती। पल्लवानाम् आलयो निलयो येषु। पल्लवशब्दः पुन्नपुंसकयोः वर्तते। नगस्वरूपिणीवृत्तम्॥ ३१॥

**दीपिका**—अवेक्ष्येति—तया अन्यया परया बालया षोडशवार्षिक्या स्त्रिया लतातयेव लतायाः भावः लताता तयेव वल्लीत्वेनेव बभे शुशुभे। तया कया? या पल्लवालयान् किसलयगृहान् अगान् वृक्षान् अवेक्ष्य विलोक्य ववाल चचाल। पल्लवग्रहणार्थमित्यर्थः। किम्भूतया तया? श्रितालवालया आश्रितवृक्षमूलया॥ ३१॥

---

१. लताभयेवेति 'त्र' पुस्तके पाठः

२. विद्यावती—आलयो गृहम्। पल्लवानाम् आलयो गृहम्। तत्रस्थान् अगान् वृक्षान् अवेक्ष्येति स्पष्टार्थः।

**सुबोधिनी**—अवेक्ष्येति—अन्यया बालया षोडशवार्षिक्या लतातया लतात्वेन रूपेण बभौ शुशुभे । अन्या का ? या पल्लवालयान् नवपत्रयुक्तान् अगान् वृक्षान् अवेक्ष्य दृष्ट्वा ववाल उल्ललास । अन्याऽपि लतातयाताश्रिलवाला आश्रयभूतान् वृक्षान् दृष्ट्वा उल्लसत्येवेति भावः । यद्वा ववाल चचालेत्यर्थः । यथा वृक्षान् अधिरोहितुं चलति तथेति भावः । वल प्राणने स्खलने वेति वातो रूपम् । कथं भूतया ? श्रितालवालया पल्लवानयनार्थम् आश्रितम् आलवालं यया तयेत्यर्थः ॥ ३१ ॥

**अनुवाद**—आलबालों का आश्रय लिए हुए दूसरी बाला जो पल्लवों से युक्त वृक्षों को देखकर लता की भांति चली, वह सुशोभित हुई ॥ ३१ ॥

**कमितुः [१]कलुषाक्षिसुखार्थनभागपरागपराऽगपरागपरा ।**
**स्थितिमाप हृतः[२] स ततोऽपि पुमाननयाऽऽननयाननया न न या[३] ॥ ३२ ॥**

**अन्वयः**—अगपरागपरा कलुषाक्षिसुखार्थनभाक् अपरा या कमितुः अपराक् स्थितिम् आप । अनया ततः एव स पुमान् अपि आननयाननया न न हृतः ? ॥ ३२ ॥

**अन्वयदीपिका**—कमितुरिति—अपरा कामिनी कमितुः अपराक् स्थितिमाप । कन्या सुन्दरी भर्तुः सन्मुखं स्थानं प्रापेत्यर्थः । कमयतीति कमिता तस्य कमितुः । अनया कामिन्या तथैव तेन प्रकारेण भर्तुः अभिमुखस्थित्वेन सः पुमान् न हृत इति न किन्तु हृत एव । वशीकृत इत्यर्थः । अनया कया ? य आननयाननया आननस्य मुखस्य यानं भर्तृमुखसमीपप्रापणं तत्र नयो वैदग्ध्यं चातुर्यं यस्याः सा आननयाननया तया । किम्भूताऽपरा ? अगपरागपरा । अगस्य वृक्षस्य परागः अगपरागः । अगपरागे परा अगपरागपरा । वृक्षमकरन्दे तत्परा । पुनः किम्भूता अपरा ? कलुषाक्षिसुखार्थनभाक् । कलुषं च तत् अक्षि च कलुषाक्षि । कलुषाक्षिणः सुखं कलुषाक्षिसुखम् । कलुषाक्षिसुखस्य अर्थः कलुषाक्षिसुखार्थः । कलुषाक्षिसुखार्थनं भजते सा कलुषाक्षिसुखार्थनभाक् । रजःपतनकलुषीभूतनयनसुखप्रार्थनभाक् । पुष्परजः आकर्षयन्ती । अनेन कलुषीकृतनयनात् । इतो निरसनार्थं कान्ताभिमुखीभूत्वा मुखं प्रसारयन्ती कान्तं जहारेत्यर्थः ॥ ३२ ॥

**यमकबोधिनी**—कमितुरिति—अपरा अन्या काचित् स्त्री कमितुः कामुकस्य अपराक् सन्मुखी अगपरागपरा सती स्थितिम् आप । अगानां वृक्षाणां परागः पुष्परसस्तस्मिन् परा तत्परा । किं लक्षणा ? कलुषाक्षिसुखार्पणभाक् । कलुषे च ते अक्षिणी च त एव सुखार्पणं तद् भजतीति तथा । स कामी पुमान् तथैव अनया कान्तया न हृत इति न किन्तु हृतः । कीदृशी अपरा ? आननयाननया । आनने यानं गमनं येषां तथा कृता नया यस्याः सा तथा । मुखेन मधुरवाक्निपुणेत्यर्थः । तोटकवृत्तम् । तया अनया स

१. 'सुखार्पणभाक्' इति ग पुस्तके पाठः।
२. तथैव हृतस्स इति छ पुस्तके पाठः।
३. 'ख', 'घ', 'ङ', 'च' पुस्तकेषु त्रयस्त्रिंशत्तमोऽयं श्लोकः

पुमान् हृतो वशीकृतः । कीदृश्या ? आननस्य मुखस्य याननं पतिं प्रति प्रेषणं तत् यातीति सा आननयाननया । अथवा पुनः कीदृश्या ? आननयाननया । नयो नीतिर्यस्याः सा तथा न्याययुता ॥ ३२ ॥

**दीपिका**—कमितुरिति—अपरा कमितुः भर्तुः अपराक् स्थितिमाप प्राप । सन्मुखी स्थानं प्रापेत्यर्थः । तथैव स पुनः अनया न हृतः इति न किन्तु हृतः । अनया कया ? या आननयाननया आननस्य यानं तत्पुरम् अन्तिके प्रापणं तत् नयश्चातुर्यं यस्याः सा । किम्भूताऽपरा ? अगपरागपरा वृक्षमकरन्दतत्परा । पुनः किम्भूता अपरा ? कलुषाक्षिसुखार्थनभाक् कलुषितनेत्रयोः रजोनिराकरणरूपसुखप्रार्थनायुक्तः ॥ ३२ ॥

**सुबोधिनी**—कमितुरिति—अगपरागपरा वृक्षमकरन्ददर्शनोन्मुखी । अत एव कलुषाक्षिसुखार्थनभाक् । कलुषं परागेण यदक्षि तस्य यत्सुखं परागनिष्कासनात् तस्य या अर्थना तां भजतीति तद्भाक् । अपरा अङ्गना कमितुः कामयतीति कमिता भर्ता । तस्य अपराक् सम्मुखं स्थितं स्थानम् आप प्राप । अनया अङ्गनया स पुमान् पतिस्तथैव तेन प्रकारेण भर्तुरभिमुखस्थिततत्वेन न हृतो वशीकृतः । अनया कया ? आननयाननया । आननं मुखं तस्य यानं भर्तृमुखसमीपं प्रापणं तत्र नयो वैदग्ध्यं यस्याः सा । नयनपतितमकरन्दं दूरीकुर्विति नायकाभिमुखं प्रसारयन्ती तं जहारेति भावः ॥३३ ॥

**अनुवाद**—वृक्षों के मकरन्द के लिए उतावली उस नायिका ने पराग के कण से कलुषित हुई आंखों से पराग कण निकलवाने के लिए उसके सम्मुख बैठकर अपने मुख को उसके समीप लाने की चतुरता से उसका हरण कर लिया ॥ ३२ ॥

**व्रततीनामालीनां मध्येऽन्यो व्यचिनुताङ्गनामाऽऽलीनाम् ।**
**अप्येनामालीनां स्मिताच्च[1] जानन् मदाच्च नामाऽलीनाम् ॥[2] ॥ ३३ ॥**

**अन्वयः**—अन्यः आलीनां स्मितात् आलीनां मदात् च जानन् अपि व्रततीनाम् आलीनां (च) मध्ये आलीनाम् एनाम् अङ्गनां व्यचिनुत नाम ॥ ३३ ॥

**अन्वयदीपिका**—व्रततीनामिति—अन्यः कश्चित् विट् कामी अङ्गनां व्यचिनुत । कामिनीं विलोकयामास । किम्भूतः कामी ? एनामालीनां जानन्नपि । कस्मात् ? आलीनां स्मितात् हासात् । पुनः कस्मात् ? आलीनां भ्रमराणां मदात् । किम्भूतामेनाम् ? आलीनां सखीनाम् आलीनां लपितामित्यर्थः । नामेति प्रसिद्धौ ॥ ३३ ॥

**यमकबोधिनी**—व्रततीनामिति—अन्यः कश्चिद् विलासी व्रततीनां वल्लीनाम् आलीनां पङ्क्तिमध्ये आलीनां निलीनां प्रच्छन्ना ताम् अङ्गनां कान्तां व्यचिनुत अन्वैक्षत । किं कुर्वन्नपि ? आलीनां सखीनां स्मिताच्च हास्याच्च आलीनां भृङ्गाणां मदात् हर्षाच्च एनां जानन्नपि । नामेति प्राकाश्ये । चकाराद्द्वयैककालद्योतनार्थं लतान्तर-

१. स्मितेन इति ञ पुस्तके पाठः
२. 'ख''घ''ङ''च' 'ञ' पुस्तकेषु द्वात्रिंशत्तमोऽयं श्लोकः।

निलीनायास्तस्याः श्रमज्ञानेन सखीनां हासः । भृङ्गनादश्च तस्य एव मुखमोदानुभावात् ॥ ३३ ॥

**दीपिका**—व्रततीनामिति—अन्यः कामी व्रततीनाम् आलीनां मध्ये लतान्तरस्त्रीणां मध्ये आलीनां सखीनां स्मिताद् ईषद् हास्यात् आलीनां भ्रमराणां मदात् मन्दगुञ्जितात् । च पुनः एनां जानन्नपि कलयन्नपि ॥ ३३ ॥

**सुबोधिनी**—व्रततीति—अन्यः कामी आलीनां सखीनां स्मिताद् हासात् च पुनः अलीनां भ्रमराणां मदाज्जानन्नपि कलयन्नपि अङ्गनां स्त्रियं व्यचिनुत विलोकयामास । किम्भूताम् ? व्रततीनां लतानां मध्ये आलीनां गुप्ताम् । नाम सम्भावनायाम् । आदौ सर्वा एव लता इति ज्ञानम् आसीत् । इदानीं काचित् हसति । कुत्रचित् भ्रमराः स्वनन्ति इति ज्ञात्वा तत्राङ्गनामन्वेष्टुं गतवानित्यर्थः ॥ ३३ ॥

**अनुवाद**—दूसरा कामी सखियों की हंसी और भ्रमरों के मतवालेपन से जानता हुआ भी लताओं और सखियो के मध्य बैठी हुई उस कामिनी को देखा ॥ ३३ ॥

**स्वमनेनसमायतया व्यधिताऽऽगस्वेव कश्चन समायतया ।**

**ऋजुमानसमायतया तस्मै नाऽक्रोधि जीवनसमाय[१] तया ॥ ३४ ॥**

**अन्वयः**—कश्चन आगस्सु एव आयतया समायतया स्वम् अनेनसं व्यधित । ऋजुमानसम् आयतया तया जीवनसमाय तस्मै न अक्रोधि ॥ ३४ ॥

**अन्वयदीपिका**—स्वमिति—कश्चन कामी चिरं तस्याः स्वभार्यायाः अग्रे समायतया सकपटत्वेन अनेनसम्[२] अनपराधं व्यधित चक्रे । मायया सह वर्तमानः समायः । समायस्य भावः समायता तया समायतया । सकपटत्वेनेत्यर्थः । केषु सत्सु ? आगस्सु सत्सु । तया कामिन्या तस्मै नाक्रोधि । न कुपितम् । किम्भूतया ? समायतया । आयतया अतिदीर्घया । किम्भूतया तया कामिन्या ? ऋजुमानसं कोमलचित्तम् । आयतया प्राप्तया । किम्भूताय तस्मै ? जीवितसमाय प्राणमुख्यायेत्यर्थः ॥ ३४ ॥

**यमकबोधिनी**—स्वमिति—कश्चन पुमान् आगस्सु अपराधेषु सत्सु आयतया दीर्घया समायतया सकपटतयैव स्वम् आत्मानम् अनेनसं निरपराधिनम् अकृत । या नारी सकपटानुनयेनापि ऋजुमानसं सरलचित्ता आयत् आगच्छत् तया कान्तया तस्मै प्रियाय नाक्रोधि नाकोपि । तत्र हेतुः गर्भविशेषणम् । कीदृशाय ? जीवितसमाय प्राणतुल्याय । आयतेति अयगतौ धातोर्लङि । आत्मनेपदप्रथमपुरुषैकवचनम् ॥३४ ॥

---

१. जीवितसमायेति 'ख' पुस्तके पाठः ।

२. विद्यावती—एनःपापापराधयोःइति मेदिनी । न एनो यस्य स अनेनास्तं तादृशम् । निरपराधमित्यर्थः ।

**दीपिका**—स्वमनेनसमिति-कश्चन पुमान् आगस्सु आपराधेषु। तया तस्मै जीवनसमाय प्राणतुल्याय नाक्रोधि। न क्रुद्धम्। किम्भूतया तया? ऋजुमानसं कोमलान्तः[1] ॥३४॥

**सुबोधिनी**—स्वमिति—कश्चन कामी तस्याः स्वभार्यायाः अग्रे आयतया अतिदीर्घया समायतया कपटेन सह वर्तमानः समायः। तस्य भावः सायता तया सकपटत्वेनेत्यर्थः। आगस्सु अपराधेषु सत्स्वपि स्वमात्मानमनेनसम् अपराधरहितं व्यधित चक्रे। ऋजुमानसं कोमलचित्तम् आयतया प्राप्तया अर्थात् कामिन्या जीवनसमाय प्राणतुल्याय तस्मै भर्त्रे नाक्रोधि न कुपितम्॥ ३४॥

**अनुवाद**—किसी अपराधी कामी ने अपनी चाटुकारिता से अपने को निरपराधी सिद्ध कर दिया। कोमलचित्त वाली वह प्राणों के समान प्रिय उस पर क्रुद्ध नहीं हुई॥ ३४॥

**अभवदनेना ना विस्मयदोऽन्यो मानिनीजने नानावि।**
**अतिसुजनेनाऽनाविस्खलनं[2] यदुपवनमनेनाऽनावि॥ ३५॥**

**अन्वयः**—अन्यः अनेनाः ना मानिनीजने विस्मयदः अभवद् यत् अतिसुजनेन अनेन नानावि उपवनम् अनाविस्खलनम् अनावि॥ ३५॥

**अन्वयदीपिका**—अभवदिति—तत् तस्मात् कारणात् अन्यो ना कामी मानिनीजने विस्मयदः विस्मयप्रदः अभवत्। किम्भूतो ना? अनेनाः। न विद्यते एनोऽपराधो यस्य सः अनेनाः निरपराधः। तदिति कुतः? यत् यस्मात् कारणात् अनेन अनाविस्खलनं यथा स्यात् तथा उपवनं कपटवचनम् अनावि। णु स्तुतौ। अस्तावि स्तुतमित्यर्थः। न आविस्खलनम् अनाविस्खलनम्। प्रकटाक्षरं यथा भवति तथा। किम्भूतेन अनेन? अतिसुजनेन निपुणेन। (नानाविधाः वयः पक्षिणः[3]) यस्मिन् तत् नानावि। (नागौको वाजिविकिरविविष्करपतत्रयः इत्यमरः)॥ ३५॥

**यमकबोधिनी**—अभवदिति—अन्यः कश्चित् पुरुषः मानिनीजने मानयुक्तस्त्रीजने विस्मयदोऽभवत्। आश्चर्यदो बभूवेत्यर्थः। किं लक्षणः? अनेनाः निरपराधः। यद्यस्मात् अतिसुजनेन अतिप्रियेण अनेन कामिना तत् उपवनम् अनाविस्खलनं यथा स्यात् तथा अनावि अस्तावि। अनाविस्खलनमप्रकटचित्ताभिप्रायं वनवर्णनेन स्त्रियो मदधीनाः भवन्त्विति तात्पर्यार्थः। अनाविस्खलनादिदोषरहितोपवनस्तवनेन विस्मयप्रद इत्यर्थः। अनाविस्खलनमिति उपवनविशेषणं वा। अप्रकटच्छलमित्यर्थः।

---

१. विद्यावती—अत्र अस्पष्टं सर्वं लेखकप्रमादात्। ऋजुमानसं कोमलान्तःकरणम् आयतया। आयो लाभः तस्य भावः आयता तया। कोमलान्तःकरणप्राप्तयेत्यर्थः। कस्मै? जीवनसमाय प्राणवल्लभाय। यो हि सत्स्वपि आगस्सु अपराधेषु स्वम् अनेनसम् न एनोऽनेनास्तदृशं व्यधित चकारेत्यर्थः।

२. यत्तदुपवनम् इति ञ पुस्तके पाठः

३. कोष्ठके सम्पादकस्य।

स्खलितं छलमित्यमरः । कीदृशमुपवनम् ? नानावि । नाना बहुप्रकारा वयः वयांसि पक्षिणो यस्मिन् तत् नानाविधपक्षि । चित्रमद्भुतमाश्चर्यविस्मयश्चाद्यमुच्यते इति वैजयन्ती ॥ ३५ ॥

**दीपिका**—विस्मयदः आश्चर्यप्रदः । यत् यस्माद् अति सुजनेन अनेन अनावि नानाविधपक्षियुक्तम् ॥ ३५ ॥[1]

**सुबोधिनी**—अभवदिति—मानिनीजने विसम्यदोऽद्भुतदोऽन्योऽपरो ना पुरुषः तस्माद् हेतोरनेना अनपराधोऽभवदभूत् । यद्यस्माद् अनेनातिसुजनेन अति सुहृज्जनेन पुंसा नानावि नानाविधाः वयः पक्षिणो यस्मिंस्तादृशमुपवनमारामोऽनाविस्खलनं वर्णनावैपरीत्यमपशब्दादि तद्रहितं यथा स्यात् तथाऽनावि स्तुतम् । कृतापराधः कश्चित् पुमान् उद्यानवर्णनयैव तां प्रसीदयति इति भावः । अनावीति णु स्तुतावित्यस्य चिणि लुङि रूपम् ॥ ३५ ॥

**अनुवाद**—दूसरे निरपराधी पुरुष ने कामिनियों को विस्मययुक्त कर दिया क्योंकि अतिसज्जन इस (पुरुष) ने अनेक प्रकार के पक्षियों से सुशोभित उपवन का वर्णनयोग्य रीति से बखान किया ॥ ३५ ॥

**जनादसोः समानतः पदाहतिं समानतः ।**
**परो दधौ समानतः स्वमूर्ध्नि भासमानतः ॥ ३६ ।**

**अन्वयः**—परः (कामी) समानतः असोः समानतः समानतः भासमानतः जनात् पदाहतिं स्वमूर्ध्नि दधौ ॥ ३६ ॥

**अन्वयदीपिका**—जनादिति—परः कामी जनात् स्त्रीजनात् पदाहतिं चरणाहतिं चरणघातं स्वमूर्ध्नि स्वशिरसि दधौ । प्रसादमिति मन्यते स्म । किम्भूतात् जनात्? असुसमानतः प्राणतुल्यात् पुनः किम्भूतात् जनात् ? समानतः साभिमानात् । मानेनत सह वर्तमानः समानः । समानादिति समानतः । पुनः किम्भूतात्? भासमानतः दीप्यमानात् । किम्भूतः परः ? समानतः सम्यक् आनतः समानतः अतिनम्र इत्यर्थः ॥ ३६ ॥

**यमकबोधिनी**—जनादिति—परोऽन्यः कश्चित् कामी असोः समानतः प्राणस्य समात् प्राणादपि श्रेष्ठाद् वा कान्तालक्षणाज्जनात् । समानतः सम्यक् आनतः सन् स्वमूर्ध्नि पदाहतिं दधौ । निजमस्तके पादप्रहारं बभारेत्यन्वयः । समानाः सत्समैके स्युरित्यमरः । प्राणस्य समानादिति तुल्योपमा वा । अतिरिक्तैस्तुल्यवाचकैर्योगे तृतीयाषष्ठ्यौ स्याताम् । एकवचनान्तोऽसुशब्दः । कीदृशाज्जनात्? समानतः मानसहितात् । पुनः कीदृशात्? भासमानतः शोभमानात् । कश्चित् प्रणामादिना मानवतीं प्रियामनुनयन् तत्कृतपादप्रहारादिपीडामप्यसोढेतिश्लोकार्थः ॥ ३६ ॥

---

१. लेखकेन न सम्यक् लिखितम् ।

**दीपिका**—जनादिति—परः अन्यः असोः समानतः जनात् प्राणतुल्यात् स्त्रीलोकात् पदाहतिं चरणघातं स्वमूर्ध्नि शिरसि दधौ स्थापयामास। किम्भूतात् जनात्? समानतः मानसहितात्। पुनः किम्भूतात् जनात्? भासमानतः शोभमानात्। किम्भूतः परः? समानतः नम्रः ॥ ३६ ॥

**सुबोधिनी**—जनादिति—परोऽन्यः कामुकः असोः समानतः असुः प्राणाः तस्य समानतः सदृशात् प्राणतुल्यात् समानतः साहङ्कारात् भासमानतः शोभमानाज्जनात् पदाहतिं चरणेनाहतिम् आघातं समानतोऽतिनम्रः सन् स्वमूर्ध्नि दधौ। स्वशिरसि प्रसादमिव दधारेत्यर्थः ॥ ३६ ॥

**अनुवाद**—दूसरे कामी ने प्राणों के समान प्रिय (किन्तु) मानवश रुठी हुई उस सुन्दरी युवती के पादप्रहार को अतिनम्रता से प्रसाद की तरह अपने शिर में धारण किया ॥ ३६ ।।

**तनुच्छटोत्तमालया तया भुवोत्तमालया।**
**अहारि शीतमालयाऽनिलावधूतमालया ॥ ३७ ॥**

**अन्वयः**—उत्तमालया तया शीतमालयानिलावधूतमालया भुवोत्तमालया तनुच्छटा अहारि ॥३७ ॥

**अन्वयदीपिका**—तनुच्छटेति—तया भुवा उद्यानभुवा तनुच्छटा अहारि। उद्यानभुवा सूक्ष्मप्रदेशपङ्क्तिः जिता इत्यर्थः। किम्भूतया भुवा? उत्तमालया। उत् ऊर्ध्वतमालाः यस्यां सा उत्तमाला तया उत्तमालया ऊर्ध्वतमालपङ्क्त्या। शीतलमालयानिलावधूतमालया। मलयस्य सम्बन्धी मालयः। शीतश्चासौ मालयश्च शीतमालयः। शीतमालयश्चासौ अनिलश्च शीतमालयानिलः। शीतमालयानिलेन अवधूताः कम्पिताः मालाः कुसुमपङ्क्तयो यस्यां सा शीतमालयानिलावधूतमाला तया शीतमालयानिलावधूतमालया। किम्भूता तनुच्छटा? उत्तमाः लयाः उत्तमा सुखादिलक्षणः आलयो यस्यां सा उत्तमालया ॥ ३७ ॥

**यमकबोधिनी**—तन्विति—तया आरामसम्बन्धिन्या भुवा तनुच्छटा शरीरप्रस्वेदबिन्दुः अहारि ह्रियते स्म। किं लक्षणा तनुच्छटा? उत्तमालया उत्तमः आलयः शरीरलक्षणस्थानं यस्याः सा तथा। कीदृश्या भुवा? शीतमालयानिलावधूतमालया। मलयस्यायं मालयः स चासौ अनिलश्च शीतश्चासौ मलयानिलश्च तेनावधूताः कम्पिताः मालाः वृक्षपङ्क्तयः वा कामिजनरचिताः स्रजः। अथवा मालः क्षेत्रविशेषो वा। माला पुष्पादिबन्धे सत् मालमुन्नतभूतले इत्यभिधानचिन्तामणिः। वा माला वृक्षविशेषाः यस्यां सा तया ॥ ३७ ॥

**दीपिका**—तनुच्छटेति—तया भुवा उद्यानावन्या तनुच्छटा सुक्ष्मप्रस्वेदकणिका स्त्रीततिर्वा अहारि। किम्भूता तनुच्छटा? उत्तमालया उत्तमे सौख्यादौ आलयः निवासस्थानं यस्याः सा। किम्भूतया भुवा? शीतमालयानिलावधूतमालया शीतलदाक्षिणात्यपवनकम्पितकुसुमपङ्क्त्या ॥ ३७ ॥

**सुबोधिनी**—तनुच्छटेति—तया उद्यानभुवा उत्तमालया उद्गता उच्छ्रितास्तमालवृक्षा यस्यां सा तादृश्या । पुनः शीतमालयानिलावधूतमालया शीतो यो मालयोऽनिलो मलयगिरिसम्भवो वायुस्तेनावधूता कम्पिता माला वृक्षश्रेणी यस्यां तादृश्या भुवा उत्तरमालया उत्तमा आलयो गृहं यस्याः सा तादृशी तनुच्छटा स्त्रीसमूहोऽहारि हृता । तथा च मन्दसुगन्धिशीतलवायुसम्बन्धेन मनोहरे उद्याने कान्तसहिताः सर्वा विलासिन्यः उत्तमगृहं त्यक्त्वा रमणार्थं ययुरितिभावः । वेल्लितप्रेङ्खिताधूतचलिताकम्पिताधुतेत्यमरः । छटा कान्तौ संहतौ चेति धरणिरिति भरतः ॥ ३६ ॥

**अनुवाद**—तमालवृक्षों से युक्त उस उद्यान की भूमि में शीतल मलय वायु के द्वारा उड़ाई गई मालाओं (अथवा हिलाई गई वृक्षश्रेणियों) के कारण वधुएं (अथवा सुन्दर शरीर वाली स्त्रियों के समूह) उत्तम गृहों को छोड़ कर रमण के लिए उद्यान में आयीं ॥ ३७ ॥

**श्रितलसदारामाभिः प्राप्येति जनः स[१] विहृतिमुदारामाऽऽभिः ।**
**आरादाऽऽराऽमाऽभिस्फुरितसरोजं सरस्तदा रामाभिः ॥ ३८ ॥**

**अन्वयः**—तदा श्रितलसदारामाभिः आभिः रामाभिः अमा उदारां विहृतिम् इति प्राप्य सः जनः आरात् अभिस्फुरितसरोजं सरः आर ॥ ३८ ॥

**अन्वयदीपिका**—श्रितेति—तदा तस्मिन् समये जनः कामी जनः आरात् समीपं सरः आर प्राप । किं कृत्वा ? आभिः रामाभिः अमा सह इति उक्तप्रकारेण विहृतिं क्रीडां प्राप्य । अमेत्यव्ययं सहार्थो किम्भूतां विहृतिम् ? उदाराम् उत्कटां यथेप्सिताम् । कथं भूताभिः रामाभिः ? श्रितलसदारामाभिः आश्रितः लसत् शोभमानः आरामः क्रीडास्थानं याभिस्ताः श्रितलसदारामाः । ताभिः श्रितलसदारामाभिः । किम्भूतं सरः ? अलिस्फुरितसरोजं विकसितपद्मम् ॥ ३८ ॥

**यमकबोधिनी**—वनक्रीडां वर्णयित्वेदानीं जलक्रीडामाह—श्रितलसदिति—अथोपवनविहारानन्तरं तदा जनो लोकः रामाभिः कान्ताभिः अमा सार्द्धम् आरात् समीपे वर्तमानं सरः कासारम् आर जगामेत्यन्वयः । किं कृत्वा ? आभिः सुन्दरीभिः सह इति वक्ष्यमाणप्रकारेण उदारां महतीं विहृतिं विहारं प्राप्य । कीदृशीभिराभिः ? अभिस्फुरितसरोजम् । सर्वतो विकशितपद्मम् । व्याकोशकुशेशयत्वात् क्रीडोपयोगि दर्शितम् ॥ ३८ ॥

**दीपिका**—श्रितलसदिति—स जनः कामिजनः तदा तस्मिन् समये आभिः रामाभिः कामिनीभिः अमा सार्द्धं सरस्तडागम् आर प्राप । किं कृत्वा ? उदारां विहृतिमुत्कृष्टां प्रीतिमिति पूर्वोक्तप्रकारेण प्राप्य । किम्भूताभिः ? आरात् मध्यस्फुरितसरोजम् उल्लसितसत्कमलम् ॥ ३८ ॥

---

१. रतिम् इति 'क''छ'ञ पुस्तकेषु ।

**सुबोधिनी**—श्रितेति—जनः कामुकः श्रितलसदारामाभिः श्रितः आश्रितो लसन् देदीप्यमानः आरामो याभिस्तादृशीभिराभिरमूभिः रामाभिः स्त्रीभिः अमा सह उदारां श्रेष्ठां विहृतिं विहारम् इत्यनेन प्रकारेण प्राप्य तदा तदानीम् आरात् समीपेऽभिस्फुरित अभि सर्वतः स्फुरितानि फुल्लानि सरोजानि पद्मानि यस्मिंस्तादृशं सरस्तडागम् आर प्राप्तवान्। अमा सह समीपे चेत्यमरः ॥ ३८ ॥

**अनुवाद**—वे कामीजन सुन्दर बगीचों का आश्रय ली हुई इन कामिनियों से इस प्रकार मनोभिलषित रति प्राप्त करने के बाद समीप में ही खिले हुए कमलों से युक्त तालाब में पहुंचे ॥ ३८ ॥

**किमपः सरसीमा या त्वं धाम गुणामृतप्रसरसीमायाः ।**
**द्रुतमिति[१] स रसी मायात्यक्तो भैम्या नलश्च सरसीमाऽऽयात् ॥ ३९ ॥**

**अन्वयः**—या त्वं गुणामृतप्रसरसीमायाः धाम (सा त्वं) सरसीमाः अपः किम्? इति (वदन्) मायात्यक्तः सः रसी नलः च भैम्या (सह) द्रुतं सरसीम् आयात् ॥ ३९ ॥

**अन्वयदीपिका**—किमिति—च अपरं सः नलः रसात् अनुरागात् भैम्या दमयन्त्या सह इति उक्त्वा द्रुतं शीघ्रं सरसीम् आयात्। तडागम् अगमत्। महत् सरः इति सरसी तां सरसीम्। इतीति किम्? हे भैमि! सा त्वम् इमाः अपः किं सरसि उदकानि किमागच्छसि? सा का? या त्वं गुणामृतप्रसरसीमायाः धाम आश्रयभूता। स्थानं मर्यादा। किम्भूतः सः? मायात्यक्तः निष्कपट इत्यर्थः ॥ ३९ ॥

**यमकबोधिनी**—किमिति—केवलं कामिजन एव न तथा किन्तु स नलश्च भैम्या दमयन्त्या सह इति द्रुतं तां सरसीम् आयात्। इति शीघ्रं पद्माकरमाजगाम। इतीति किम्? इमाः सरस्यः अपो जलानि किं सरसि किं गच्छसि। भैमीं विशिनष्टि। या त्वं गुणामृतप्रसरसीमायाः धाम। गुणाः सौन्दर्यादय एव अमृतप्रसरः पीयूषविसर्पणं तस्य सीम्नोऽवधेर्धाम निकेतनम्। कीदृशो नलः? रसी गुणवान्। पुनः कीदृशः? मायात्यक्तः। माः श्रीः अयः शुभावहविधिः ताभ्याम् अत्यक्तः संयुक्तः। मायया त्यक्तो वा। माया त्यक्ता येनेति सोमपीतवद् बहुब्रीहिः। नान्त्यवर्णस्तु भेदकृत् ॥३९ ॥

**दीपिका**—किमप इति—या त्वं गुणामृतप्रसरसीमायाः शीलसुधाविस्तारमर्यादायाः धाम स्थानं सा त्वं किम् अपः पुरः वर्तमानानि जलानि सरसि अनुसरसीति प्रश्नः। इति पूर्वोक्तमिति शेषः। स रसी अभिलाषी नलः भैम्या दमयन्त्या सह सरः सरोवरं द्रुतं शीघ्रमायात् अगच्छत्। किम्भूतो नलः? मायात्यक्तः कपटरहितः ॥ ३९ ॥

**सुबोधिनी**—किमप इति—हे दमयन्ति त्वमिमा अपः जलानि गच्छसि। विहर्तुमिति शेषः। या त्वं गुणामृतप्रसरसीमा मर्यादा तस्य धाम गृहम्। अत्रामृतसुधाजलं वा अभिधीयते।

---

१. इत्थमिति 'छ' पुस्तके पाठः।

गुणामृतप्रवाहस्त्वय्येव स्थित इति भावः। इत्येवमुक्त्वा स नलो रसी रसिकः मायात्यक्तो व्याजहीनोऽदम्भी भैम्या सह द्रुतं शीघ्रं सरसीं सरोऽगादगमद्विहर्तुमिति शेषः। आपः स्त्री भूम्नि वार्वारि। त्यक्तं हीनं विधुतं समुच्छ्रितं धुतमुत्सृष्टमित्यमरः। आयादिति यातेर्लङि[१] ॥ ३९ ॥

**अनुवाद**—हे दमयन्ति ! जो तुम गुणरूपी अमृतजल के प्रवाह की सीमा का आश्रय हो, वह तुम सरोवर की शोभा इस जल के दर्शन के लिए क्यों आई हो ? ऐसा कहता हुआ अनुरागी और निष्कपट वह नल भी दमयन्ती के साथ तालाब में आया ॥ ३९ ॥

**[२]गतपङ्काः सारस्यः श्रियोऽस्य जहुर्मनोऽधिकं[३] सारस्य।**
**अपि कोकाः सारस्यस्थिताः कुरर्यश्च हंसिकाः सारस्यः ॥ ४० ॥**

**अन्वयः**—गतपङ्काः सारस्यः श्रियः सारस्यः, कोकाः, कुरर्यः च, हंसिकाः अपि सारस्यस्थिताः सारस्य अस्य मनः अधिकं जहुः ॥ ४० ॥

**अन्वयदीपिका**—गतपङ्का इति—सारस्यः श्रियः सरः सम्बन्धिन्यः शोभाः अपि च सारस्यः सारसपङ्क्तयः च अपरं कोकाः चक्रवाकाः च अपरं कुरर्यः पक्षिवशेषाः तेषाम् अङ्गनाः। च अपरं हंसिकाः हंसपत्न्यः अस्य नलस्य मनः जहुः वशीचक्रुः। किम्भूता एताः ? सारस्यः। सरसि भवाः सारस्यः। किम्भूतस्य अस्य ? सारस्य श्रेष्ठस्य। किम्भूताः श्रियः ? गतपङ्काः गतः पङ्को याभ्यस्ताः गतपङ्काः गतकर्दमा इत्यर्थः ॥४० ॥

**यमकबोधिनी**—च्युतपङ्केति—सरसः इमाः सारस्यः श्रियः पद्माकरसम्बन्धिन्यः शोभाः सारस्यास्य श्रेष्ठस्यास्य नलस्य मनो जहुः। हृदयमहार्षुः। कीदृश्यः श्रियः ? च्युतपङ्काः क्षरितनिषद्वराः पुनः किं लक्षणाः ? सुकाः शोभमानाम्भसः। कोकाश्चक्रवाकाः अपि अस्य मनो जहुः इति सर्वत्र सम्बध्यते। कुरर्यश्च पक्षिविशेषाः। हंसिकाः वरटाः, सारस्यो लक्ष्मणाः च। किंल्लक्षणास्ताः कुरर्यादयः ? सारस्यस्थिताः सरसो भावः सारस्यः। तस्मिन् सारस्ये सरसतायां स्थिताः। रलयोरभेदात् सालस्यस्थिता इति वा ॥ ४० ॥

**दीपिका**—गतपङ्का इति—सारस्यः श्रियः सरः सम्बन्धिन्यः शोभाः। च पुनः सारस्यः लक्ष्मणाः, कोकाः चक्रवाकाः कुरर्यः उत्क्रौञ्चाङ्गनाः। हंसिकाः हंसाङ्गनाः अपि अस्य नलस्य मनः चेतः जहुः हरन्ति स्म। किम्भूताः श्रियः ? गतपङ्कः निर्गतकर्दमाः। किम्भूता

---

१. विद्यावती—सरसीमाः इति पदमव्याख्यातमेव। सरस्याः तडागस्य मा श्रीः शोभेति यावत् ताः सरसीमाः सरोवरसौन्दर्यदर्शनाय किमायासीत्यर्थः।

२. च्युतपङ्का इति 'ग' 'घ' पुस्तकयोः।

३. (क) सुकाः इति 'घ' पुस्तके। 'ग' पुस्तके तु मूले 'अधिकम्' इत्येव पाठो लभ्यते किन्तु व्याख्यायां 'सुकाः' इत्येव पाठः स्वीकृतः॥ (ख) 'अधिकाः' इति 'ङ' 'ज' पुस्तकयोः पाठः। 'च' पुस्तकेऽपि तथैव।

एता: ? अधिका: बहुतरा: । पुन: किम्भूता: एता: ? सारस्यस्थिता: कमलेषु वर्तमाना: । पुन: किम्भूता एता: ? सास्य: सरसि भवा: ॥ ४० ॥

**सुबोधिनी**—गतेति—सारस्य: सरस इमा: सारस्य: । सर:सम्बन्धिन्य: श्रिय: शोभा: । कथं भूता: ? गतश्च्युत: पङ्को याभ्यस्तादृश्य: निर्मला: । अधिका: श्रेष्ठा: । यद्वा कानि जलानि अधिकृत्य वर्तन्ते ता: सारस्य: सारभूतस्य श्रेष्ठस्यास्य नलस्य मनो हृदयं जह्रु: हृतवत्य: । सारस्यस्थिता: आरस्यत इत्यारस: तस्य भाव: आरस्यम् । आरस्येन सहितं सारस्यम् । तत्र स्थिता: कृतमधुरध्वनय: । अथवा सरसो भाव: सारस्यम् । तत्र स्थिता: विख्याता: सरस्याज्जलसाहित्याद्वा स्थिता: कोका: चक्रवाका: कुरर्य: कुररपक्षिस्त्रिय:, हंसिका: हंसस्त्रिय:, सारस्य: सारसानामपि स्त्रियो मनो जह्रु: । सर:सम्बन्धिशोभादर्शनेन कोकदर्शनेन च मुद इति तात्पर्यम् । पङ्कोऽस्त्री सारकर्दमौ । सारो बले स्थिरांशे च । कोकश्चक्रवाक इत्यमर: । जह्रुरिति हृ धातोर्लिटि ॥४० ॥

**अनुवाद**—कीचड़ से रहित सरोवर की शोभा, तालाब में उत्पन्न (कमल आदि) सारस आदि, पक्षी, ध्वनि करती हुई चक्रवाकों की स्त्रियां, टिट्टिभों की स्त्रियां तथा हंसिनियां इस (नल) के मन का अधिक हरण कीं ॥ ४० ॥

**का क्षतिरस्ति मिताभि: स्फुटमद्भिरियं हि विहृतिरस्तिमिताभि: ।**
**अनतितरस्तिमि ताभि: कमेत्य यदशङ्कि धृतिभिरस्तिमिताभि: ॥ ४१ ॥**

**अन्वय:**—ताभि: अस्तिमिताभि: धृतिभि: अनतितरस्तिमि कम् एत्य अशङ्कि (यत्) इयं हि अस्तिमिताभि: मिताभि: अद्भि: स्फुटं विहृति: (नास्ति तत्) का क्षति: ॥ ४१ ॥

**अन्वयदीपिका**—का क्षतिरिति-ताभि:कामिनीभि: कं जलम् एत्य प्राप्य इति अशङ्कि इति अतर्कि इति विचारितमित्यर्थ: । इतीति किम् ? यदि एताभि: अद्भि: जलै: विहृति: क्रीडा न तर्हि न: अस्माकं स्फुटं निश्चितं का क्षतिरस्ति । का हानिरस्ति । न कापीत्यर्थ: । कथं भूताभिरद्भि: ? अस्तिमिताभि: अनिश्चिताभि: चञ्चलाभिरित्यर्थ: । कथं भूतं कम् ? अनतितरस्तिमि अमहत्तरमत्स्यपूर्णमित्यर्थ: । किम्भूताभिस्ताभि: ? अस्तिमिताभि: तिरस्कारप्राप्ताभि: । पुन: किम्भूताभि: ताभि: ? धृतिभि: धैर्यवतीभि: । किम्भूताभिरद्भि: ? मिताभि: स्वल्पाभि: ॥ ४१ ॥

**यमकबोधिनी**—केति—ताभि: स्त्रीभि: कं जलम् एत्य आगत्य अस्तिमिताभि: अनिश्चिताभि: धृतिभि: धैर्यैरशङ्कि अतर्कि । यच्छङ्कामकारि तत् मिताभि: परिमिताभि: अद्भि: जलै: का क्षतिरस्ति । को न शोभावान् न कोऽपीत्यर्थ: । हि यत: यस्मात् बुड्डनभयात् आभि: कान्तिभि: इयं विहृति: क्रीडा अस्तिमिता[1] क्षिप्तिं प्रापिता । विरतिं नीता इति यावत् । अतोऽगाधजले निमज्जनभयात् न युक्तं जलक्रीडनमिति भाव: । कीदृशं

१. विद्यावती—असु क्षेपणे इत्यस्य धातो: प्रयोग: ।

कम् ? अनतितरस्तिमि तिमयः शकुला यस्मिन् तत् तथा । अनेन क्रीडोपयोगिजलं दर्शितम् ।

**दीपिका**—का क्षतिरिति—स्फुटं प्रकटमियं विहृतिः जलक्रीडा मिताभिः अद्भिः स्वल्पैर्जलैः अस्ति भवति अस्माकं का क्षतिः । न कापीत्यर्थः । ताभिः नायिकाभिः यत्कं जलमेत्य आगत्य इति अशङ्कि तर्कितम् । अद्भिः अस्तिमिताभिः चञ्चलाभिः । किम्भूतं कम् ? अनतितरस्तिमि अल्पतरमत्स्यम् । किम्भूताभिः ताभिः ? धृतिभिः धैर्यैः अस्तिमिताभिः प्राप्ताभिः ॥ ४१ ॥

**सुबोधिनी**—का क्षतीति—अनतितरस्तिमि अत्यन्तं तरो बलं रंहो वा येषां तेऽतिरसो न विद्यतेऽतितरसस्ते स्तिमयो मत्स्यविशेषाः । तादृशं तिमि नक्रादिरहितं कं जलमेत्य प्राप्य धृतिभिः धैर्यैरस्ति त्यागमिताभिः त्यक्तधैर्याभिः । यद्वा धैर्यैः अस्तिमिताभिः अस्थगिताभिः चञ्चलाभिरित्यर्थः । ताभिः स्त्रीभिः अशङ्कि शङ्कितम् । अतर्कीति पाठे विचारितम् । यत् यस्मात् अस्ति क्षेपणम् इताभिः प्राप्ताभिः तरङ्गक्षिप्ताभिरित्यर्थः । मिताभिः लघुपरिमाणाभिः अद्भिः स्फुटं प्रत्यक्षमियं विहृतिः क्रीडा । अतः का क्षतिरस्ति न कापीत्यर्थः । तिमि नक्ररहिते सरसि तासां भयकारणमेव । राजीवः शकुलस्तिमिः । तरसी बलरंहसी । कं शिरोऽम्बुनोरित्यमरः शकि भये इति चिणि लुङि ॥ ४१ ॥

**अनुवाद**—उन तिरस्कृत धैर्यवती (स्त्रियों ने) छोटे छोटे जल जंतुओं से पूर्ण उस जल (सरोवर) में पहुंच कर सोचा यदि चंचल लहरों वाले इस थोड़े जल में अच्छी प्रकार विहार नहीं हो सका तो क्या हानि है ? ॥ ४१ ॥

**अलिर्मिलत्परागतः सरोरुहात् परागतः ।**
**मुखं मुदाऽपरागतस्तदीयमाप रागतः ॥ ४२ ॥**

**अन्वयः**—मिलत्परागतः अतः सरोरुहात् परागतः अलिः मुदा अपरागतः रागतः तदीयं मुखम् आप ॥ ४२ ॥

**अन्वयदीपिका**—अलिरिति—अलिः भ्रमरः मुदा हर्षेण अतः कारणात् रागतः स्नेहात् अपराक् सन्मुखः सन् तदीयं मुखं प्राप । तासां मुखं प्रापेत्यर्थः । किम्भूतोऽलिः ? सरोरुहात् कमलात् परागतः निवृत्तः । किम्भूतात् सरोरुहात् ? मिलत्परागतः सङ्कुचितपद्ममकरन्दात् ॥ ४२ ॥

**यमकबोधिनी**—अलिरिति—अलिः भृङ्गः अतोऽस्मात् सरोरुहात् कमलात् परागतः अपसृतः सन् रागतः अनुरागात् अपराक् सन्मुखे वर्तमानं तदीयं मुखं मुदा हर्षेण आपेत्यन्वयः । तस्याः कामिन्याः इदं तदीयम् अलेः सरोरुहात् अपसृत्यकामिनीमुखगमनेन तत्र सौरभातिरेकोऽवगम्यते । पद्मादपसरणे हेतुः—कीदृशात् सरोरुहात् ? मिलत्परागतः ? मिलन्सङ्गतीभवन् परागः स्नानीयादिरजः पुष्परजो वा येन स तथा तस्मात् । परागः कौसुमो रेणुः स्नानीयादौ रजस्यपीत्यमरः ॥ ४२ ॥

**दीपिका**—अलिरिति—अलि: भ्रमर: मुदा हर्षेण तदीयं मुखं तासामङ्गनानामाननं रागत: अनुरागत: आप प्राप। किम्भूत: अलि: ? मिलत्परागत: सङ्कुचितमकरन्दात्। अत: अस्मात् तडागसम्बन्धिन: कमलात् परागत: निवृत्त:। पुन: किम्भूतोऽलि: ? अपराक् सन्मुख: ॥ ४२ ॥

**सुबोधिनी**—अलीति—अलिर्भ्रमर: मिलत्परागत: मिलन् उल्लसन् पराग: कुसुमरेणुर्यस्मिन् तादृशात् अत: सरोरुहात् कमलात् परागत: परावृत: अपराक् सम्मुखं तदीयं स्त्रीगणसम्बन्धिमुखं मुदा हर्षेण रागतोऽनुरागादाप प्राप्तवान्। सौरभाधिक्येन कमलं विहाय तन्मुखमशिश्रियदिति भाव: ॥ ४२ ॥

**अनुवाद**—संकुचित मकरंद वाले इस कमल से लौटे हुए भ्रमर ने हर्ष से प्रेमपूर्वक उनके (कामिनियों के) मुख को प्राप्त किया ॥ ४२ ॥

**अथ कामानलिनीनां स्त्रीणां सङ्घैर्मनोरमा नलिनीनाम्।**
**विधुततमा[१] नलिनीनां पंक्तिर्विततान सम्भ्रमानलिनीनाम् ॥ ४३ ॥**

**अन्वय:**—अथ कामानलिनीनां नलिनीनां स्त्रीणां सङ्घै: विधुततमा नलिनीनां मनोरमा पङ्क्ति: अलिनीनां सम्भ्रमान् विततान् ॥ ४३ ॥

**अन्वयदीपिका**—अथेति—अथेत्यनन्तरं नलिनीनां पद्मिनीनां पङ्क्ति: श्रेणि: अलिनीनां भ्रमराङ्गनानां सम्भ्रमान् भयानि विततान् विस्तारयामास। किम्भूता पङ्क्ति: ? स्त्रीणां कामिनीनां सङ्घै: समूहै: विधुततमा कम्पिता। कथं भूतानां स्त्रीणाम् ? कामानलिनीनाम्। स्मराग्नितप्तानाम्। पुन: कथं भूतानां स्त्रीणाम् ? नलिनीनां नल: पतित्वेन विद्यते यासां ता: नलिन्य: तासां नलिनीनाम्। नलेन राज्ञा युक्तानाम्। कथं भूता पङ्क्ति: ? मनोरमा मन: रमयति सा मनोरमा। अतिसुन्दरा ॥ ४३ ॥

**यमकबोधिनी**—अथेति—अथानन्तरं स्त्रीणां सङ्घै: सीमन्तिनीनां सङ्घैर्विधुततमा अतिशयेन कम्पिता नलिनीनां पद्मिनीनां पङ्क्ति: अलिनीनां भ्रमरीणां सम्भ्रमान् विततान् विस्तारितवतीत्यन्वय:। यद्वा सम्भ्रमान् साध्वसानि। सम्भ्रम: साध्वसेऽपि स्यादिति विश्व:। भ्रमस्तथाटोप इति हलायुध:। यद्वा सम्भ्रमान् आवेशान् आवेश: संवेग: संरम्भ:। कीदृशीनां स्त्रीणाम् ? कामानलिनीनां कामस्य अनलोऽग्निर्यासां ता: कामानलिन्य:। कन्दर्पानलवतीनाम्। कीदृशी पङ्क्ति: ? मनोरमा रम्या। कीदृशीनां नलिनीनाम् ? अनलिनीनाम्। नलस्तृणविशेषो विद्यते यासु तास्तथा तासां तृणादिसम्पर्करहितानामित्यर्थ:। अथवा किल वैरिसेनियुक्तानामित्यर्थ: ॥४३ ॥

**दीपिका**—अथ कामानलिनीनामिति—नलिनी कमलिनीनां पङ्क्ति: श्रेणी अलिनीनां भ्रमरीणां सम्भ्रमान् चमत्कारान् विततान् विस्तारयामास। किम्भूता नलिलीनां

---

१. निर्धूतेति 'क''छ' पुस्तकयो: पाठ:।

पङ्क्तिः ? कामानलिनीनां स्मराग्नियुक्तानाम् । किम्भूतानां नलिनीनां पङ्क्तिः ? स्त्रीणां सङ्घैः समूहैः । विधुततमाऽत्यन्तं कम्पिता । पुनः किम्भूता पङ्क्तिः ? मनोरमा रुच्या । किम्भूतानां स्त्रीणां नलिनीनाम् नलः प्रियत्वेन विद्यते यासां तासाम् ॥ ४३ ॥

**सुबोधिनी**—अथेति—अथानन्तरं कामानलिनीनां कन्दर्पानलयुक्तानां कामुकीनाम् । नलिनीनां नलयुक्तानाम् । नलः पतित्वेन अस्या अस्तीति । नलशब्दादिनीप्रत्ययस्ततो ङीप् । स्त्रीणां सङ्घैः समूहैः । नलिनीनां कमलिनीनां पङ्क्तिः विधुततमाऽत्यन्तं कम्पिता । स्नानवशात् पद्मावचयेच्छुमनोज्ञसुन्दरीणाम् । भ्रमरीणां सम्भ्रमान् भयध्वनिं ततान । नलसहितरामान्दोलिता कम्पिता कमलिनीनामङ्गीकाराय करानतनोदिति भावः ॥ ४३ ॥

**अनुवाद**—कामाग्नि से युक्त नल को पति रूप में स्वीकार करने वाली स्त्रियों के समूह के द्वारा हिलाई गई कमलिनियों की पंक्ति ने भ्रमरियों में भय उत्पन्न कर दिया ॥ ४३ ॥

**सरःश्रियोऽन्तरङ्गतः सरोजनृत्तरङ्गतः[१] ।**
**भयं महत्तरङ्गतस्तनूजनस्तरङ्गतः ॥ ४४ ॥**

**अन्वयः**—सरःश्रियः अन्तरङ्गतः तनूजनः सरोजनृत्तरङ्गतः तरङ्गतः महत्तरं भयं गतः ॥ ४४ ॥

**अन्वयदीपिका**—सर इति—तनूजनः वधूसमूहः तरङ्गतः जलकल्लोलात् महत्तरं भयं गतः प्राप्तः । कथं भूतः तनूजनः ? सरःश्रियः अन्तरङ्गतः । सरसःश्रीः सम्पत्तिः तस्याः सरःश्रियः । जलसमूहमध्यं गतः । किम्भूतात् तरङ्गतः ? सरोजनृत्तरङ्गतः । सरोजानां नृत्तं सरोजनृत्तम् । सरोजनृत्तस्य रङ्गः तस्मात् सरोजनृत्तरङ्गतः । पद्मनर्तनस्थानादित्यर्थः ॥ ४४ ॥

**यमकबोधिनी**—सर इति—तनूजनः तन्वीजनः तरङ्गतः उर्मितः महत्तरं गुरुतमं भयं साध्वसं गतः प्राप्तः । कीदृशात् तरङ्गतः ? सरःश्रियोऽन्तरङ्गतः । सरसःश्रियः कासारस्य लक्ष्म्याः अन्तरङ्गतः मध्यगर्तात् । अथवा किंल्लक्षणः स्त्रीजनः ? सरःश्रियोऽन्तरङ्गतः । तडागशोभाया मध्ये प्रविष्टः । पुनः कीदृशात् ? सरोजमृत्तरङ्गतः । मृदोभावो मृत्ता । सरोजान्येव मृत्ता मृद्भावो यत्र सरोजमृत्तः । तथाभूतो रङ्गो नर्तनस्थानं यस्य स तथा तस्मात् । नर्तनस्थले हि कोमला मृदास्तीर्यत इति प्रसिद्धिः । 'सरोजनृत्तरङ्गतः' इति पाठे किंलक्षणात् रङ्गतः ? सरोजनृत्तरङ्गतः कमलनर्तनरङ्गभूमेः स्थानभूतात् ॥४४ ॥

**दीपिका**—सरःश्रिय इति—तनूजनः स्त्रीजनः तरङ्गतः कल्लोलात् महत्तरम् अत्यन्तं भयं साध्वसं गतः प्राप्तः । किम्भूतः तनूजनः ? सरःश्रियस्तडागसम्पदः अन्तरं मध्यगतः यातः । किम्भूतात् तरङ्गतः ? सरोजनृत्तरङ्गतः कमलनृत्तोत्सवभूमेः ॥ ४४ ॥

---

१. 'मृत्ततरङ्गतः' इति 'ग''घ' पुस्तकयोः पाठः ।

**सुबोधिनी**—सर इति—सरःश्रियः सरोलक्ष्म्याः अन्तरं मध्यं स्वरूपत्वं वा गताः प्राप्तास्तनूजनः स्त्रीसमूहः सरोजनृत्तरङ्गतः सरोजानां कमलानां नृत्तं नर्तनं तस्य रङ्गतो भूमेः तरङ्गतः उर्मेः महत्तरम् अतिशयेन महद्भयं साध्वसं गतो गतवान् कमलनर्तनहेतुतरङ्गान्नक्र-हतिशङ्कया स्त्रीजनो भीतो बभूवेति भावः । अन्तरमवराशावधिपरिधानान्तर्धिभेद-तादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥ ४४ ॥

**अनुवाद**—तड़ाग की शोभा (जल) के अंदर गईं हुई नवांगनाएं कमल के नृत्य-स्थान से उठी हुई तरंगो से अत्यधिक भयभीत हो उठीं ॥ ४४ ॥

**अथ नीरात् सारसतः फेनपरीतादि[1] वाऽम्बरात् सारसतः ।**

**अतिमुखरात्[2] सारसतस्तीरमिता स्त्रीततिश्चिरात् सा रसतः ॥ ४५ ॥**

**अन्वयः**—अथ सा स्त्रीततिः चिरात् रसतः सारसतः सारसतः अतिमुखरात् फेनपरीतात् सारसतः अम्बरादिव नीरात् तीरम् इता ॥ ४५ ॥

**अन्वयदीपिका**—अथेति—अथेत्यनन्तरं सा स्त्रीततिः कामिनी पङ्क्तिः चिरात् चिरकालेन रसतः स्नेहात् । रसादिति रसतः । सारसतो नीरात् सरससम्बन्धिनः तोयात् तीरम् इता प्राप्ता । किं विधात् नीरात्? सारसतः पक्षिविशेषतः अतिमुखरात् अभितो वाचालात् । पुनः किम्भूतात्? फेनपरीतात् फेनिलादित्यर्थः । पुनः किं विधात् नीरात्? उत्प्रेक्षते । अम्बरादिव आकाशादिव । अत्र यथा शब्द इवार्थे । किम्भूतात् अम्बरात्? सारसतः साराणि मनोहराणि सन्ति नक्षत्राणि यस्मिन् तत् सारसत् तस्मात् सारसतः । सन्नक्षत्रं तारायुद्वा इति हलायुधः ॥ ४५ ॥

**यमकबोधिनी**—अथेति—अथानन्तरं सः स्त्रीततिर्वनिताततिः सारसतो नीरात् पद्माकरात् जलात् रसतोऽनुरागात् चिरात् तीरम् इता प्राप्तेत्यन्वयः । सरसः इदं सारसं तस्मात् । चिरेण कूलं कीदृशात् नीरात्? फेनपरीतात् अतिविहारेण फेनव्याप्तात् । पुनः कीदृशात्? सारसतोऽतिमुखरात् । पुष्कराह्वायादतिवाचालात् । अथवा सा स्त्रीततिः सारसतो नीराच्च तीरमिता । कुतः अतिमुखरात् सारसतः । कस्मादिव? उत्प्रेक्षते । सारसतः अम्बरादिव । अकाशादिव सारेण नीरेण सत्संयुक्तं तस्मात् । यद्वा साराः श्रेष्ठाः सन्तः प्रशस्ता गृहनक्षत्ररूपा देवा यत्र स तथा तस्मात् एव । आकाशोत्प्रेक्षया सारसोऽतिविशालता सूचिता । अथवा सा स्त्रीततिः नीरात् तीरम् इता । कस्मादिव? अम्बरादिव । उत्प्रेक्षते । वस्त्रं परित्यज्य तीरं प्राप्तानां जलस्यापि वस्त्रवदाच्छादकत्वात् । कीदृशात् वस्त्रात्? सारसतः सारं श्रेष्ठं च तत् सत् प्रशस्तं च तस्मात् । प्रशस्तं वस्त्रमिव नीरं परित्यज्य तीरगतानामासां विवृतगात्रतया शोभा-तिशयः सूचितः । अम्बरं व्योम्नि वाससीत्यमरः ॥ ४५ ॥

---

१. 'यथेति' 'ख' 'च' 'ञ' पुस्तकेषुः पाठः।

२. 'अभिमुखादिति' 'क' 'छ' पुस्तकयोः पाठः।

**दीपिका**—अथ नीरादिति—अथानन्तरं स्त्रीततिः कामिनीसमूहः चिरात् चिरकालात् सारसतः नीरात् सरः सम्बन्धिनो जलात् तीरं तटम् इता प्राप्ता। किम्भूतात्? फेनपरीतात् फेनिलादित्यर्थः। पुनः किम्भूतात् नीरात्? सारसतः पक्षिविशेषाद्धेतोः अतिमुखराद् अत्यन्तवाचालात्। उत्प्रेक्षते। अम्बरादिव आकाशादिव। किम्भूतात् अम्बरात्? सारसतः साराणि रम्याणि सन्ति नक्षत्राणि यस्मिन् तस्मात्॥ ४५॥

**सुबोधिनी**—अथेति—अथ जलविहारानन्तरं सा स्त्रीततिः स्त्रीमसमूहः चिराद् बहुक्षणात् सारसतः सरस इदं सारसं तादृशान्नीरात् तडागजलात्। सारसतः सरसः इदं सारसं क्रीडनं ततस्तद्विहाय। ल्यब्लोपे पञ्चमी। कथं भूतात् रसतः? सारसतः अति-मुखरात् रसतः शब्दायमानात्। फेनपरीतात् फेनव्याप्तात्। तीरं तटम् इता प्राप्ता। उत्प्रेक्षते। अम्बरात् आकाशात् यथा अम्बरादिव। इवार्थे यथा। आकाशपक्षे सारसतः साराणि श्रेष्ठानि नक्षत्राणि यस्मिन् तादृशात्। फेनपरीतं जलं नक्षत्रवदा-काशप्रायम्। यथा गगनतलादप्सरसोऽवतरन्ति एवं जलात् स्त्रियोऽवतरन्ति इति भावः। सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्। व्योमपुष्करमम्बरम्। सारो बले स्थिरांशे चेत्यमरः। रसत इति शब्दः रसशब्दे इत्यस्माद् धातोः शत्रन्तः॥ ४५॥

**अनुवाद**—स्वेच्छा से सारस पक्षियों से सुशोभित फेन युक्त उस तालाब के जल से आकाश से मनोहर नक्षत्रों की भांति बहुत देर के बाद वह स्त्रीसमूह तट पर आया॥ ४५॥

**स चोदयावलीनतः समुत्प्रभावलीनतः।**

**नयन् ययावलीनतः पदं जनो वलीनतः॥ ४६॥**

**अन्वयः**—स च वलीनतः जनः अलीन् नयन् अतः उदयावलीनतः इनतः समुत्प्रभावलि पदं ययौ॥ ४६॥

**अन्वयदीपिका**—स चेति—च अपरं सः कामिनीजनः अतः सरस्तीरात् पदं स्थानं ययौ। प्रापेत्यर्थः। कथं भूतं पदम्? इनतः सूर्यात् समुत्प्रभावलि। उत्कृष्टकान्तिपङ्क्तिः। सूर्यदीधितियुक्तमित्यर्थः। कथं भूतात् इनतः? उदयावलीनतः उदयेऽवलीनः उदयावलीनः तस्मात् उदयाचलाद् गतात्। किम्भूतः स जनः? वलीनतः वलिभिर्नतः नम्रः। किं कुर्वन्? अलीन् भ्रमरान् नयन् कर्षयन्। भ्रमरार्भकान् कर्षयतीत्यर्थः॥ ४६॥

**यमकबोधिनी**—स इति—स च कामिनीजनः अतोऽस्मान्नीरात् पदं ययौ। स्थानं जगाम। कीदृशो जनः? उदयावलीनतः उदयेन अवलीनो रहितस्तस्मात् उदयावलीनतः इनतः सूर्यात् अस्तमितादित्यर्थः। तस्मात् अस्तमिते हि सूर्ये तमस्विनी प्राचाराच्छीघ्रं सम्भोगाधिगम इति सहर्षः। उदयश्चास्तमिते नैव सम्भवति। कीदृशात् इनतः? प्रभावलीनतः। प्रभायाः अवली तस्याः इनस्तस्मात् प्रभावपङ्क्ततः। कीदृशो जनः? अलीः अलितुल्यः। भ्रमरवत्सारग्राहीत्यर्थः। अली च पदं ययाविति सम्बन्धः। अथवा इनतः सूर्यात् प्रभावली कान्तिश्रेणी च पदं ययौ। किं लक्षणात्

सूर्यात्? अलीनतः भ्रमरस्वामिनः। कीदृशो जनः? वली वलीषु त्रिवलीषु नतो नम्रः। अथवा वली नतः इति पदद्वयम्। कीदृशो जनः? वली बलवान् ततो नम्रश्च ॥ ४६ ॥

**दीपिका**—सचोदयेति—च पुनः स जनः अतः सरस्तीरात् पदमुच्चस्थानं ययौ प्राप्तः। किम्भूतं पदम्? उदयाचलादागतात् इनतः सूर्यात् समुत्प्रभावलि। समुल्लसद्दीधिति-पङ्क्तिः। किम्भूतादिनतः? अवलीनतः अस्तसमयत्वेन नम्रीभूतात्। किं कुर्वन्? अलीन् भ्रमरान् नयन्। मुखसौरभ्यादिना आकर्षयन् ॥ ४६ ॥

**सुबोधिनी**—सचोदयेति—स च जनः स्त्रीसमूहः वलीनतः त्रिवलीनतः नम्रः। अलीन् भ्रमरान् नयन् गात्रादिसौगन्ध्येन आकर्षयन्। अतः सरस्तीरात् पदं स्वस्थं स्वस्थानं ययौ। कथं भूतं पदम्? उदयावलीनतः उदयाचलप्राप्तात्। यद्वा उदयं प्राप्य अवलीनात् निमग्नात्। इनतः सूर्यात् समुत्प्रभावलि सम्यगुद्गताः प्रभावलयः प्रभाश्रेण्यो यस्मिन्स्तादृशं सूर्येऽस्तमुपयाति स्त्रीजनो गृहं गतवानित्यर्थः। पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु इत्यमरः ॥ ४६ ॥

**अनुवाद**—वह त्रिबलियों के कारण नम्र (कामिनीजन सुगंधि आदि से) भ्रमरों को आकर्षित करता हुआ, उदयाचल से आये हुए सूर्य के (अस्ताचल की ओर जाने के) कारण प्रकाशवान् स्थान (अपने घर) को आया ॥ ४६ ॥

**दिश कामानङ्गेहं म्लानो मदनेषुविकृतिमानङ्गेऽहम्।**
**इति परमानङ्गेहं नलः प्रियामनयदतिविमानङ्गेहम् ॥ ४७ ॥**

**अन्वयः**—नलः 'अङ्ग! अहम् इह अंगे मदनेषुविकृतिमान् म्लानः (अस्मि अतः) कामान् दिश' इति (उक्त्वा) प्रियाम् अतिविमानं परमानङ्गेहं गेहम् अनयत्। (अथवा 'परमान् कामान् अङ्गेहं दिश' इत्यस्मिन् पक्षे 'परमानङ्गेहम्' इति शब्दस्य गेहविशेषणत्वं न स्यात्। आवृत्तिर्वा करणीया) ॥ ४७ ॥

**अन्यवदीपिका**—दिशेति—नलः इति उक्त्वा प्रियां दमयन्तीं गेहम् अनयत् गृहं प्रापयत्। अङ्ग इति सम्बोधने। हे भैमि! हे दमयन्ति! अतीवप्रिये! अहम् इह अस्मिन् शरीरे [1]मदनेषुविकृतिमान् अस्मि। स्मरशरसञ्जातविकृतिरित्यर्थः। पुनः किम्भूतः? अहं म्लानः कामातुरः। अत एव हे प्रिये त्वं कामान् विषयान् दिश देहि। सङ्गं देहीत्यर्थः। कथं भूतं गेहम्? परमानङ्गेहम्। परमा उत्कृष्टा अनङ्गस्य ईहा चेष्टा यस्मिन् तत् परमानङ्गेहम्। पुनः किम्भूतं गेहम्? अतिविमानम्। अतिक्रान्तानि विमानानि पुष्पकादीनि येन तत् अतिविमानम्। तिरस्कृतदेवयानमित्यर्थः ॥ ४७ ॥

**यमकबोधिनी**—दिशेति—नल इति प्रियां भैमीं गेहं मन्दिरम् अनयत् नीतवान्। इतीति किम्? अङ्गेति सम्बोधनम्। हे प्रिये! अहमिह वने म्लानः। म्लानत्वे हेतुः-

---

१. विद्यावती—मदनस्य इषवः बाणाः तैः विकृतिमान् इति अर्थः।

कीदृशोऽहम् ? अङ्गे शरीरे मदनेषुविकृतिमान् । मदनस्य कामस्य इषूणां बाणानां विकृतिर्विकारो विद्यतेऽस्येति तथा । अतस्त्वं कामान् दिश देहि । मनोरथान् पूरयेत्यर्थः । कीदृशं गेहम् ? परमानङ्गेहम् । परमा उत्तमा अनङ्गेहा कामस्पृहा यस्मिन् तत्तथा । यद् दृष्ट्वा कामस्पृहा विद्यते इत्यर्थः । पुनः कीदृशम् ? अतिविमानम् अतिक्रान्तदेवयानम् ॥ ४७ ॥

**दीपिका**—दिश कामानिति—अङ्ग ! हे भैमि ! कामान् विषयान् दिश देहि । इह अङ्गे अस्मिन् शरीरे अहं मदनेषुविकृतिमान् कामबाणविकारयुक्तः । इत्यमुना प्रकारेण म्लानः रतिरसलीनो नलः प्रियां गेहं प्रासादम् अनयत् प्रापयामास । किम्भूतं गेहम् ? परमानं गेहम उत्कृष्टकामचेष्टम् । पुनः किम्भूतं गेहम् ? अतिविमानम् । रमणीयत्वेन विमानमतिक्रम्य वर्तमानम् ॥ ४६ ॥

**सुबोधिनी**—दिश इति—हे अङ्ग ! प्रिये ! दमयन्ति ! अहम् अङ्गे शरीरे मदनेषुविकृतिमान् कामशरविकारवानस्मि । कथं भूतम् ? इहम्मन्यः । इं कामं हन्तीति इहः । इहं कामहन्तारमात्मानं मन्यते इहम्मन्यः । अतः कामान् अभिलाषान् दिश देहि । रत्यभिलाषं पूरयेत्यनेन प्रकारेण नलः प्रियां गेहं गृहमनयत् अनैषीत् । कथं भूतं गेहम् ? परमानं गेहम् ? परमा उत्कृष्टा अनङ्गस्य कन्दर्पस्य ईहा चेष्टा वाञ्छा वा यस्मिन् । भित्तिलिखितनानाकामचेष्टं कामोद्दीपनं वा अतिविमानम् अतिक्रान्तं विमानं पुष्पकादि येन तत् । तिरस्कृतदेवयानमित्यर्थः । अनयदिति णीञो लिङि ॥ ४७ ॥

**अनुवाद**—हे प्रिये दमयन्ति ! इस वन में मेरा शरीर कामबाणों के विकार युक्त है । अतः तुम मुझे काम मनोरथ दो । इस प्रकार नल प्रिया को विमानों की शोभा जीतने वाले, उत्कृष्ट काम-इच्छा देने वाले भवन में ले गया ॥ ४७ ॥

**अरुणमहस्तेनेन प्रापि च सोऽब्जैर्गुणग्रहस्तेने न ।**

**भाव्यमिह स्तेनेन स्फुटमस्य हि तद्गतेंऽशुहस्तेऽनेन ॥ ४८ ॥**

**अन्वयः**—इनेन अरुणमहस्ता प्रापि । अब्जैः च सः गुणग्रहः न तेने (इति न) । इह हि अनेन अस्य अंशुहस्ते तद्गते स्फुटं स्तेनेन भाव्यम् ॥ ४८ ॥

**अन्वयदीपिका**—अरुणेति—अनेन इनेन सूर्येण अरुणमहस्ता प्रापि । अरुणरक्तता लब्धा । अरुणं च महश्च अरुणमहः । अरुणमहसोभावः अरुणमहस्ता । च अपरम् अब्जैः कमलैः गुणग्रहः रक्तिमास्वीकारः न तेने इति न किन्तु स्वीकृतमित्यर्थः । च अपरम् अनेन सूर्येण अरुणमहस्ता न परं कमलैः रक्तिमागुणश्च इह (अस्मिन्[1]) विषये स्फुटं निश्चितं यथा स्यात् तथा तेने । अनेन चौरेण भाव्यं भवितव्यम् । तेषु रक्तता वा अस्ति न वास्ति अत उत्प्रेक्षते कविः । इतोऽपि रक्तिमभावोऽभविष्यत् तदा पङ्कजेषु रक्तप्रभा कुत्रापि नागमिष्यत् । गतश्च सूर्यः तस्मात् स चौर इति । हि शब्दोऽवधा-

१. कोष्ठके सम्पादकस्य

रणार्थः। कस्मिन् सति ? अस्य सूर्यस्य अंशुहस्ते तद्गते सति। अंशुरेव हस्तः तद्गतः तस्मिन् तद्गते पद्मप्राप्ते सति ॥ ४८ ॥

**यमकबोधिनी**—अरुणेति—इनेन सूर्येण अरुणश्च तन्महश्च तस्य भावस्तत्ता रक्तछवित्वं प्रापि। अस्तं गच्छतोऽस्य तथात्वात्। अब्जैः कमलैश्च स प्रसिद्धो गुणग्रहो गुणग्रहणं न तेने न विस्तारितः। गुणानां विकाशादीनां ग्रहो ग्रहणम्। ननु कुतः कमलैर्नात्मगुणविस्तारः कृत इति चेत् तत्राह—हि यतः अपराह्णसमये अंशुहस्ते किरणकरे तद्गते सति कमलप्राप्ते सति स्फुटं स्पष्टम् अनेन रविणा अस्य विकाशादिगुणस्य स्तेनेन भाव्यम्। चौरेण भवितव्यम्। पद्मानां विकाशादिगुणान् मुषित्वा सूर्योऽस्तमेष्यतीति तात्पर्यम् ॥ ४८ ॥

**दीपिका**—अरुणमहस्तेनेति—इनेन सूर्येण अरुणमहस्ता आरक्ततेजस्त्वं प्रापि। अब्जैः कमलैः स गुणग्रहः रक्तत्वगुणाङ्गीकारः न तेने न कृतः इति न किन्तु कृतः। स्फुटं प्रकटम् अनेन सूर्येण इह अस्मिन्नरुणमहस्त्वविषये स्तेनेन अन्यकमलरक्तिमचौरेण भाव्यम् भवितव्यम्। सूर्यस्य अरुणता न स्वतः परत एवेत्यर्थः। कवेरुत्प्रेक्षा। कस्मिन् सति ? अस्य सूर्यस्य अंशुहस्ते तद्गते कमलगते सति ॥ ४८ ॥

**सुबोधिनी**—अरुणेति—इनेन रविणा अरुणमहस्ता अरुणतेजस्त्वं प्रापि प्राप्ता। सन्ध्यारागारुणो रविरभूत्। स च गुणग्रहः। अब्जैः कमलैर्न तेने न विस्तारितः। इह सन्ध्यासमये अस्य हि सूर्यस्य तद्गते कमलगते अंशुहस्ते सति अनेन रविणा स्तेनेन चौरेण स्फुटं व्यक्तं भाव्यम्। सन्ध्यारागारुणे सूर्ये कमलानामारुण्यं नाभूत्। यतः कमलगते रविकरे सति सायङ्काले स्वकरद्वारा तद्रक्ततां रविरपहरिष्यतीति भावः। महस्तूत्सवतेजसोरित्यमरः। तेने तनोतेर्लिटि ॥ ४८ ॥

**अनुवाद**—सूर्य ने लाल वर्ण की तेजस्विता प्राप्त की। कमलों ने अपनी रक्तिमा को नहीं फैलाया ऐसा नहीं। इस समय सूर्य की रक्तकिरणों के कमलों तक पहुंचने से उसे चोर की तरह होना पड़ा ॥ ४८ ॥

**यतो यतो यतो यतो रवेर्मरीचिसञ्चयः।**

**[1]महान्धकारसञ्चयस्ततस्ततस्ततस्ततः ॥ ४९ ॥**

**अन्वयः**—यतः रवेः मरीचिसञ्चयः यतः यतः यतः ततः महान्धकारसञ्चयः ततः ततः ततः ॥४९ ॥

**अन्वयदीपिका**—यत इति—एतीति यत् तस्य यतः। अस्तं गच्छतः रवेः अस्ताचलं गच्छतः सूर्यस्य मरीचिसञ्चयः किरणसमूहः यतः यतः यत्र यत्र प्रदेशे यतः गतः उपरतः ततोऽनन्तरं महान्धकारसञ्चयः महातमोराशिः ततः ततः तत्र तत्र प्रदेशे ततः विस्तृतः ॥ ४९ ॥

---

१. महान्धकारविभ्रम इति 'ञ' पुस्तके पाठः।

**यमकबोधिनी**—यत इति—ततोऽनन्तरं यतः स्थानात् रवेः सूर्यस्य मरीचिसञ्चयः किरणसमूहः यतः उपरतो गत इति यावत् । कीदृशस्य रवेः ? यतो गच्छतः । ततस्ततः तत्र तत्र महान्धकारसञ्चयः ततो विस्तृतः । महान्धकारस्य सञ्चयः प्रसृतः । क्वचिन्महान्धकारविभ्रम इति पाठः । यत इति यम उपरमे इति धातोः क्तान्तरूपम् । पुनर्यत इति इण् गतावित्यस्य शत्रन्तं षष्ठ्येकवचनम् ॥ ४९ ॥

**दीपिका**—यतो यत इति—यतः यतः यतः यस्मात् यस्मात् स्थलात् यतः अस्तं गच्छतः रवेः सूर्यस्य मरीचिसञ्चयः किरणसमूहः यतः गतः उपरतः । ततोऽनन्तरं महान्धकारः सञ्चयः परमान्धकारसमूहः ततः ततः तत्र तत्र विस्तृतः ॥ ४९ ॥

**सुबोधिनी**—यत इति—यस्माद्धेतोः रवेर्मरीचिसञ्चयो रविकिरणसमूहो यतो यतो यस्मात् यस्मात् स्थानात् उपरतः । यमु उपरमे धातोः रूपम् । ततस्तस्माद्धेतोस्ततस्ततस्तत्र तत्र माहन्धकारसञ्चयो महान्धकारसमूहः ततः व्याप्तः । यतो यतो देशाद्रविकिरणाः निवृत्तास्तत्र तत्र महान्धकारो व्यापदिति भावः ॥ ४९ ॥

**अनुवाद**—अस्ताचल की ओर जा रहे सूर्य की किरणों का समूह जहां जहां से हटा । उसके बाद वहां वहां अन्धकार की अधिकता फैल गई ॥ ४९ ॥

**छादितरविताऽनेन प्रापि च कालेन सस्वरवितानेन ।**

**जितरुचिरविताऽनेन व्योम्नाऽपि च स्फुरितमुडुभिरवितानेन ॥ ५० ॥**

**अन्वयः**—अनेन सस्वरवितानेन जितरुचिरवितानेन कालेन छादितरविता प्रापि । अपि च उडुभिः अवितानेन व्योम्ना स्फुरितम् ॥ ५० ॥

**अन्वयदीपिका**—छादितेति—अनेन कालेन सन्ध्याकालेन छादितरविता प्रापि । निरस्तसूर्यता प्राप्ता । छादितश्चासौ रविश्च छादितरविः । छादितरवेर्भावः छादितरविता । आच्छादितसूर्यता प्राप्ता । च अपरम् अन्योऽन्यं स्फुरितं प्रकाशितम् । किम्भूतेन अनेन ? सस्वरवितानेन सशब्दपक्षिसमूहेन । वीनां पक्षिणां वितानः विस्तारः । स्वरेण शब्देन सह वर्तमानः सस्वरः । सस्वरो वितानो यस्मिन् सः सस्वरवितानः । तेन सस्वरवितानेन । सशब्दपक्षिसमूहेन वा । च अपरं व्योम्ना गगनेन स्फुरितं दीप्तम् । कथं भूतेन व्योम्ना ? जितरुचिरवितानेन । जितः तिरस्कृतः रुचिरः मनोहरः वितानः उल्लोचो येन तत् जितरुचिरवितानं तेन जितरुचिरवितानेन । पुनः किम्भूतेन व्योम्ना ? उडुभिः नक्षत्रैः अवितानेन पूर्णेन । विगतः तानो विस्तारो यस्मात् तत् वितानम् । न वितानम् अवितानम् । तेन अवितानेन व्योम्ना इत्यर्थः । अवितानेन प्राप्तेनेत्यर्थः ॥ ५० ॥

**यमकबोधिनी**—छादितेति । अनेन कालेन अन्धकारोपलक्षितसन्ध्यासमयेन सस्वरवितानं प्रापि । चकारस्य पूर्वश्लोकेन सम्बन्धः । सस्वराः सशब्दा ये वयः पक्षिणस्तेषां भावस्तत्ता । सस्वरविता कोलाहलध्वनिः । कीदृशेन कालेन ? छादितरवितानेन छादितं रवेः तानं प्रभाविस्तारो येन स तथा तेन । पुनः कीदृशेन ? जितरुचिरविता-

नेन। जितं रुचिरं वितानं येन सः तेन। जितशोभनोल्लोचेन। व्योम्नाऽऽकाशेन च उडुभिर्नक्षत्रैः कृत्वा स्फुरितम् उज्जृम्भितम्। कीदृशेन व्योम्ना ? उल्लोचाद्वैलक्षण्यमाह—अवितानेन अतुच्छकेन। क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके इत्यमरः ॥५० ॥

**दीपिका**—छादितरवितेति—च पुनः अनेन कालेन सन्ध्याकालेन छादितरविता निरस्तसूर्यता प्राप्ता प्रापि। व्योम्ना च आकाशेन च स्फुरितं प्रकाशितम्। किम्भूतेन कालेन ? सस्वरवितानेन सस्वराणां सशब्दानां वीनां पक्षिणां तानो विस्तारो यस्मिन् तेन। किम्भूतेन व्योम्ना ? जितरुचिरवितानेन पराजितरम्योल्लोचकेन। पुनः किम्भूतेन व्योम्ना ? उडुभिः नक्षत्रैः अवितानेन। विगतः तानो विस्तारो यस्मात्। व्याप्तेनेत्यर्थः ॥ ५० ॥

**सुबोधिनी**—छादितेति—अनेन कालेन सायङ्कालेन छादितरविता आच्छादितः पिहितो रविर्यस्मिन् सः। तस्य भवस्तत्ता सा प्रापि प्राप्ता। कथं भूतेन ? सस्वरवितानेन सस्वराः सशब्दाः वीनां पक्षिणां तानो विस्तारो यस्मिंस्तादृशेन सशब्दपक्षिसमूहविशिष्टेनेत्यर्थः। एवं जितरुचिरवितानेन जितरुचिरसमूहेन अत्यन्तरक्तेनेत्यर्थः। एवमवितानेन अवीनां मेषाणां वितानो विस्तारो यस्मिंस्तेन। यद्वा न विद्यते वितानो यज्ञो यस्मिंस्तेन। सन्ध्यायां सप्तवर्जयेदिति स्मृतेः। च पुनर्व्योम्ना आकाशेन उडुभिः करेण स्फुरितं शोभितम्। यद्वा जितरुचिरावितानेनेति पाठे व्योम्ना इत्यस्य विशेषणम् जितः अतिरुचिर उल्लोचो येन इत्यर्थः। क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके। तारकाप्युडु वा स्त्रियामित्यमरः ॥ ५० ॥

**अनुवाद**—इस संध्या काल ने जिसमें पक्षियों का स्वर गूंज रहा था और जिसने रक्तता को जीत लिया था, सूर्य से राहित्य को प्राप्त किया तथा नक्षत्र सम्पूर्ण आकाश से सुशोभित हुआ ॥ ५० ॥

**अथोद्यतोऽम्बुराजतः श्रियं खमाप राजतः।**

**यथा घटो व्यराजत स्मराग्रगः[१] स राजतः ॥ ५१ ॥**

**अन्वयदीपिका**—अथ खम् अम्बुराजतः उद्यतः राजतः श्रियम् आप। सः स्मराग्रगः राजतः घटो यथा व्यराजत ॥ ५१ ॥

**अन्वयदीपिका**—अथेति—अथेत्यनन्तरं राजतः चन्द्रमसः सकाशात् खम् आकाशं श्रियं शोभाम् आप प्राप। राज्ञः इति राजतः। पञ्चम्यर्थे तस् प्रत्ययः। किम्भूतात् राजतः ? अम्बुराजतः समुद्रादुद्यतः उदयं प्राप्तः। उदेतीति उद्यन् तस्मात् उद्यतः। यथा शब्द इवार्थे। स चन्द्रः राजतः रौप्यघट इव व्यराजत शुशुभे। रजतस्य अयं राजतः।

---

१. कामाग्रगः इति 'ख' पुस्तके पाठः।

किम्भूतो घटः ? कामाग्रगः कामस्य अग्रं गच्छतीति कामाग्रगः । कामस्य अभिषेकार्थम् अमृतकलश इव भाति स्म ॥ ५१ ॥

**यमकबोधिनी**—अथेति—अथानन्तरम् अम्बुराजतः समुद्राद् उद्यतः उद्गतो राजतश्चन्द्रात् खम् अन्तरिक्षं श्रियं शोभाम् आप । तथा तद्वत् स चन्द्रः व्यराजत शुशुभे । किंल्लक्षणश्चन्द्रः ? स्मराग्रगः राजतः कालधौतो घटस्तुल्य इत्यर्थः । यथेति पाठे यथा चन्द्रतुल्यं इति स्वयं श्रियम् आप शोभां प्राप्तवान् । कीदृशात् समुद्रात् ? राजतः विराजमानात् तथा तद्वत् राजतः कालधौतो घटः कलशो व्यराजत अशोभत । घट इत्येक वचनं जात्यभिप्रायकम् । प्रासादशिखरस्थितानि सुवर्णकलशानि व्यराजन्तेत्यर्थः । राजतश्चन्द्रात् घटो विराजते इति वार्थः । अथवा श्रियं खमाप राजतः इति शोभनः पाठः । कीदृशश्चन्द्रः ? स्मराग्रगः कामपुरस्सरः[1] ॥ ५१ ॥

**दीपिका**—अथोद्यत इति—खम् आकाशं राजतः चन्द्रात् श्रियं शोभाम् आप प्राप । किम्भूतात् राजतः ? अम्बुराजतः समुद्रादुद्यतः । उदेतीति उद्यत् तस्मात् उद्यतः उदयं प्राप्तादित्यर्थः । स चन्द्रः राजतः रौप्यः स्मराग्रगः कामाग्रगामी घट इव मङ्गलकलश इव व्यराजत व्यरोचत । यथा शब्द इवार्थे[2] ॥ ५१ ॥

**सुबोधिनी**—अथेति—अथानन्तरम् अम्बुराजतः उदधेः सकाशात् उद्यतः उद्गतः स चन्द्रो व्यराजत शुशुभे । खम् आकाशं राजतश्चन्द्रात् श्रियमाप प्राप । यथा स्मराग्रगः कामरूपवर्ती राजतो रुप्यमयो घटः शोभते । यथा शब्द इवार्थे । उदधेरुत्थितश्चन्द्रो मदनभूपप्रस्थानाभिषेकरूप्यकलश इव राजते इति तात्पर्यम् । श्वेतरूप्योऽपि राजतं हेम्नि रूप्योऽसिते त्रिषु । व्यराजतेति राजतेर्लुङि ॥ ५१ ॥

**अनुवाद**—इसके बाद आकाश समुद्र से उदित हुए चन्द्र से सुशोभित हुआ । वह (चन्द्र) कामदेव के (अभिषेक के लिए उसके) आगे चलने वाले चांदी के घड़े की तरह सुशोभित हुआ ॥ ५१ ॥

**दधतं कालङ्कालङ्कालं[3] कालं वियोगिनी शशिनं तम् ।**

**अध्वगकालं कालं कालं काऽलं प्रसमीक्षितुं[4] प्रोद्यन्तम्[5] ॥ ५२ ॥**

---

१. विद्यावती—अथवा स्मरस्य कामस्य मधौ लब्धविजयस्य अभिषेकार्थमग्रे गच्छतीति तादृशः सः राजतः रजतस्यायं राजतः रौप्यः घटः अमृतकलश इव भाति स्म । मधौ कामिषु लब्धविजयस्य राज्ञः कामस्याभिषेकघट इव भाति स्म इति भावः ।

२. 'ङ' 'ज' पुस्तकयोः द्विपञ्चाशत्तमोऽयं श्लोकः ।

३. कारमिति 'ञ' पुस्तके

४. 'समीक्षितुम्' इति 'क' 'ख' 'ङ' 'छ' पुस्तकेषु पाठः । तदेक्षितुमिति च 'ञ' पुस्तके ।

५. 'ङ' 'ज' पुस्तकयोः एकपञ्चाशत्तमश्लोकत्वेन कल्पितोऽयम् । 'ञ' पुस्तके च त्रिपञ्चाशत्तमत्वेनेति क्रमभेदः ।

**अन्वयः**—का वियोगिनी कालङ्कालङ्कालं कालं कालं शशिनं दधतं तम् अध्वगकालं प्रोद्यन्तं कालं प्रसमीक्षितुम् अलम्? ॥ ५२ ॥

**अन्वयदीपिका**—दधतमिति—का वियोगिनी का नायिका तं कालं वसन्तं प्रोद्यन्तम् उदितं प्राप्तं समीक्षितुम् अवलोकयितुं सुखेन गमयितुम् अलं समर्था। न कापीत्यर्थः। कथं भूतं कालम्? शशिनं चन्द्रं दधतं धारयन्तम्। किम्भूतं शशिनम्? कालं कालानां समूहः कालः तं कालं षोडशकलायुक्तम्। पुनः किम्भूतं शशिनम्? कालङ्कालङ्कालम् कलङ्कस्यायं कालङ्कः। कालङ्कः अलङ्कारः आभरणं यस्यासौ कालङ्कालङ्कालं तं कालङ्कालङ्कालम्। रलयोरभेदात्। पुनः किम्भूतं चन्द्रम्? अध्वगकालम्। अध्वगानां पान्थानां कालः अध्वगकालः तम् अध्वगकालम्। पान्थदुस्सहमित्यर्थः। पुनः किम्भूतं शशिनम्? कालं श्यामं कलङ्कितत्वात्॥ ५२ ॥

**यमकबोधिनी**—दधतमिति—का वियोगिनी का विरहिणी प्रोद्यन्तं तं वसन्तकालीनं शशिनं प्रसमीक्षितुम् अवलोकयितुम् अलं समर्था? न कापीत्यर्थः। किं कृत्वा? कालं समयं वियोगलक्षणं कालङ्कालं कलयित्वा कलयित्वा विचार्येति यावत्। वियोगसमयं विचार्य न कापि तं शशिनम् अपश्यत् इत्यर्थः। तत्र हि प्रोद्यतच्छशाङ्ककरतापभरस्यातिदुःसहत्वात्। कीदृशं शशिनम्? अध्वगकालम् अध्वनीनकृतान्तम्। किं कुर्वन्तम्? कालङ्कालङ्कालं दधतम्। कलङ्कस्यायं कालङ्कः। स चासौ अलङ्कारश्च तं विभ्रतम्। रलयोरभेदः। अनेन कालङ्कालङ्कृतेश्चन्द्रस्य विरहिवधेन कलङ्कशङ्कापीति ध्वनितम्। अथवा किं कुर्वन्तम्? कालं कलासमूहं दधतम्। किं लक्षणं तं कालम्? वसन्तकालसम्बन्धिनम्। पुनः कालङ्कं सुखं तस्यालं स्थलम्॥५२ ॥

**दीपिका**—दधतमिति—का वियोगिनी तं कालं वसन्तसमयं समीक्षितुं विलोकयितुम् अलं समर्था? न कापीत्यर्थः। किम्भूतं कालम्? शशिनं चन्द्रमसं दधतम्। किम्भूतं शशिनम्? कालङ्कालङ्कालम्। कलङ्कस्यायं कालङ्कः। स च अलङ्कारो भूषणं यस्य तम्। पुनः किम्भूतं शशिनम्? कालं कालानां समूहम्। पुनः किम्भूतं शशिनम्? अध्वगकालम्। पथिककालम्। पुनः किम्भूतं शशिनम्? कालं कलङ्कितत्वात् श्यामम्। पुनः किम्भूतम्? प्रोद्यन्तम् उदितं प्राप्तम्॥ ५२ ॥

**सुबोधिनी**—दधतमिति—का वियोगिनी विरहिणी शशिनं समीक्षितुं द्रष्टुम् अलं समर्था न कापीत्यर्थः। कथं भूतं कालम्? कृष्णवर्णं यत् कालङ्कालङ्कालङ्कालम्। कालङ्क एव कालङ्कः स चासौ अलङ्कालोऽलङ्कारो रलयोरैक्याद्यमके न दोषः। तं दधतं धारयन्तम् अध्वगकालम् अध्वगानां पथिकानां कालं नाशकम्। एवं कालं काले काले रात्रौ रात्रौ प्रोद्यन्तं प्रकर्षेणोद्यन्तम्। कृष्णे नीलासितश्यामे। कालं कालमिति नित्यवीप्सयोरिति द्विर्वचनम्। कालाध्वनोरत्यन्तसंयोगे इति द्वितीया॥ ५२ ॥

**अनुवाद**—कलंक रूपी अलंकार से युक्त षोडशकला वाले पथिकों के शत्रु चन्द्रमा को धारण कर रहे तथा उदित हो रहे इस वसन्त समय को देखने में कौन सी वियोगिनी समर्थ है ॥ ५२ ॥

**क्षरत्तुषारशीकराः प्रबुद्धकैरवाकराः ।**

**ततो जजृम्भिरे करा जगत्सु शार्वरीकराः ॥ ५३ ॥**

**अन्वयः**—ततः क्षरत्तुषारशीकराः प्रबुद्धकैरवाकराः शार्वरीकराः कराः जगत्सु जजृम्भिरे ॥५३ ॥

**अन्वयदीपिका**—क्षरदिति—ततोऽनन्तरं कराः किरणाः जगत्सु लोकेषु जजृम्भिरे ववृधिरे । कथं भूताः कराः ? शार्वरीकराः शर्वरीं रात्रिं करोतीति शर्वरीकरः । शर्वरीकरस्य इमे शार्वरीकराः चन्द्रदीधतयः इत्यर्थः । पुनः किम्भूताः कराः ? क्षरत्तुषारशीकराः क्षरन्तः तुषारबिन्दवः । शीकरोऽम्बुकणाः स्मृताः इत्यमरः । पुनः किम्भूताः कराः ? प्रबुद्धकैरवाकराः उन्मीलितकुमुदाः । विकसितकुमुदप्रकराः ॥ ५३ ॥

**यमकबोधिनी**—क्षरदिति—ततोऽनन्तरं शार्वरीकरा ऐन्दवाः किरणाः जगत्सु लोकेषु जजृम्भिरे ववृधिरे । कीदृशाः ? प्रवृद्धकैरवाकराः प्रवृद्धाः वृद्धिमिताः कैरवाणां कुमुदानाम् आकराः खनयो येभ्यस्ते तथा । प्रबुद्धकैरवाकरा इति पाठे प्रबुद्धः प्रफुल्लितः कैरवाणाम् आकरो यैस्ते तथा । पुनः कीदृशाः ? क्षरत्तुषारशीकराः क्षरन्तः तुषारस्य प्रालेयस्य शीकराः अम्बुकणा येभ्यस्ते तथा ॥ ५३ ॥

**दीपिका**—क्षरत्तुषारेति—ततः जगत्सु भुवनेषु शार्वरीकराः शर्वरीकरस्य इमे शार्वरीकराः जजृम्भिरे ववृधिरे । किम्भूताः कराः ? क्षरत्तुषारशीकराः श्रवद्धिमबिन्दवः । पुनः किम्भूताः कराः ? प्रबुद्धकैरवाकराः विकसितकुमुदनिकराः ॥ ५३ ॥

**सुबोधिनी**—क्षरदिति—ततोऽनन्तरं क्षरत्तुषारशीकराः क्षरन्तः स्रवन्तः तुषारशीकराः तुहिनजलकणा येभ्यस्तादृशाः । एवं प्रबुद्धः उत्फुल्लः कैरवाकरः कुमुदसमूहो येभ्यस्तादृशाः शार्वरीकराश्चन्द्रसम्बन्धिनः । शर्वरीकरश्चन्द्रः । तस्येदमित्यण् । कराः किरणः जगत्सु लोकेषु जजृम्भिरे विजृम्भितः । बलिभागांशवः कराः । जजृम्भिरे इति जृम्भि विनाशे विकासे चेत्यस्माल्लिटि ॥ ५३ ॥

**अनुवाद**—जिनसे ओस की बूंदे चू रहीं थीं, जिन्होंने विविध प्रकार के कुमुदों को विकशित कर दिया था, ऐसी चन्द्रमा की किरणे संसार में फैल गयीं ॥ ५३ ॥

**वधूस्तदाऽनुनिन्यिरे नयेन येन येन ये ।**

**वशं नरोऽनयन् समुन्नतेन तेन तेन ते[1] ॥ ५४ ॥**

**अन्वयः**—तदा येन येन नयेन ये नरः अनुनिन्यिरे तेन तेन समुन्नतेन ते वधूः वशम् अनयन् ॥५४ ॥

---

१. दीपिकायां ('ङ' - 'ज') पुस्तकयोः पञ्चपञ्चाशत्तमोऽयं श्लोकः ।

**अन्वयदीपिका**—वधूरिति-ततोऽनन्तरं ये नरः कामिनः पुरुषाः येन येन नयेन सामदानादिमार्गेण वधूः अङ्गनाः अनुनिन्यिरे अनुनीताः ते नरः कामिनः पुरुषाः तेन तेन नयेन वधूः वशम् अनयन् वशं चक्रुः। कथं भूतेन तेन मार्गेण ? समुन्नतेन उत्कृष्टेन ॥ ५४ ॥

**यमकबोधिनी**—वधूरिति-ततश्चन्द्रोदयानन्तरं ये पुरुषाः येन येन नयेन वधूः सीमन्तिनीः अनुनिन्यिरे अनुनीतवन्तः। अनुमेनिरे इति पाठे प्रसादितवन्तः ते नराः ते पुरुषाः तेन तेन नयेन वधूः वशम् अनयन्। वशं प्रापयामासुः। वधूरितिपदस्यानुषङ्गः। किं लक्षणेन नयेन ? समुन्नतेन प्रवर्द्धितचन्द्रोदयादिभिः पुष्टेनेत्यर्थः। यद्वा ये अनुनयेऽपि अनीत्यामपि अपराधे सति इति यावत्। प्रकुपिता वधूर्येन नयेन अनुनिन्यिरे ते पुरुषास्तेन नयेन वधूर्वशम् अनयन्। किं लक्षणेन येन ? समुन्नतेन समुन्नता इनता प्रभुता यस्य स तथा तेन। वसन्तसहायित्वात्प्रवर्द्धितप्रभुत्वेनेत्यर्थः। नर इति नृशब्दस्य प्रथमाबहुवचनम्। वधूर्जाया स्नुषा स्त्री चेत्यमरः ॥ ५४ ॥

**दीपिका**—वधूरिति-ये नरः पुरुषाः येन येन नयेनोपायेन वधूः अनुनिन्यिरे ते नरः समुन्नतेन तेन तेनोत्कृष्टोपायेन तथैव वधूः वशम् अनयन् प्रापयन् ॥ ५४ ॥

**सुबोधिनी**—वध्विति—तदा चन्द्ररश्मिपतनानन्तरं ये नरः पुरुषाः येन येन नीत्या उपायेन वधूः कामिनीरनुनिन्यिरेऽनुनीतवन्तः ते पुरुषाः समुन्नतेन समृद्धेन तेन तेनोपायेन वशं स्वाधीनतामनयन् अनैषुः। येन येनोपायेन पदानत्या स्त्रिया वशमागताः तेनैव वशं चक्रुरिति भावः ॥ ५४ ॥

**अनु०**—उस समय जिस जिस नीति से जिन जिन पुरुषों ने जो अनुनय किये, उस उस उत्कृष्ट नीति से वधुओं को वश में किया ॥ ५४ ॥

**सहासहावमाऽऽदरैः सहाऽसहाः स्मरस्य ते।**
**सुरासुराः यथाऽमृते सुरासु रागमादधुः[१] ॥ ५५ ॥**

**अन्वयः**—ते स्मरस्य असहाः सहासहावम् आदरैः सह अमृते सुरासुराः यथा सुरासु रागम् आदधुः ॥ ५५ ॥

**अन्वयदीपिका**—सहासेति-ते कामिनः पुरुषाः सहासहावं यथा भवति तथा आदरैः सह सुरासु मद्येषु रागं स्नेहम् आदधुः चक्रुः। हासेन सह वर्तमानः सहासः। सहासो हावो यत्र यस्यां क्रियायां यथा भवति तथा तत् सहासहावम्। क्रियाविशेषणम्। कथं भूतास्ते ? स्मरस्य कामस्य असहाः असहिष्णवः। यथा शब्द इवार्थे। के इव ? सुराऽसुरा इव। यथा सुरासुराः अमृते रागं स्नेहम् आदधुः दधिरे ॥ ५५ ॥

**यमकबोधिनी**—सहेति—ते कान्तानुगृहीताः पुरुषाः आदरैः सत्कारैः सह सुरासु मदिरासु रागं प्रीतिम् आदधुः आबभुः। कथम् ? सहासहावं यथा स्यात् तथा। **हासश्च हावश्च** ताभ्यां सह यथा स्यादेवम्। शृङ्गारभावनाक्रिया हावः। भरतोऽपि-हावः शृङ्गा-

१. 'ङ' -'ज' पुस्तकयोः षट्ञ्चाशत्तमोऽयं श्लोकः।

रभावाप्तौ रम्योक्तस्मितवीक्षितम्। किं लक्षणास्ते? स्मरस्य कामस्य असहाः असोढारः। तत्र दृष्टान्तः-सुरासुराः देवदैत्या यथा अमृते सुधायां रागमादधति तद्वत्॥ ५५॥

**दीपिका**—सहासहावमिति-ते कामिनः पुरुषाः सहासहावं यथा स्यात् तथा आदरैः आग्रहैः सह सुरासु मदिरासु रागम् अनुरागम् आदधुः चक्रुः। किम्भूतास्ते? स्मरस्य कामस्य असहाः असहिष्णवः। यथा शब्दोऽत्र इवार्थे। क इव? अमृते सुधायां सुरासुरा इव दैत्या इव॥ ५५॥

**सुबोधिनी**— सहेति-स्मरस्य कामस्य असहा असहिष्णवः वे कामुकजनाः सहासहावं हासहावादिसहितं सुरां पपुरिति भावः। यथा सुरा देवा असुरा अमृते रागं कुर्वन्ति। सुरा हलिप्रिया हाला परिस्नुद्वरुणात्मजा। आदधुरिति दधातेर्लिटि। यच्चोक्तं भरतेन-

**अलङ्कारस्वभावज्ञैर्ज्ञेया भावारसाश्रयाः।**
**यौवनेऽभ्यधिकाः स्त्रीणां विकारा वक्त्रगात्रजाः॥**

**देहात्मकं भवत्सत्वं सत्वाद् भावः समुत्थितः।**
**भावात्समुत्थितो हावो हावाद्धेला समुत्थिता॥**

**लीला विच्छित्तिर्विभ्रमः किलकिञ्चितं मोट्टायितम्।**
**कुट्टमितं विद्वेषो ललितं तथा॥**
**विकृतं चेति विज्ञेया दशस्त्रीणां स्वभावजाः॥**

**प्रियस्यानुकृतिर्लीलाश्लिष्टा वाग्वेषचेष्टितैः।**
**विलासोऽति विशेषोऽस्ति प्रियाया वासनादिषु॥**

**मण्डनाच्छादनन्यासो विच्छित्ती रूपदर्शतः।**

**चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः।**

**हर्षाह्लादितगीतादि व्यामिश्रं किलकिञ्चितम्।**

**मोट्टायितं प्रियं स्मृत्वा साङ्गभङ्गादि जृम्भणम्।**

**दुःखोपचारः सौख्योऽपि हर्षात् कुट्टमितं मतम्।**

**विद्वेषोऽभिमतं प्राप्तावपि गर्वादनादरः॥**

**अनाचर्योपदिष्टं स्यात् ललितं रतिचेष्टितम्।**

**वक्तव्यभाषणं व्याजाद् विकृतं दर्शितेङ्गितम्॥५५॥**

**अनुवाद**—काम को न सह सकने वाले वे पुरुष हास और हाव के सहित आदर पूर्वक अमृत में देवों और राक्षसों की भाँति मदिरा में अनुरागवान् हुए॥ ५५॥

**मधु प्रपीय चाभवन्नतानतानतानताः।**

**रमाऽरमाऽऽर मारमाऽऽकुले जनेऽत्र हालया॥ ५६॥**

**अन्वयः**—(ते) मधु प्रपीय अतानतानतानताः अभवन् । अत्र हालया आकुले जने रमा च अरं मारम् आर ॥ ५६ ॥

**अन्वयदीपिका**—मधुप्रपीयेति-च अपरं ते कामिजनाः मधु मद्यं प्रपीय पीत्वा अतानतानतानताः अभवन् । अतानम् अशून्यं च तत्तानं च अतानतानं गानम् । अतानतानस्य भावः अतानतानता । अतानतानतया नताः अतानतानतानताः । सुरां पीत्वा गानोत्सुकाः अभवन्नित्यर्थः । रमा शोभा च अरम् अत्यर्थं मारं कामम् आर प्राप । सौन्दर्यं कामं प्राप । कस्मिन् सति ? अत्र वसन्ते हालया मदिरया जने कामिजने आकुले व्यग्रे सति ॥ ५६ ॥

**यमकबोधिनी**—मध्विति-तास्ताः स्त्रियश्च मधु मद्यं प्रपीय प्रकर्षेण पीत्वा नतानताः न अभवन् इति न किन्तु नतानताः अभवन् बभूवुः । नताः वक्राश्च अनताः सरलाश्च नतानताः । काश्चन मत्तभावाः नताः वक्राः । उर्मिमत् कुञ्चितं नतमित्यमरः । काश्चन वध्वश्च अनता आसन् । अतिशयेन नता इति नतानता नम्रतरा बभूवुः कामोद्रेकात् । चकारः पूर्ववाक्यसमुच्चयेनेत्यन्वयः । च मधु प्रपीय अतानतानतानताः अभवन् । अतानम् अविस्मृतं यत्तानं गानविशेषस्तस्य भावः अतानतानता । तस्या नताः नम्रा अभवन् । अत्रास्मिन् हालया वारुण्या आकुले व्यग्रे जने कामिनीजने अरं शीघ्रं मारमा मारस्य कामस्य श्रीः कामश्रीः आर आप । अरमङ्गो रथाङ्गस्य शीघ्रशीघ्रगयोरपीति शाश्वतः । किं लक्षणा कामश्रीः ? रमा रमयति क्रीडयति तथा । अत्र हालया आकुले जने सति रमा लक्ष्मीः अरं मारं कामम् आरेति व्याख्यानपराः केचित् ॥ ५६ ॥

**दीपिका**—मधु प्रपीयेति—च ते कामिनः मधु मद्यं प्रपीय पीत्वा अतानतानतानताः अभवन् । स्वल्पं तानं गानं तस्य भावः अतानता । तस्यां नताः नम्राः ईषद्गानोत्सुका बभूवुरित्यर्थः । रमा शोभा मारं कामम् अरम् अत्यर्थेन आर प्राप । कामशोभा अभूदित्यर्थः । कस्मिन् सति ? अत्र वसन्ते जने कामिजने हालया मदिरया आकुले व्याकुले सति ॥५६ ॥

**सुबोधिनी**—मध्विति—मधु प्रपीय मधु मद्यं प्रपीय पीत्वा तास्ताः स्त्रियः नता नम्राः आनता अनम्राश्च नाभवन् अपितु अभवन्नेव । या याः पूर्वं नम्रास्तास्ता मधुपाने कृतेऽनम्रा अभवन् । या या अनम्रास्तास्ता मधुपाने कृते नम्रा अभवन् । मारमाकुले मारः कन्दर्पः तस्य मा लक्ष्मीः कन्दर्पशोभा तया आकुलेऽत्र जनेऽन्यैव काचन शोभाऽभूदिति तात्पर्यम् । प्रापीयेति पीङ्पाने इत्यस्य रूपम् । पिबतेस्तु प्रपायेति भवितव्यम् । अभवन्निति भवतेर्लङ् । आरेति आर्तेः लिटि । मधु मद्ये मधु क्षौद्रे मधु पुष्परसे विदुः । यद्वा पूर्वश्लोकोक्तास्ते कामिजनाः च पुनः मधु आसवं प्रपीय पीत्वा अतानतानतानताः अभवन् । अतानम् अक्षरशून्यं यत् तानं गानमूर्च्छनाविशेषः तस्य भावः तत् । तस्याम् आनताः परायणाः सुरां पीत्वा गानोत्सुका अभवन्नित्यर्थः । अत्र वसन्ते जने कामिजने अथवा स्त्रीजनेऽस्मिन् कामिजने हालया मदिरया आकुले मत्ते

सति रमा शोभा मारं कामम् अरम् अत्यर्थम् आर प्राप। मदिरा-पानेन कामो विजृम्भित इत्यर्थः[१] ॥ ५६ ॥

**अनुवाद**—मद्यपान के पश्चात् वे कामी जन गान के लिए उद्यत हुए। मदिरा से व्यग्र होने के कारण कामदेव शीघ्र ही उन कामियों में और भी शोभा को प्राप्त किया ॥ ५६ । ।

**भ्रमरैर्द्रागस्तानि प्रपीय च मधूनि सानुरागस्तानि।**

**दत्तनिरागस्तानि प्रापच्छयनं[२] जनस्त्वरागस्तानि[३] ॥ ५७ ॥**

**अन्वयः**—भ्रमरैः द्राक् अस्तानि दत्तनिरागस्तानि तानि मधूनि प्रपीय च त्वरागः जनः सानुरागः (सन्) तानि शयनं प्रापत् ॥ ५७ ॥

**अन्वयदीपिका**—भ्रमरैरिति-च अपरं सः कामिजनः तानि मधूनि पीत्वा शय्यनं शय्याम् आपत्। कथं भूतानि मधूनि ? भ्रमरैः मधुपैः द्राक् शीघ्रम् अस्तानि त्यक्तानि। पुनः किम्भूतानि मधूनि ? दत्तनिरागस्तानि दत्ता निरागस्ता अनपराधित्वं यैस्तानि। प्रापितानपराधानि। कथं भूतः जनः ? त्वरागः त्वरा वेगेन गच्छतीति त्वरागः शीघ्रगामी। कथं भूतं शयनम् ? तानि तानोऽस्यास्तीति तानि। सवितानमित्यर्थः ॥ ५७ ॥

**यमकबोधिनी**—भ्रमरैरिति-जनः कामिजनश्च तानि पीतशेषानि मधूनि कश्यानि च प्रपीय प्रकर्षेण पीत्वा शयनं शय्यां प्राप आपेत्यर्थः। चकारात् कामिनीजनश्च शय्यां प्राप। किं लक्षणो जनः ? त्वरागः शीघ्रगः। पुनः किं लक्षणः ? सानुरागः सस्नेहः। किं लक्षणानि मधूनि ? द्राक् शीघ्रं भ्रमरैर्मधुपैः अस्तानि क्षिप्तानि। कामिभिः स्वीकृतत्वात् परिहृतानि। पुनः किं लक्षणानि ? दत्तनिरागस्तानि निरागसौ निरपराधस्य भावो निरागस्ता। दत्ता निरागस्ता यैस्तानि तथा। मद्यपाने हि व्यलीकविस्मरणान्निरपराधत्वम्। किं लक्षणं शयनम् ? तानि तानो विस्तारो विद्यते यस्य तत् तानि विस्तीर्णमित्यर्थः ॥ ५७ ॥

**दीपिका**—भ्रमरैरिति-च अपरः जनः कामिजनः तानि मधूनि मद्यानि प्रपीय पीत्वा शयनं शय्यां प्रापत् अगात्। किम्भूतानि मधूनि ? भ्रमरैः षट्पदैः द्राक् शीघ्रम् अस्तानि निरस्तानि। पुनःकिम्भूतानि मधूनि ? दत्तनिरागस्तानि दत्ता निरागस्ता निरपराधित्वं यैस्तानि। किम्भूतः जनः ? त्वरागः उत्तालगामी। किम्भूतानि मधूनि ? तानि

१. विद्यावती - श्लोकोऽयं यमकबोधिन्यां सुबोधिन्यां च न पूर्वश्लोकसम्बन्धेन व्याख्यातः। तत्कृते पदच्छेदोऽस्यैवं विधेयः— ताः च मधुप्रपीय अतानततानता न अभवन् ? अत्र हालया आकुले जने रमा अरं मारम् आर। मारमा अरं रमा आर इति रामर्षिव्याख्या न तथा शोभते, रमेत्यस्य कर्मत्वाऽभावात्।

२. प्राप स शयनमिति 'ञ' पुस्तके पाठः।

३. 'ङ' 'ज' पुस्तकयोः अष्टपञ्चाशत्तमोऽयं श्लोकः।

तानोऽस्य अस्तीति तानि।[१] पुनः किम्भूतो जनः? सानुरागः अनुरागैः सह वर्तमानः ॥५७ ॥

**सुबोधिनी**—भ्रमरैरिति-सानुरागः सस्नेहः एवं त्वरागः त्वरया वेगेन गच्छतीति त्वरागः जनः कामुको दत्तनिरागस्तानि निरपराधता यैस्तादृशानि विस्मारितापराधानि भ्रमरैर्भृङ्गैश्चषकोपरि स्थितैर्द्राक् झटिति अस्तानि त्यक्तानि मधूनि मद्यानि प्रपीय पीत्वा शयनं पर्यङ्कं च प्रापत् अशिश्रियत्। कीदृशं शयनम्? तानि तानो विस्तारोऽस्य अस्तीति तानि सुरतार्थमिति भावः ॥ ५७ ॥

**अनुवाद**—भ्रमरों के द्वारा जल्दी ही छोड़ी गई अनपराधित्व को देने वाली उस मदिरा को पीकर शीघ्र जाने वाला अनुरागयुक्त वह कामी वितान से युक्त शयन में गया ॥५७ ॥

[२] **अदूरवस्थितैः प्रियैः सुदूरवस्त्रकाः कृताः ।**

**मृदूरवश्चकासिरे तदूरवः क्षता नखैः[३] ॥ ५८ ॥**

**अन्वयः**—तदूरवः अदूरवस्थितैः प्रियैः सुदूरवस्त्रकाः कृताः। नखैः क्षताः मृदूरवः चकासिरे ॥५८ ॥

**अन्वयदीपिका**—तदूरवः चकासिरे तासाम् ऊरवः तदूरूः शुशुभिरे। कथं भूताः तदूरवः? प्रियैः कान्तैः सुदूरवस्त्रकाः कृताः सुदूराणि वस्त्राणि येभ्यस्ते सुदूरवस्त्रकाः निकटस्थितैः कान्तैः निष्कासितांशुका इत्यर्थः। कथं भूतैः प्रियैः? अदूरवस्थितैः निकटस्थितैः। यद्वा दुष्टो रवः शब्दो दूरवः। न दूरवः अदूरवः सौम्यशब्दः ! स विद्यते येषां ते अदूरवाः। ते स्थिताश्च तैः अदूरवस्थितैः। मधुरशब्दस्थितैः। पुनः किम्भूतास्तदूरवः? मृदूरवः मृदवश्च ते ऊरवश्च मृदूरवः। कोमलाः विशालाः। पुनः किम्भूतास्तदूरवः? नखैः क्षताः विदारिता इत्यर्थः ॥ ५८ ॥

**यमकबोधिनी**—अदूरेति-अदूरवस्थितैरपि तदूरवः तासां कामिनीनाम् ऊरवस्तदूरवश्चकासिरे शुशुभिरे। किं लक्षणास्तदूरवः? मृदूरवः मृदवः सुकुमाराः ते ऊरवो व्यूढाश्च मृदूरवः वृहदुरुगुरुविस्तीर्णं पुरु पृथुलं महद्विशालं च। व्यूढं विपुलं रुद्रं वरिष्ठमेकार्थमुद्दिष्टम् इति हलायुधः। पुनः किं लक्षणाः? नखैः करजैः क्षताः व्रणिताः। प्रियैर्वल्लभैः सुदूरवस्त्रकाः कृताः सुतरां दूरे वस्त्रकाणि येषां ते तथाभूताः कृताः। किं लक्षणैः प्रियैः? अदूरवस्थितैः अदूरे निकटे अवस्थितैः ॥ ५८ ॥

---

१. विद्यावती – तानि इति पदं प्रथमान्तं नपुंसकम्। नह्यस्य तानो विस्तारोऽस्यास्तीति इति धिया मधुपदस्य विशेषणता भवितुमर्हत्यपि तु शयनस्यैव। तथात्वे बहुवचनप्रयोगापत्तेः ॥

२. 'ग' पुस्तके ५९ तमोऽयं श्लोकः इति तत्र क्रमभङ्गः।

३. 'छ' पुस्तकेऽपठितम्।

**दीपिका**—अदूरवस्थितैरिति-तदूरवस्तासामूरवश्चकासिरे शुशुभिरे। किम्भूतास्तदूरवः? प्रियैः नायकैः सुदूरवस्त्रकाः निरस्तचैलाः कृताः। पुनः किम्भूताः तदूरवः? कोमल-विशालाः पुलकिताः तदूरवः नखैः करजैः क्षताः द्राविताः। किम्भूतैः प्रियैः? अदूर-वस्थितैः निकटस्थैः। यद्वा दुष्टो रवः दूरवः। न दूरवः अदूरवः। तत्र स्थितैः मधुरवचोभिरित्यर्थः ॥ ५८ ॥

**सुबोधिनी**—अदूरेति-अदूरवस्थितैरतिनिकटेऽवस्थितैः प्रियैः भर्तृभिः सुदूरवस्त्रकाः कृताः। सुदूरे वस्त्रं येषां तास्तादृशाः कृता विहिताः। तदूरवस्तासां स्त्रीणाम् उरवः उरुदेशाः मृदूरवः मृदवः कोमलाश्च ते ऊरवो विपुलाः पीनाश्च कोमला विपुलाः नखैः क्षता भिन्नाश्चकासिरे शुशुभिरे सुरतसमये प्रियकरहृतवसनाः कोमलाः स्त्रीणामूरवो रेजुरितिभावः। अवस्थितैरिति वष्टिरल्लोपेत्यादिनाऽल्लोपः। बहुव्रीहित्वात् कः। सक्थि क्लीवे पुमानूरुः। कोमलं मृदुलं मृदुः। वड्रोरुविपुलं पीनमित्यमरः। चका-सिरे इति कासृ दीप्तौ इत्यस्य लिटि रूपम् ॥ ५८ ॥

**अनुवाद**—उनकी जंघायें पास में बैठे प्रियों के द्वारा वस्त्ररहित कर दीं गईं। नखों से विक्षत वे महान् जंघायें सुशोभित हुई ॥ ५८ ॥

**[१] ससमुद्रमहेलाभिस्फुरितगुणाभिस्ततः स्मरमहेऽलाभि।**

**श्रीः प्रवरमहेलाभिस्तथैव पुम्पङ्क्तिभिः परमहेलाभिः ॥ ५९ ॥**

**अन्वयः**—ततः ससमुद्रमहेलाभिस्फुरितगुणाभिः प्रवरमहेलाभिः परमहेलाभिः तथैव युव-पङ्क्तिभिः स्मरमहे श्रीः अलाभि ॥ ५९ ॥

**अन्वयदीपिका**—ससमुद्रेति-ततोऽनन्तरं परमहेलाभिः स्त्रीभिः स्मरमहे कामोत्सवे श्रीः शोभा अलाभि लब्धा। तथैव युवपङ्क्तिभिः युवश्रेणीभिः शोभा अलाभि प्राप्ता। कथं भूताभिः उभयाभिः? ससमुद्रमहेलाभिस्फुरितगुणाभिः महती चासौ इला च महेला। समुद्रैः सह वर्तमाना ससमुद्रा। ससमुद्रा चासौ महेला च ससमुद्रमहेला। ससमुद्र-महेलायां पृथिव्याम् अभिस्फुरिता गुणा यासां ताः ससमुद्रमहेलाभिस्फुरितगुणाः ताभिः ससमुद्रमहेलाभिस्फुरितगुणाभिः। पुनः कथं भूताभिः? परमहेलाभिः परमा उत्कृष्टा हेला लीला यासां ताः परमहेलाः ताभिः परमहेलाभिः ॥ ५९ ॥

**यमकबोधिनी**—स इति-ततस्तदनन्तरं प्रवरमहेलाभिः श्रेष्ठसीमन्तिनीभिः स्मरमहे कामोत्सवे श्रीः शोभा अलाभि प्रापि। महिलायां महेलाभिरिति शब्दप्रभेदः कृतः। तथैव युवपङ्क्तिभिः श्रेणीभिः स्मरमहे श्रीरलाभि इति योजना। किं लक्षणाभिः? प्रवर-महेलाभिः युवपङ्क्तिभिश्च समुद्रमहेलाभिस्फुरितगुणाभिः। ससमुद्रा महेला यासां तास्तथा। ससमुद्रा ससागरा या महती इला पृथ्वी तस्याः अभि सर्वतः स्फुरिताः प्रकटिता गुणाश्चातुर्यादयो यासां तास्तथाविधाभिस्ततः। पुनः किं लक्ष-

१. केषुचित् पुस्तकेषु ५८ तमोऽयं श्लोकः।

णाभिः ? परमा उत्कृष्टा हेला लीला यासां तास्तथा ताभिः । स्याद् भावसूचको हावो हेलास्यैवानुभावनम् ॥ ५९ ॥

**दीपिका**—ससमुद्रमहेलेति-ततोऽनन्तरं प्रवरमहेलाभिः परमोत्कृष्टस्त्रीभिः तथैव युवपङ्क्तिभिः तरुणश्रेणीभिः स्मरमहे कामोत्सवे श्रीः शोभा अलाभि लब्धा । किम्भूताभिरुभाभिः ? ससमुद्रमहेलाभिस्फुरितगुणाभिः । महती इला महेला ससमुद्रा चासौ महेला च ससमुद्रमहेला तस्याः अभिस्फुरितगुणाः यासां ताभिः । पुनः किम्भूताभिः उभाभिः ? परमहेलाभिः परमा उत्कृष्टा हेला लीला यासां ताभिः ।५९ ॥

**सुबोधिनी**—ससेति-ततोऽनन्तरं ससमुद्रमहेलाभिः स्फुरितगुणाभिः ससमुद्रा ससागरा महती दीर्घा या इला भूमिस्तस्याम् अभिस्फुरिताः श्रुताः गुणाः यासां ताभिः । परमहेलाभिः परमा उत्कृष्टा हेला लीला यासां ताभिः । प्रवरमहेलाभिः प्रचुरस्त्रीभिः स्मरमहे कन्दर्पोत्सवे श्रीः शोभा सुखं वा अलाभि प्राप्ता । तथा तेन प्रकारेण युवपङ्क्तिभिः तरुणश्रेणीभिः श्रीः प्राप्ता । यद्वा ताभिः करणेन सह युवपङ्क्तिभिः शोभा प्राप्ता । उभयत्रायि विशेषणम् । डु लभष् प्राप्तावित्यस्य लुङि चिण् भावकर्मणोरितिच्लेश्चिणि कृते लभेश्चेति नित्यं नुमि प्रसक्ते विभाषा चिण्णमुलोरिति नुमागमाभावे वृद्धौ रूपम् । महती इला महेला । गो-भूवाचस्त्विडा इलाः इत्यमरः । महेला महिला चेति द्विरूपकोशः ॥ ५९ ॥

**अनुवाद**—सागर से युक्त दीर्घ पृथ्वी में सब ओर स्फुरित गुणों वाली (तथा) उत्कृष्ट इच्छा वाली एवं सुन्दर लीला वाली स्त्रियाँ और युवाओं की पंक्तियों ने काममहोत्सव में शोभा को प्राप्त किया ॥ ५९ ॥

**[1]इह मणितारावलयश्रित इव नृत्ते कृतावतारा वलयः ।**

**[2]वक्षसि तारावलयस्वना निपेतुश्च हारतारावलयः ॥ ६० ॥**

**अन्वयः**—इह ताराः वलयस्वनाः (अभवन्) वक्षसि च हारतारावलयः वलयः मणितारावलयश्रिते नृत्ते कृतावतारा इव निपेतुः ॥ ६० ॥

**अन्वयदीपिका**—इहेति-पुरुषायितमनेनोच्यते । इह शय्यायां वलयस्वना अभवन् । कङ्कणरवा अभवन् । चापरं हारतारावलयः निपेतुः । विपरीतसुरतं च तत् । प्रियोरसि त्रुटितहारयष्टयः इत्यर्थः । हारमौक्तिकश्रेण्यः पतन्ति स्म । चापरम् इह नृत्ये कृतावतारावलयः अभवन् । त्रिवलयः कृतावतारावलयः अभवन् । त्रिवलयः नृत्ये कृतावतारावलय इव अभवन् । कृतप्रारम्भा इव । कृता अवतारस्य उत्पत्तेः आवलिः श्रेणिः याभिस्ताः कृतावतारावलयः । कथं भूते नृत्ते ? मणितारावलयश्रिते इव । मणयः मणितमेव आरवः मणितारावः सुरतशाब्दितम् । मणितारावस्य लयः साम्यं मणिता-

१. 'छ' पुस्तकेऽपठितोऽयम् ।

२. अभवंस्तारा इति 'ञ' पुस्तके पाठः ।

रावलयः। मणितारावलये आश्रितं मणितारावलयाश्रितं तस्मिन् मणितारावलयाश्रिते। सुरतशब्दसाम्यगते। कथं भूताः वलयस्वनाः ? ताराः उच्चाः ॥ ६० ॥

**यमकबोधिनी**—इहेति-इह अस्मिन् सुरते ताराः अत्युच्चकैः वलयस्वनाः आवापकध्वनयः अभवन् आसन्। किं लक्षणाः वलयस्वनाः ? कृतावतारावलयः कृताः अवताराः वलयः अवतारपङ्क्तयो यैस्ते तथा। अनेकप्रकारा इत्यर्थः। कस्मिन्निव ? नृत्ते इव यथा नृत्ये अनेकप्रकाराः स्वनाः भवन्ति तद्वत्। किं लक्षणे सुरते ? मणितारावलयश्रिते। मणितारावाः मणितशब्दाः। तेषां लयः साम्यं तेन श्रितम् आश्रितं तस्मिन् नृत्ते। यथा तालगानादिना साम्ये रसातिशयः तथाऽत्रापि। वलयस्वनमणितारावसाम्ये रसातिशयः सूचितः। मणितं रतिकूजितमित्यमरः। अत एव हाराश्च ताराश्च त एव वलयः उपाहाराः निपेतुः। नितरामपतन्। हारा मौक्तिकस्रजश्च तारामणिजडिताश्च हारताराः। यथा नृत्ये गानादिप्रसन्नैः पुरुषैः उपहाराणि पात्यन्ते इत्यभिप्रायः। यद्वा हारतारावलयः इत्येकं पदम्। हारा एव तारावलयः। ताराः मनोहराः आ समन्ताद् वलयः तारावलयः उपहाराः ते वलयः निपेतुः। वलिश्च मददण्डे स्याद्वलिः पूजोपहारयोरिति विश्वः। प्रणवे मणिभेदे च तारः स्याच्च महाध्वजौ। तारं सूत्रे मनोहरे इति कोशान्तरात्। मुक्ता सिद्धौ च तारः स्यादित्यमरः। केचित् पद्यमिदं प्रकारान्तरेण योजयन्ति तदुपेक्षितमस्माभिः ॥ ६० ॥

**दीपिका**—इह मणिताराव इति-इह नृत्ये विपरीतरतौ वलयः त्रिवलयः कृतावतारा इव। अभवन्निति शेषः। ताराः उच्चाः वलयस्वनाः कङ्कणशब्दाश्च अभवन्निति। हारतारावलयः हारा मौक्तिकश्रेण्यः वक्षसि उरसि निपेतुः पतन्ति स्म। किम्भूते नृत्ते ? मणितारावलयस्थिते। सुरतभाषितसाम्यमाश्रिते। लयः साम्यमित्यर्थः ॥ ६० ॥

**सुबोधिनी**—विपरीतरतिं वर्णयन्नाह-इहेति-मणितारावलयश्रिते मणिते सुरतकूजिते आरवः शब्दः तस्य लयः साम्यं तेन श्रिते गीतवाद्यादिसाम्ययुक्ते इह रते नृत्ये इव नाट्यम् इव वलयः त्रिवलीभङ्गाः कृतावताराः कृतावतारोऽवतरणं याभिस्तादृश्योऽभवन्। उपरि सुरतेऽत्यासक्त्या वलयो न दृश्यन्त इति यावत्। वलयस्वनाः कङ्कणकणकणत्काराश्च तारा अत्युच्चा अभवन्। हारतारावलयः हारस्य ताराः शुद्धमौक्तिकानि तेषां श्रेण्यश्च प्रियवक्षसि निपेतुः स्खलुरित्यर्थः। यद्वा हारेषु यस्तारावलिर्यष्टिविशेषः ते वक्षसि प्रियोरसि निपेतुः। रतिसम्भ्रमात् त्रुटितहारयष्टयः प्रियोरसि निपातिता इत्यर्थः। सप्तविंशतिमौक्तिका यष्टिस्तारावलिः नक्षत्रमालास्यात् सप्तविंशतिमौक्तिकैरित्यमरादित्यर्थः। नृत्येऽपि पात्राणामवतरणम्। तद्धारादित्रुटनं कङ्कणक्वणादि भवति। लयः साम्यमथास्त्रियाम्। मणितं रतिकूजितम्। वलिः प्राण्यं गजे स्त्रियामित्यमरः अभवन्निति भवतेर्लुङि। तारोच्चैस्त्रयस्त्रिषु। कटकं वलयोऽस्त्रियाम्। मुक्ता शुद्धो हारः स्यात्। निपेतुरिति पातेर्लिटि ॥ ६० ॥

**अनुवाद—**शय्या में कंगनों के ऊँचे स्वर हुए। सुरत शब्द के लय में आश्रित इस नृत्य में प्रिय के वक्ष स्थल पर मोतियों के हार और कंगन आदि उपहार की तरह गिरे ॥ ६० ॥

**[१]तयार्द्रधीरमायया [२]मुदाऽमनारमायया।**

**नलो विहारमाययावधः कृता रमा यया ॥ ६१ ॥**

**अन्वयः—**मुदा आर्द्रधीः अमनाः नलः यया रमा अधः कृता तया रमायया अमायया विहारम् आययौ ॥ ६१ ॥

**अन्वयदीपिका—**तयेति-नलः तया दमयन्त्या सह विहारम् आययौ। क्रीडां चक्रे। तया कया? यया दमयन्त्या रमा लक्ष्मीः अधः कृता तिरस्कृता। किम्भूतो नलः? आर्द्रधीः द्रवचित्तः। पुनः किम्भूतो नलः? अमनाः सकामत्वात् विकलचित्तः। किम्भूतया तया? रसमायया रमयतीति रमः भर्ता। स एव अयः सौभाग्यं यस्याः सा रमाया तया रमायया। भर्तृभाग्यया। पुनः किम्भूतया तया? अमायया न विद्यते माया कपटं यस्याः सा अमाया तया अमायया निष्कपटया इत्यर्थः ॥ ६१ ॥

**यमकबोधिनी—**मुदेति-नलस्तया दमयन्त्या सह मुदा हर्षेण विहारं क्रीडाम् आययौ आगच्छति स्म। किं लक्षणो नलः? आर्द्रधीः स्निग्धबुद्धिः। किं लक्षणया तया? अमायया अकपटया। पुनः किं लक्षणया तया? मनोरमायया मनोरमः आयो लाभो यस्याः सा तथा तया। मुदाऽमना रमाययेति वा पाठः। तत्र किं लक्षणो नलः? अमनाः शून्यचित्तो मनसो दमयन्त्यां गतत्वात्। किं लक्षणया तया? रमायया रमो भर्ता। स एव अयः सानुकूलो विधिर्यस्याः सा तथा तया। यया दमयन्त्या रमा लक्ष्मीः अधः कृता परिभूता ॥ ६१ ॥

**दीपिका—**तयार्द्रधीरिति-नलः तया दमयन्त्या सह विहारं कामकेलिम् आययौ अनुबभूव। तया कया? यया रमा लक्ष्मीः रूपेण तिरस्कृता। किम्भूतो नलः? मुदा सन्तोषेण आर्द्रधीः द्रवीभूतचित्तः। पुनः किम्भूतो नलः? अमनाः कामवशाद्विकलचित्तः। किम्भूतया तया? रमायया रमते इति रमः भर्ता। तस्मिन् अयः सौभाग्यं यस्याः तया। पुनः किम्भूतया तया? अमायया निष्कपटया ॥ ६१ ॥

**सुबोधिनी—**तयेति-आर्द्रधीः शृङ्गारस्निग्धबुद्धिर्नलो मुदां हर्षाणाम् अनारमायया आरामो विरतिस्तद्रहितः अनारमः। अयः शुभावहो विधिर्यस्यास्तादृश्या हर्षाविरतभाग्यये-त्यर्थः। अमायया मायारहितया तया दमयन्त्या सहितो नलो विहारं क्रीडामाययौ आगमत्। यद्वा या दमयन्ती मुदां हर्षाणाम् अनारमाय अविश्रामाय भवति तया सह नलो विहारमाययौ। यया रमा लक्ष्मीः अधः कृता रूपेण सौभाग्येन वा

---

१. मुदामना रमायया तयार्द्रधीरमाययेति 'क' 'छ' पुस्तकयोः पाठः। एवमेव 'ग' पुस्तकेऽपि।

२. 'मुदा मनोरमायया' इति 'ग' 'घ' पुस्तकयोः पाठः।

लक्ष्मीतोऽप्यधिका तादृश्या दमयन्त्या सह नलो विजहारेति भावः । आययाविति यातेर्लिटि ॥ ६१ ॥

**अनुवाद**—प्रसन्नता से द्रवितचित्तवाला, काम से व्याकुल मन वाला वह नल जिसने (रूप और सौभाग्य) से लक्ष्मी को भी तिरस्कृत कर दिया था, उस दमयंती के साथ विहार के लिए आया ॥ ६१ ॥

**साऽशङ्काऽमाया सीत्कृतिनी भैमी नलस्य कामायाऽऽसीत् ।**

**कामनिकामायासी द्युतिं तदिष्टां सः चाधिकामाऽऽयासीत्[1] ॥ ६२ ॥**

**अन्वयः**—साशङ्का अमाया सीत्कृतिनी भैमी नलस्य कामाय आसीत् । स च कामिनिकामायासी तदिष्टाम् अधिकां द्युतिम् आयासीत् ॥ ६२ ॥

**अन्वयदीपिका**—साशङ्केति-भैमी भीमतनया नलस्य कामाय मनोरथसिद्धये आसीद् बभूव । च अपरं सः नलः अधिकां द्युतिं कान्तिम् अयासीत् आप । किम्भूतां द्युतिम् ? तदिष्टां तस्या इष्टा तदिष्टा तां तदिष्टाम् । कथं भूता भैमी ? साशङ्का सभया । पुनः किम्भूता भैमी ? अमाया निष्कपटा । पुनः कथं भूता भैमी ? सीत्कृतिनी सीत्कारशब्दयुक्ता । कथं भूतो नलः ? कामनिकामायासी कामे निकामम् अत्यर्थम् आयासो विद्यते यस्यासौ कामनिकामायासी कामोत्सववान् ॥ ६२ ॥

**यमकबोधिनी**—सेति-भैमी दमयन्ती नलस्य कामाय सम्भोगाय आसीत् बभूव । किं लक्षणा भैमी ? साशङ्का सभया । अथवा सा दमयन्तीति योज्यम् । किं लक्षणा ? अशङ्का शङ्कारहिता । पुनः किं लक्षणा दमयन्ती ? अमाया निष्कपटा । पुनः किं लक्षणा ? सीत्कृतिनी सीत्कृतिर्विद्यते यस्याः सा सीत्कृतिनी सीत्कारवती । सुरते हि कामिनीनां तथात्वात् । स च नलः कामिनिकां कामिन्या इयं कामिनिका तां कामिनीजनसम्बन्धिनीम् । अधिकां प्रचुरां द्युतिं कान्तिम् आयासीत् आगतः । किं लक्षणः सः ? आयासी आयासवान् । अथवा कामनिकामायासीत्येकं पदम् । कामेन निकामम् अतिशयेन आयासो विद्यते यस्य स तथा । स च नलः अधिकां द्युतिम् अयासीदिति । किं लक्षणां द्युतिम् ? तदिष्टां तया दमयन्त्या इष्टा वाञ्छिता ताम् । कम्रः कामयिताभीकः कमनः कामनोऽभिकः इत्यमरः ॥ ६२ ॥

**दीपिका**—साशङ्केति-भैमी नलस्य कामाय अभिलाषसिद्धये आसीदभूत् । पुनः सः नलः तदिष्टां तस्याः दमयन्त्या इष्टाम् अभीप्सिताम् अधिकामुत्कृष्टां द्युतिं कान्तिम् आयासीत् प्रापत् । किम्भूता भैमी ? साशङ्का सभया । पुनः किम्भूता भैमी ? सीत्कृतिनी सीत्कारशब्दयुक्ता । किम्भूतः सः ? कामनिकामायासी कामे निकामम् अत्यर्थं प्रयासो यस्य सः ॥ ६३ ॥

---

१. ङ्—ञ पुस्तकयोः ६३ तभोऽयं श्लोकः

**सुबोधिनी**—साशङ्केति—सा भैमी अशङ्का शङ्कारहिता कृतिनी निपुणा पुण्यवती वा। अमाया निर्व्याजा आसीदुज्जगाम। नलकाममपूरयदित्यर्थः। कामनिकामायासी कामेन मन्मथेन निकाममत्यर्थम् आयासः परिश्रमो वा यस्य तादृक्। स च नलश्च तदिष्टां दमयन्तीप्सिताम् अधिकां द्युतिं क्रीडाम् आयासीत् आगतः। दमयन्ती रतावसरे निर्व्याजाशङ्का नलस्याभिलाषाय बभूव। नलश्च दमयन्तीमनोभिलषितं समपूरयदिति परस्परं सोत्कर्षोऽभूदिति भावः। आसीदिति। अस्तेरेकं लङि। अपरमपि असगतावित्यस्य लुङि। यद्वा भैमी कथं भूता? साशङ्का[1] सभया प्रौढरात्रित्वात् स्त्रीस्वभावत्वाच्च। पुनः अमाया निष्कपटा। पुनः सीत्कृतिनी सीत्कारवती। यद्वा साशङ्कामायासीत्कृतिनीत्येकं विशेषणम्। आशङ्कासहितया माया कपटं तया सीत्कृतिनी भयच्छलेन सीत्कारवती। यद्वा मायया सीत्कृतिनी नलस्य कामाय मनोरथसिद्धयै आसीत् बभूवेत्यर्थः ॥ ६२ ॥

**अनुवाद**—सीत्कार करने वाली डरी हुई निष्कपट वह दमयंती नल की मनोरथ पूर्ति के लिए थी। काम के कारण अत्यधिक आयास करने वाले उस नल ने उस (दमयंती) के द्वारा चाही गई कान्ति को प्राप्त किया ॥ ६२ ॥

**इति नानामायानान्नलः कलिभुवां बलेन ना मायानाम्।[2]**
**व्यसनानामायानान्निधिररमत राज्यजन्मनामायानाम् ॥ ६३ ॥**

**अन्वयः**—नानामायानाम् आयानां कलिभुवां राज्यजन्मनां व्यसनानां निधिः ना नलः इति मायानाम् अयानां बलेन अरमत नाम ॥ ६३ ॥

**अन्वयदीपिका**—इतीति-नाम इति निश्चितम्। इति उक्तप्रकारेण ना नलः आयानां बलेन शुभावहविधीनां समूहेन अरमत् चिक्रीड। कथं भूतो ना? व्यसनानां दुःखानां निधिः स्थानम्। कथं भूतानां व्यसनानाम्? कलिभुवां कलिजन्मनाम्। पुनः कथं भूतानां व्यसनानाम्? नानामायानां नानाछद्मनाम्। पुनः कथं भूतो नलः? आयानां सुखानां निधिः आश्रयः स्थानम्। किम्भूतानामायानाम्? राज्यजन्मनां राज्यात् जन्म येषां तानि राज्यजन्मानि तेषां राज्यजन्मनाम्। राज्योद्भवानाम् ॥ ६३ ॥

**यमकबोधिनी**—इतीति-नामेति प्रसिद्धौ। नल इत्यमुना प्रकारेण आयानां लाभानां निधिरभवत् बभूव। किं लक्षणानामायानाम्? राज्यजन्मनां राज्योत्पन्नानाम्। तत्र पञ्चम्यन्तं हेतुमाह-कस्मात्? आयानां शुभावहविधीनाम् आयानात् आगमनात्। पुनर्व्यसनानामापदां निधिरभवत्। तत्र तृतीयान्तं हेतुमाह कलिभुवां कलिजातानां नानामाया-

---

१. विद्यावती-नह्यत्रावसरो विस्तरस्य। साशङ्का शङ्कया भयेन सहिता साशङ्का। सम्भोगस्य अनधिकपरिचयात् तद्गतमायादिज्ञानरहितत्वाच्च साशङ्का अमाया इति विशेषणद्वयस्य प्रयोगः। सा नवोढा अतो रतिज्ञानस्यन्यूनत्वद्योतनायैतेन विशिनष्टि। एवमेव तस्या नवोढत्वद्योतनाय नलस्य च कामनैपुण्यवर्णनाय सीत्कृतिनीति पदं प्रयुनक्ति।

२. विधिरिति 'क' पुस्तके पाठः।

नाम् अनेककपटानां बलेन सत्वेन। व्यसनं विपदि भ्रंशे दोषे कामजकोपने इत्य-मरः ॥६३ ॥

**दीपिका**—इतीति-नाम निश्चितम्। इति उक्तप्रकारेण ना नलः अयानां शुभावहविधीनां बलेन वलिष्टतया अरमत रमते स्म। किम्भूतो नलः ? राज्योद्भवानाम् आयानां सुखानां कलिभुवां कलिजन्मनां व्यसनानां दुःखानां च निधिः स्थानम्। किम्भूतानां व्यसना-नाम् ? आयानां दीर्घाणाम् ॥ ६३ ॥

**सुबोधिनी**—इतीति-इत्यनेन प्रकारेण नलो नैषधः नानामायानां नानाविधानि व्याजानि येषु तादृशां कलिभुवां कलेर्भवन्तीति कलिभुवः कलिजनितास्तेषां व्यसनानां विपदाम् आयनाद् आगमनपर्यन्तम् आगमनावधेः अरमत अक्रीडत्। कथं भूतः ? बलेन करणेन राज्यजन्मनां राज्ये जनपदे जन्म येषां तादृशानामायानां धनागमानां निधि-र्निधानमाधारः इति यावत्। अभवदिति पाठे कलिजनितापत्यागमनावधिनलो राज्यश्रीभाजनमभूत् इति भावः। अयः शुभावहो विधिः। अभवदिति भवते-र्लङि[१] ॥६३ ॥

**अनुवाद**—इस तरह कलियुग के नाना प्रकार के व्यसनों के आश्रयभूत नल ने राज्य में उत्पन्न अनेक संपत्तियों एवं शुभावह विधियों की सहायता से रमण किया ॥ ६३ ॥

**स्वयंवरादनन्तरं मही महीमहीनधी ।**[२]

**ररक्ष नैषधस्तदा रराज राजराजराः ॥ ६४ ॥**

**अन्वयः**—अहीनधीः मही नैषधः स्वयंवरात् अनन्तरं महीं ररक्ष। तदा राजराजराः रराज ॥६४ ॥

**अन्वयदीपिका**—स्वयंवरादिति-नैषधो नलः स्वयंवरादनन्तरं महीं पृथ्वीं ररक्ष अपालयत्। तदा तस्मिन् समये रराज शुशुभे। किम्भूतो नलः ? मही महो विद्यते यस्य सः मही। उत्सववानित्यर्थः। पुनः कथं भूतो नलः ? अहीनधीः उत्कृष्टबुद्धिरित्यर्थः। पुनः कथं भूतो नलः ? राजराजराः राजराजस्य धनदस्य रा इव राः यस्यासौ राजराजराः। राः लक्ष्मीः इत्यमरः। वसु तोये धने मणाविति विश्वः ॥ ६४ ॥

**॥ श्रीनृसिंहाश्रमविरचितायां नलोदयटीकायामन्वयदीपिकायां द्वितीय उल्लासः ॥**

**यमकबोधिनी**—स्वयमिति-नैषधो नलः स्वयंवरात् अनन्तरं महीं पृथ्वीं ररक्ष जुगोप। किं लक्षणो नैषधः ? मही उत्सववान्। पुनः किं लक्षणः ? अहीनधीः अहीना अधिका धीः बुद्धिर्यस्य स तथा। अहीनस्य शेषस्येव धीर्यस्येति वा। तदा महीरक्षणावसरे

---

१. विद्यावती-कलिभुवामित्यादिपदोपस्थापनेन 'सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेदित्याचरति कविः। पूर्वं कलेरनुल्लेखादागामिनि सर्गे च तद्वर्णनादत्र तस्य सूचनमावश्यकमिति ध्येयम्।'

२. विद्यावती– अहीनधीः इत्यनेनापि कलेः संयोगात् तस्य बुद्धिहीनत्वं भवितेति सूचयति। ततः पूर्वं तु तस्य बुद्धिनैर्मल्यम् आसीदेवेति।

रराज शुशुभे । पुनः किं लक्षणो नैषधः ? राजराजराः राजराजो धनाधिपः तस्येव राः धनं यस्य स तथा । रा द्वयोर्विभवे स्वर्णे चित्रे कर्युरत्यपीति रुद्रः ॥ ६४ ॥

**इति श्रीरामऋषिश्चक्रे महाकाव्ये नलोदये ।**

**आश्वासस्य द्वितीयस्य टीकां यमकबोधिनीम् ॥**

**॥ इति श्रीमद्रामऋषिविरचितायां यमकबोधिन्यां श्रीनारायणभट्टसुनुरविदेवविरचितमहाकाव्यनलोदयटीकायां वसन्तक्रीडावर्णनं नाम द्वितीय आश्वासः ॥**

**दीपिका—**स्वयंवरादिति-अहीनधीः पूर्णबुद्धिः नैषधः नलः स्वयंवरात् विवाहानन्तरं पश्चात् पृथ्वीं ररक्ष पालयामास । तदा तस्मिन् समये रराज शुशुभे । किम्भूतो नैषधः ? मही उत्सववान् । पुनः किम्भूतो नैषधः ? राजराजराः राजराजस्य धनदस्य इव राः धनं यस्य सः ॥ ६४ ॥

**॥ इति श्रीमदात्रेयगोविन्दभट्टविरचितायां टीकायां द्वितीय आश्वासः ॥**

**सुबोधिनी—**स्वयमिति-तदा तस्मिन् काले नैषधो नलः स्वयंवरादनन्तरं स्वयंवरात् परतः महीं भुवं ररक्ष अपालयत् । कीदृशः ? मही सोत्सवः पुनः अहीनधीः विशालबुद्धिः । राजराजराः राजराजः कुबेरः तस्येव रा धनं यस्य स तादृशः सन् रराज शुशुभे । स्वयंवरोत्तरं भुवमरक्षन्नलः कुबेरप्रायसम्पच्चासीदिति भावः । राजराजो धनाधिपः । अर्थरैविभवा अपि इत्यमरः । रराजेति राजतेर्लिटि ॥ ६४ ॥

**॥ इति श्रीनलोदयकाव्यटीकायां सुबोधिन्यां द्वितीय उच्छ्वासः ॥**

**अनुवाद—** उत्सवों से युक्त महान् बुद्धि वाले उस नल ने स्वयंवर के बाद पृथ्वी का पालन किया । उस समय कुबेर के समान सम्पत्तियों से युक्त वह सुशोभित हुआ ॥६४ ॥

# तृतीय उल्लासः

**अथ सुरवृषभाः स्वरतः प्रेक्ष्य कलिं प्रस्थिता महाद्भास्वरतः[१] ।**

**यः कृतिषु शुभास्वरतः पप्रच्छुस्तद्गतिं घननिभाः स्वरतः ॥१ ॥**

**अन्वयः—**अथ भास्वरतः अतः महात् स्वः प्रस्थिताः स्वरतः घननिभाः सुरवृषभाः यः शुभासु कृतिषु अरतः (तम्) कलिं प्रेक्ष्य तद्गतिं पप्रच्छुः ॥१ ॥

**अन्वयदीपिका —**

**नलोदयस्योत्तरार्धस्य टीकेयं प्रतन्यते ।**

**नृसिहाख्येन मुनिना सर्वेषामुपकारतः ॥**

अथेति—अथानन्तरं सुरवृषभाः इन्द्रादयः तं कलिं प्रेक्ष्य तद्गतिं पप्रच्छुः । किम्भूताः ? अतः महाभास्वरतः स्वयंवरात् स्वः स्वर्गं प्रस्थिताः पुनः कथं भूताः ? स्वरतः स्वरेण घननिभाः मेघतुल्याः । तं कम् ? यः शुभासु कृतिषु अरतः अनासक्तः ॥१ ॥

**यमकबोधिनी—**अथेति सिंहावलोकनन्यायेन पूर्ववृत्तमाह । अथानन्तरं सुरवृषभाः देवश्रेष्ठाः इन्द्रादयः कलिं प्रेक्ष्य कलियुगमवलोक्य तद्गतिं पप्रच्छुः । तस्य कलेर्गतिं तद्गतिस्ताम् । कले ! त्वं कुत्र यासीत्यपृच्छन्नित्यर्थः । किं लक्षणाः सुरवृषभाः ? स्वरतः शब्दात् घननिभाः जलदतुल्याः मेघगम्भीरवाच इत्यर्थः । पुनः किं लक्षणाः ? भास्वरतः कान्तियुक्तात् महात् उत्सवात् स्वः स्वर्गं प्रस्थिताः चलिताः । यः कलिः शुभासु मङ्गलासु कृतिषु अरतः न रतोऽरतः ॥१ ॥

**दीपिका—**वसन्तवर्णनानन्तरं मार्गमिलितस्य कलेः देवानां च संवादवर्णनेनापरकथां वर्णयति । अथेति—अथानन्तरं सुरवृषभाः देवश्रेष्ठाः इन्द्रादयःतं कलियुगं प्रेक्ष्य दृष्टवा गतिम् आगमनकारणं पप्रच्छुः । तं कम् ? यः शुभासु कृतिषु भव्यकार्येषु अरतः अनुरागरहितः । किम्भूताः सुरवृषभाः ? अतः अस्मात् प्रसिद्धात् भास्वरतः विराजमानात् महात् स्वयंवरात् स्वः स्वर्गः प्रस्थिताः निर्गताः । पुनः किम्भूताः सुरवृषभाः ? स्वरतः शब्दतः घननिभाः मेघतुल्याः मेघगम्भीररवा इत्यर्थः ॥१ ॥

---

१. महद्भास्वरतः इति 'च' पुस्तके पाठः

**सुबोधिनी**—अथेति - अथ स्वयंवरानन्तरं अतोऽस्माद् भास्वरतो देदीप्यमानात् महात् स्वयंवरोत्सवात् स्वः स्वर्गं प्रस्थिताः प्रचलिताः सुरवृषभाः सुरोत्तमाः इन्द्रादयः कलिं प्रेक्ष्य तद्गतिं तस्य कलेर्गमनं पप्रच्छुः । यः कलिः शुभासु कृतिषु अरतः । न रतः अरतः विरक्तः इति यावत् । कीदृशाः सुरोत्तमाः ? स्वरतः कण्ठध्वनेः घननिभाः । घनो मेघस्तत्सन्निभाः कलिविशेषणं वा । दमयन्तीस्वयंवरात् स्वर्गं गच्छन्तो देवाः मध्ये कलिं दृष्ट्वा कुत्र गच्छसीति तद्गमनं पृष्टवन्त इति भावः । स्युरुत्तरपदे व्याघ्रपुङ्गवकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः । मह उद्धव उत्सवः इत्यमरः । पप्रच्छुरिति पृच्छ धातोर्लिटि ॥१ ॥

**अनुवाद**—तब महान् तेजशाली इस स्वयंवर से स्वर्ग को जा रहे बादलों के समान स्वरवाले उत्तम देवताओं ने शुभकृतियों मे अनासक्त (रहने वाले उस) कलि को देख कर उसकी गति को पूंछा ॥१ ॥

**यशसामाऽऽयामितया हृतः श्रिया भीमदुहितृमायामितया ।**

**तदधिगमायाऽमितया स्पृहयाऽद्य मनुष्यलोकमाऽऽयामि[1] तया ।२ ॥**

**अन्वयः**—भीमदुहितृमायाम् इतया यशसाम् आयामितया श्रिया हृतः तया अमितया स्पृहया तदधिगमाय अद्य मनुष्यलोकम् आयामि ॥२ ॥

**अन्वयदीपिका**—कलिर्वदति स्वागमनकारणम् । यशसामिति—भीमदुहितृमायाम् इतया यशसां कीर्तीनाम्, आयामिनो भावः आयामिता तथा यशोदैर्घ्यरूपया लक्ष्म्या हृतः वशीकृतः अहं तदधिगमाय तस्याः भीमदुहितुरधिगमः तस्मै । तत्प्राप्त्यै अमितया प्रचुरया तया स्पृहया वाञ्छया अभिलाषेण मनुष्यलोकम् आयामि आगतोऽस्मि ॥२ ॥

**यमकबोधिनी**—दैवेः पृष्टः कलिः कथयति — यशेति — आयामो विद्यते येषां तानि आयामीनि । तेषां भावस्तत्ता तया । यशसामिति अद्य अहं भीमदुहितृमायाम् इतया प्राप्तया श्रिया शोभया हृतः सन् तया प्रसिद्धया स्पृहया आकांक्षया मनुष्यलोकम् आयामि आगच्छामि । भीमदुहिता दमयन्ती एव माया ताम् । ननु तया त्वं कथं हृत इति चेत्तत्र तृतीयान्तं हेतुमाह— यशसाम् आत्मकीर्तीनाम् आयामितया विस्तारित्वेन । किं लक्षणया स्पृहयां ? अमितया परिमाणरहितया । कस्मै ? तदधिगमाय दमयन्तीप्राप्त्यै । भैम्याः कान्तिवर्णश्रवणपरवशोऽहं दमयन्तीवारणाय भूलोकं गच्छामीति श्लोकार्थः ॥२ ॥

**दीपिका**—यशसामिति — कलिः स्वागमनकारणं कथयति । अहम् अद्य इदानीं तदधिगमाय तस्याः दमयन्त्याः प्राप्त्यै बहुतरया स्पृहया वाञ्छया मनुष्यलोकं भूलोकम् आयामि

१. मनुष्यमायामि इति 'छ' पुस्तके पाठः ।

आगच्छामि। किम्भूतोऽहम्? भीमदुहितृमायामितया। यशसाम् आयामितया कीर्तीनां दीर्घतया हृतः वशीकृतः ॥२॥

**सुबोधिनी**—देवैर्गमनं पृष्टः कलिराह-यशसामिति-यशसाम् आयामितया कीर्तीनां दैर्घ्यवत्तया अतियशस्विन्या। इन्नन्तात्तल्। भीमदुहितृमायां भीमस्य राज्ञो दुहिता पुत्री दमयन्ती तन्मायां तद्व्याजम् इतया गतया तया श्रिया लक्ष्म्या हृत आहृतचित्तः तदधिगमाय दमयन्तीरूपलक्ष्मीलब्धयेऽमितया असङ्ख्यया बहुतरया स्पृह्या इच्छया अद्य अस्मिन् वर्तमानदिने मनुष्यलोकम् आयामि गच्छामि। आत्मजस्तनवः सूनुः सुतः पुत्रःस्त्रियास्त्वमी। आहुर्दुहितरं सर्व इत्यमरः। आयामीति यातेर्लटि ॥२॥

**अनुवाद**— दमयन्ती की माया को प्राप्त करने के कारण (उसकी)यशोदीर्घता रूपी शोभा से हरण किया गया (मैं कलि) अपनी अनंत इच्छा से उस (दमयंती) की प्राप्ति के लिये आज मनुष्यलोक को जा रहा हूं ॥२॥

**इति विकलो मायायास्तदुक्त ऊचे जनोऽमलो मा यायाः।**[1]

**शुभशीलोऽमायायाः स्थितो नलोऽस्या वरोऽनुलोमायायाः ॥३॥**

**अन्वयः**—मायायाः विकलः अमलः तदुक्तः जनः अमायायाः अनुलोमायायाः अस्याः शुभशीलः नलः वरः स्थितः (अतः) तत्र मा यायाः इति ऊचे ॥३॥

**अन्वयदीपिका**—इतीति - अमलो निष्कपटो जनो देवजनः इति वक्ष्यमाणम् ऊचे उक्तवान्। कीदृशो जनः? मायायाः कपटात् विकलो रहितः। पुनः कीदृशो जनः? तदुक्तस्तेन कलिना उक्तः। हे कले! अस्याः दमयन्त्याः नलः वरः स्थितः तया वृतः। कीदृश्याः अस्याः? अमायायाः न माया कपटं यस्याः सा अमाया तस्या अमायायाः निष्कपटायाः इत्यर्थः। पुनः कीदृश्याः? अनुलोमायायाः अनुलोमः[2] अयः शुभावहो विधिर्यस्याः सा अनुलोमाया तस्याः अनुलोमायायाः अनूकूलदैवाया इत्यर्थः। अयः शुभावहो विधिरित्यमरः ॥३॥

**यमकबोधिनी**—इतीति - तदुक्तो जनो देवजन इति वक्ष्यमाणम् ऊचे व्रवीतिस्म। तेन कलिना उक्तः तदुक्तः। किं लक्षणो जनः? मायायाः कपटात् विकलः निष्कपटः सुभाषीत्यर्थः। इतीति किम्? हे मायायाः मायां कापट्यं यातीति मायायास्तस्य सम्बोधनं हे मायायाः! हे कले! त्वं मा यायाः मा गच्छ। यतः अस्याः दमयन्त्याः वरः परिणेता नलो वैरिसेनिः स्थितः अस्तीति शेषः। किं लक्षणो जनो? विकलः कलारहितः। किं लक्षणो नलः? शुभशीलः मङ्गलस्वभावः। किं लक्षणायाः दमयन्त्याः? अनुलोमायायाः अनुलोमः सानुकूलः आयो भाग्यं यस्याः सा तस्याः। अनुकूलशुभावहविधेः पुनः किं लक्षणायाः अस्याः? अनुलोमायायाः अनलोऽग्निः

१. अनलोमायायाःइति 'ग' 'घ'पुस्तकयोः पाठः।

२. विद्यावती - अनुलोमः अनुकूलफलदः अयः दैवं यस्याः सा अनुलोमाया तस्याः इति स्पष्टार्थः।

उमा पार्वती ताभ्याम् आयो लाभो नलप्राप्तिलक्षणो यस्याः सा तथा तस्याः। अमलोमायायाः इति पाठे अमला चासौ उमा च अमलोमा तया आयो यस्याः सा इत्यर्थः। अमलः अमायाया इति व्याख्या पौनरुक्त्यादुपेक्षिता ॥३ ॥

**दीपिका**—इतीति—इत्युक्तप्रकारेण तदुक्तस्तेन कलिना भाषितोऽमलो निर्मलो जनः देवजन ऊचे बभाषे। हे मायायाः कले ! या भैमी उमायाः पार्वत्याः शुभशीला सिद्धिम् इता अस्याः भैम्याः नलः वरः स्थितः। तया नलो वृतः इत्यर्थः। किम्भूतो जनः ? मायायाः विकलः कपटरहितः। किम्भूताः या अस्याः ? अनुलोमायायाः अनुलोमः अतुलः अयः शुभावहोविधिर्यस्याः ॥३ ॥

**सुबोधिनी**—इतीति इत्यनेन प्रकारेण तदुक्तस्तेन कलिना उक्तो भाषितः अमलो निर्मलो अमरो वा रलयोरैक्यात् ।जनो देवलोक ऊचे अकथयत्। किमकथयदित्याह अमायायाः निर्व्याजायाः अस्याः दमयन्त्याः शुभशील उत्कृष्टस्वभावो नलः वरः स्थितः वरः प्रसिद्धः। कीदृश्याः ? विकलोमायायाः विकलो दीनः उमायाः पार्वत्याः अयः शुभावहो विधिर्यया तादृश्याः पार्वत्युत्तमभाग्यायाः। कीदृश्याः ? अनुलोमायाः अनुलोमः अनुकूलः अयः शुभादृष्टः यस्याः तस्याः। मा यायाः मा गच्छ। दमयन्त्या नलो वृतस्त्वं मा गच्छेति भावः यद्वा मायायाः दम्भतः बुद्धितो विकलः सन् मा गच्छेत्यर्थः। यद्वा देवलोकविशेषणम्। माया शम्बरीकृपा दम्भो बुद्धिश्चेति हैमः ॥३ ॥

**अनुवाद**— (पूर्वोक्त प्रकार से)कलि के द्वारा कहे गये वचनों को सुनकर निर्मल तथा निष्कपट देवगण ने निश्छल एवं उत्तम सौभाग्यवाली इस (दमयन्ती) का वर नल (हो चुका) है (अतः) वहां मत जाओ—ऐसा कहा ॥३ ॥

**वच इति वस्वादिभ्यः श्रुत्वा कलिरुत्सवासवस्वादिभ्यः।**
**मखसर्वस्वादिभ्यश्चुकोप दोषात् सः मदभुवः स्वादिभ्यः ॥४ ॥**

**अन्वयः**—उत्सवासवस्वादिभ्यः मखसर्वस्वादिभ्यः वस्वादिभ्यः इति वचः श्रुत्वा स्वात् दोषात् इभ्यः मदभुवः सः कलिः चुकोप ॥४ ॥

**अन्वयदीपिका**—वच इति कलिः वस्वादिभ्यो देवेभ्यः इति वचः श्रुत्वा चुकोप चुक्रोध। कथं भूतेभ्यो वस्वादिभ्यः ? (उत्सवासवास्वादिभ्यः।[१]) पुनः कथं भूतेभ्यः ? मखसर्वस्वादिभ्यः मखानां यज्ञानां सर्वस्वं हुतं द्रव्यादिकम् अदन्तीति तेभ्यः। कथं भूतः कलिः ? मदभुवः मदाद् भवतीति मदभूः तस्मात् स्वात् दोषात् इभ्यः पूर्णः (तथा)[२] पुष्ट इत्यर्थः ॥४ ॥

**यमकबोधिनी**—वच इति—कलिः वस्वादिभ्यः इति वचः श्रुत्वा चुकोप चुक्रोध। वसुरग्निरादिर्येषां ते तथा तेभ्यः। सप्तार्चिर्बहुलः शिखी हुतवहो

---
१. -२. कोष्ठकयोः सम्पादकस्य।

वैश्वानरोऽग्निर्वसुरिति हलायुधः। किं लक्षणेभ्यो वस्वादिभ्यः? उत्सव एव आसवो मद्यं तस्य स्वादो विद्यते येषां ते तथा तेभ्यः। पुनः किं लक्षणेभ्यः? मखसर्वस्वादिभ्यः मखस्य यज्ञस्य सर्वस्वमत्तुं शीलं येषां ते तथा तेभ्यो मखसर्वस्वादिभ्यः। किं लक्षणः कलिः? स्वात् दोषात् इभ्यः आढ्यः समृद्धः स्वदोषपूर्ण इत्यर्थः। किं लक्षणात् दोषात्? मदभुवः अभिमानोत्पन्नात्। मदनभुवः इति पाठे कामोत्पन्नात् ॥४॥

**दीपिका**—वच इति- प्रसिद्धः कलिः वस्वादिभ्यो देवेभ्यः इत्युक्तं वचः श्रुत्वा चुकोप चुक्रोध। किम्भूतेभ्यः वस्वादिभ्यः? उत्सवासवस्वादिभ्यः उत्सव एव आसवो रसः तं स्वादयन्तीति ते तेभ्यः। पुनः किम्भूतेभ्यः वस्वादिभ्यः? मखसर्वस्वादिभ्यः मखानां यज्ञानां सर्वस्वं हुतद्रव्यादिकम् अदन्तीति ते तेभ्यः। किम्भूतः कलिः? मदभुवः मदोत्पन्नात् स्वात् निजात् दोषात् दुष्टभावादिभ्यः आढ्यः। इभ्य आढ्यो धनीत्यमरः ॥४॥

**सुबोधिनी**—वच इति। स कलिरुत्सवासवस्वादिभ्यः उत्सवलक्षणो य आसवो मधु तत्स्वादिभ्यः पीतवद्भ्यः मखसर्वस्वादिभ्यः मखस्य यज्ञस्य सर्वस्वं यज्ञधनं सोमम् अत्तुं शीलं येषां ते तादृग्भ्यो वस्वादिभ्यः इन्द्रादिदेवेभ्यः इत्युक्तप्रकारं वचः वचनं श्रुत्वा मदभुवः मदात् दर्पात् भवतीति मदभूः तस्मादिति दोषविशेषणम्। स्वात् स्वकीयाद् दोषाद् दूषणाच्चुकोप। क्रुद्धोऽभूत्। कथम्भूतः कलिः? इभ्यः आढ्यः। मध्वासवो माधवकः। सप्ततन्तुर्मखः क्रतुरित्यमरः। स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने। इभ्य आढ्यो धनी स्वामीत्यमरः ॥४॥

**अनुवाद**—उत्सव रूपी आसव का आस्वादन करने वाले, यज्ञ के सर्वस्व के उपभोगी इन्द्र आदि देवों के मुख से ऐसे वचन सुन कर अपने दोषों से मतवाला वह (कलि) देवों पर क्रोधित हो उठा ॥४॥

**युग्मकम्**—

**प्रबलतमानबलतया संयोज्य नले सुरोत्तमानवलत या।**
**तेनाऽमा नवलतया तरुणेव तयाऽऽस्यतां न मानवलतया[१] ॥५॥**
**इति बलवानन्तरतः कलिः स्वयं[२] त्रिजगदश्नुवानन्तरतः।**
**अवहितवानन्तरतस्तद्वृद्धिषु[३] नलस्य विविशवानन्तरतः ॥६॥**

---

१. मानवरतया इति 'ञ' पुस्तके पाठः।

२. किलैतज्जगाद् वानन्तरतः इति 'घ''ङ' 'च' पुस्तकेषु पाठः। 'ञ' पुस्तके तु कलिः कलिम् इति पाठः।

३. समृद्धिषु इति 'ङ' 'छ' पुस्तकयोः पाठः। ग पुस्तके समृद्धिषु इति पाठः स्वीकृतः किन्तु व्याख्यायां वृद्धिषु इति पाठो दृश्यते।

**अन्वयः**—या प्रबलतमान् सुरोत्तमान् अबलतया संयोज्य नले अबलत । मानवलतया तया तेन अमा तरुणेव नवलतया न आस्यताम् इति बलवान् कलिः स्वयम् अन्तरतः त्रिजगत् अश्नुवान् अवहितवान् अन्तरतः नलस्य अन्तरतः तद्बुद्धिषु विविशवान् ॥५—६ ॥

**अन्वयदीपिका**—प्रबलेति इतीति युग्मकम् । कलिः इति उक्त्वा अन्तरतः छिद्रप्राप्तेरित्यर्थः । नलस्यान्तः शरीरमध्ये विविशवान्प्रविवेश । इति किम् ? भो देवाः ! तया प्रसिद्धया दमयन्त्या तेन नलेन अमा सह क्षणमपि न आस्यतां न स्थीयताम् । कयेव ? नवलतयेवेति लुप्तोपमा यथा नवलतया नूतनवल्ल्या नलेन तृणविशेषेण सह न स्थीयते । तया कया ? या प्रबलतमान् उत्कृष्टतमान् सुरोत्तमान् देवान् अवलतया तुच्छत्वेन संयोज्य नलं मनुष्यम् अबलतया स्त्रीस्वभावेन अवलत वृतवती । कीदृश्या तया ? मानवलतया मानवी च सा लता चेति मानवलता तया मानवलतया । कथम्भूतः कलिः ? अन्तरतः तस्य इति 'अन्तः स्वान्तेऽन्तिके नाशे स्वरूपे च मनोहरे' इत्यमरः । पुनः किम्भूतः ? वलवान् बलयुक्तः । पुनः किंविधः ? तद्बुद्धिषु अवहितवान् सावधानः । पुनः कथं भूतः ? त्रिजगत् अनन्तरं स्वयम् अश्नुवान् व्याप्तवान् । विविशवान् इति विश प्रवेशने धातुः ॥५—६ ॥

**यमकबोधिनी**—प्रबलेति[१] —तया मानवलतया मनुष्यशाखया दमयन्त्या तेन नलेन अमा सार्द्धं न आस्यतां न स्थीयताम् । मया कृतः तद्वियोगो भवतु । आस उपवेशने । कया केनेव ? नवलतया नवप्रतानिन्या तरुणवृक्षेणेव यथा विच्छिन्नेन वृक्षेण नवलतया न स्थीयते तथा तया । लताव्रततिराख्याता शाखा शाखिनामिति शाश्वतः । तया कया ? या दमयन्ती प्रबलतमान् अतिबलिष्ठान् सुरोत्तमान् इन्द्रादीन् नले संयोज्य स्तुत्यादिभिः संयुक्तान् अनुकूलान् कृत्वा अबलत अगच्छत् । नलगृहे इति शेष । तत्र तृतीयान्तं हेतुमाह अबलतया निर्बलत्वेन असमर्थत्वेन । योजनान्तरं वा । किंलक्षणया तया ? अमानबलतया अपरिमाणबलत्वात् । वरता रलयोरभेदात् श्रेष्ठता यस्याः सा तथा । तेनेति सहार्थे तृतीया । तरुणे वर इति मानवलतया सम्बन्धो वा विकल्पोपमानसमुच्चयोत्प्रेक्षा वितर्कसन्देहेषु । मानवलतया मानस्य बलं तस्य भावस्तत्ता तया सह ॥५ ॥ इतीति—किलेति सत्ये एतत् पूर्वोक्तं जगाद उवाच । किंलक्षणः कलिः ? इति पूर्वोक्तप्रकारेण अन्तरतः मध्ये वलवान् बली । 'वा' इत्ययं विकल्पे वितर्के वा । अन्तरतोऽन्तरं नलस्य अन्तरतः मध्ये च पुनः तस्य बुद्धिषु विविशवान् प्रविष्टः । कस्मात् ? अन्तरतः छिद्रात् । वृद्धिश्च ताः बुद्धयश्च तद्बुद्धयस्तासु । तद्बुद्धीत्युपलक्षणम् । अशुचित्वलक्षणं छिद्रं प्राप्य नलशरीरे च प्रविष्ट इत्यर्थः । पुनः किं-लक्षणः कलिः ? अवहितवान् सावधानः । पुनः किं-लक्षणः कलिः ? अन्तरतः अन्ते नाशे रतः मृत्युरतः । नलस्येत्यस्यानुषङ्गः । अथवा

---

१. यमकबोधिन्यां नानयोर्युग्मकत्वं स्वीकृतम् । अन्यास्वपि टीकासु तथैव । अन्वयदीपिकायाः प्रामाण्यादेवास्माभिरुपकल्पितं युग्मकत्वम् ।

योजनान्तरम् । अतः अन्तरवानम् । वान् वनसम्बन्धि अन्तर्मध्ये तरतो लङ्घयतो नलस्य तद्बुद्धिषु विविशवान् । पुनः कीदृशः ? त्रिजगत् अश्नुवान् व्याप्तः । अत्र अन्तरमव्ययं नपुंसके । अन्यत्समानम् ॥६ ॥

**दीपिका**—प्रबलमेति — पूर्वश्लोके उक्तः कलिश्चुकोप । अथ तानेवमाहेति शेषः । तया दमयन्त्या तेन नलेन अमा सह मानवलतया मानबलत्वेन तरुणवृक्षेण नवलतयेव नूतनवृतत्येव न आस्यतां न स्थीयताम् । यथा तरुणवृततिर्मिलित्वा पतति तथैव इयमातिष्ठत्वित्यर्थः । तया कया ? प्रबलतमान् श्रेष्ठान् सुरोत्तमान् अबलतया तुच्छत्वेन संयोज्य नले नरि अबलत वृतवती । नलं वृतवतीत्यर्थः ॥५ ॥ इतीति- अतः परं कविर्वदति । अतोऽनन्तरमिति हेतोः कलिः स्वयं राज्ञः नलस्य अन्तः मध्ये अन्तरतः छिद्रतः विविशवान् प्रविष्टः । किम्भूतः कलिः ? बलवान् बलिष्ठः । पुनः किम्भूतः अन्तरतःअन्ते अनिष्टे रतः युक्तः । पुनः किम्भूतः कलिः ? त्रिजगत् जगत्त्रयम् अश्नुवान् भक्षितवान् । पुनः किम्भूतः कलिः ? समृद्धिषु सम्पत्सु अवहितवान् सावधानः । पुनः किम्भूतः कलिः ? अन्तरतः स्वरूपमास्थाय स्थितः । अन्तः स्नानेऽन्तिके नाशे स्वरूपे च मनोहरे इति अमरः ॥६ ॥

**सुबोधिनी**—प्रबलेति - या दमयन्ती सुरोत्तमान् देवश्रेष्ठान् अबलतमान् उत्कृष्टबलान् अवलत । या अबलत्वेन संयोज्य अविगणय्य मानवलतया अहङ्कारसामर्थ्येन नलेऽबलत नलेऽन्वरज्यत । यद्वा तया किम्भूतया ? मानवलतया मनुष्यरतया । रलयोरैक्यात् । तथा दमयन्त्या तेन नलेन अमा सह न आस्यतां न स्थीयताम् । कया केनेव ? नवलतया नवीनव्रतत्या तरुणेव वृक्षेणेव । या दमयन्ती देवान् असमर्थान् ज्ञात्वा नलमवरिष्ट सा नलेन सह वियुज्यतामिति शशापेति भावः । यद्वा प्रबलतमान् देवान् संयोज्य स्वयंवरमानाय्य अवलतया स्त्रीत्वेन नलेऽनुरक्तेत्यर्थः । अवलायाः भावोऽवलता । त्वतलोर्गुणवचनस्येति पुंवद्भावः । यथा लता सुरवृक्षान् अबलतया असारत्वेन संयोज्य नले तुच्छतृणे वल्यते पश्चात् तेन सह क्षणमपि न स्थीयते तथेत्यर्थः । लतया कथं भूतया ? मानवलतया माने विस्तारे वलता अतिशयो यस्यास्तयेति भावः । अमा सह समीपे च । आस्यतामिति आस उपवेशने इत्ययस्य लोटि ॥५ ॥ इतीति —इत्यनेन प्रकारेण बलवान् कलिरेतत् पूर्वोक्तं शापवचनं जगाद । किल निश्चये । अतः अनन्तरम् अन्तरतः छिद्रतः छिद्रम् अवकाशं वा प्राप्य । ल्यब्लोपे वा पञ्चमी । यद्वा अन्तरतः अन्तर्द्धानात् समृद्धिषु सम्पत्सु सत्सु । तद्बुद्धिष्विति पाठे पूवोक्त-शापवचनवृद्धिषु इत्यर्थः । अवहितवान् सावधानः । वानं वनसमूहम् । तरतो गच्छतो नलस्यान्तः हृदयं विविशवान् प्रविवेश । यद्वा अन्तरतद्वृद्धिष्विति पाठे अवकाशशापदुःखबाहुल्येषु अवहितवान् सावधानः यद्वा तरं विनाशं तनोतीत्यन्तरम । तत्तादृशा वृद्धयः नलस्य ऋद्धयो धनागमाः तेषु । यद्वा अन्तरं तद्वृद्धिषु अन्तरं छिद्रे तद्वृद्धि तस्य नलस्य वृद्धिषु धनागमेषु अवहितवान् यथा वृद्धिर्न भवति इति । पुनरन्तरतः नाशरतः । एवं

शापवचनं पूर्वोक्तं कलिरुक्तवान्। प्रवेशछिद्रान्वेषणसावधानश्च मृगयां गतस्य नलस्य हृदयमध्यास्तेति भावः। अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि(चेत्यमरः)। अन्तोऽध्यवसितौ मृत्यौ स्वरूपे निश्चयेऽन्तिके (इति चामरः)। वानमिति तस्यसमूह इत्यण्। विश प्रवेशन इत्यस्माद् धातोर्लिटि। क्वसौ कृते विभाषा गमहनविद्विशामिति वसोरिड् विकल्पः ॥६॥

**अनुवाद**—जिसने उत्कृष्ट देवताओं को स्त्रीस्वभाव के कारण तुच्छ मान कर नल का वरण किया। उस मानवलता (दमयंती) को उसके साथ उसी प्रकार नहीं रहने दिया जायेगा। जिस प्रकार तरुण (तृण विशेष) के साथ नई लता नहीं रह पाती। ऐसा कह कर शक्तिशाली कलि ने स्वयं शीघ्र ही त्रिलोक को व्याप्त कर लिया। वह सावधानी पूर्वक छिद्रों से नल की समृद्धियों में प्रविष्ट हो गया ॥५—६॥

**सोऽथ सदारो दरतः पुष्करविजितो नलः सदा रोदरतः।**

**व्याजाद् दारोदरतः स्वपुरान्निर्यातवानुदारोदरतः ॥७॥**

**अन्वयः**—अथ स नलः दारोदरतः व्याजात् पुष्करविजितः (सन्) दरतः सदारः उदारोदरतः स्वपुरात् सदा रोदरतः निर्यातवान् ॥७॥

**अन्वयदीपिका**—स इति-अथानन्तरं सः नलः दारोदरतः तदुदरसम्बन्धिनः। व्याजात् कपटात् पुष्करेण स्वभ्रात्रा विजितः सन् दरतः त्रासात् स्वपुरात् निर्यातवान् गतः। किम्भूतो नलः? सदारः दारहितः। पुनः कथं भूतः? सदा रोदरतः सदा 'सर्वदा' रोदने रतः। कथं भूतात् स्वपुरात्? उदारोदरतः उदाराः दातृपुरुषाः मध्ये यस्य तस्मात्। उदारो दातृमहतोरित्यमरः ॥७॥

**यमकबोधिनी**—स इति-अथ कलिप्रवेशानन्तरं स नलः स्वपुरान्निर्यातवान् निर्गतः। किं लक्षणो नलः? सदारः सपत्नीकः। पुनः किंलक्षणो नलः? दरतः त्रासात् सदा निरन्तरं रोदरतः रोदने रतः। पुनः किंलक्षणो नलः? दारोदरतो व्याजात् पुष्करविजितः दारोदरस्य द्यूतस्याऽयं दारोदरस्तस्मात्। दारोदरं च द्यूतेऽपि। छद्मना पुष्करनाम्ना भ्रात्रा विजित इत्यर्थः। किं लक्षणात् स्वपुरात? उदारोदरतः उदारम् उदरं यस्य तत् तस्मात् महन्मध्यात् अतिविस्तीर्णादिति यावत्। यद्वा उदाराः दातारो दरे मध्ये यस्येति तथा तस्मात्। चन्द्रशेखरादिवद् बहुब्रीहिः। उदारो दातृमहतोरित्यमरः ॥७॥

**दीपिका**—सोऽथेति-अथानन्तरं सदारः सस्त्रीकः स नलः दुरोदरतः व्याजेन छलेन दरतः भयात् स्वपुरात् नगरात् निर्यातवान् निर्गतः। व्याजेन प्रवृत्ता दुरोदरत इति व्याजेन दुरोदरतः। किम्भूतः सः? सदा रोदरतः अनवरतरोदनयुक्तः। पुनः किम्भूतः सः? पुष्काराख्येन वंश्येन विजितः। किम्भूतात् स्वपुरात्? उदारोदरतः उदारा दरा नरा वसन्ति यत्र तस्मात्। यद्वा उदार इति नलविशेषणम्। उदरतः नीरन्ध्रात् बहुतरादिति दुरोदरविशेषणं पदद्वयम्। दरोऽस्त्रियां भये श्वभ्रे इत्यमरः ॥७॥

**सुबोधिनी**—सोऽथेति-अथ कलिप्रवेशानन्तरं दारोदरतः द्यूतसम्बन्धिनो व्याजात् कपटात् पुष्करेण भ्रात्रा विजितः पराजितः स नलः दरतः भयात् पीडया वा उदारोदरत; उदारं विशालमुदरं मध्यं यस्य तादृशात् स्वपुरात् स्वगृहात् नगराद्वा सदारः दाराः दमयन्ती तया सहितो निर्यातवान् निरगमत् । यद्वा राज्यभ्रंशानन्तरं कलिसङ्क्रमणात् नलस्य जलोदरं जातमिति पुराणवार्ता । वृहदुदरहेतोरित्यर्थः । कीदृशाः ? सदा सर्वदा रोदे अश्रुक्षरणे रतोऽनुरक्तः । रुदन्निति यावत् । दुरोदरदुरोदरे इति वैजयन्ती । तस्येदमित्यण् पञ्चम्यास्तसिल् । अगारे नगरे पुरः । दुरोऽस्त्रियां भये श्वभ्रे । उदारो दातृमहतोरित्यमरः ॥७ ॥

**अनुवाद**—द्यूत के बहाने कपट से पुष्कर द्वारा जीता गया वह नल भयसे पत्नी सहित उदार और दानी पुरुषों से युक्त अपने नगर से निकल गया ॥७ ॥

**असमानानाऽऽहाऽरिस्स्मैनं शब्दांश्च किममुना नाऽहारि ।**

**अपि तेनाऽनाहारि भ्रान्तं भूषणमपास्य नानाहारि ॥८ ॥**

**अन्वयः**—अरिः एनम् असमानान् शब्दान् आह स्म (हे नल !) अमुना (मया तव) किं न अहारि ? अपि तेन नानाहारि भूषणम् अपास्य अनाहारि भ्रान्तम् ॥८ ॥

**अन्वयदीपिका**—असमानानिति- रिपुः शत्रुः पुष्करः एनं नलम् असमानान् अनुचितान् शब्दान् दुष्टवाक्ययानि आह स्म अब्रवीत् । हे नल ! अमुना मया तव किं न अहारि ? अपि तु सर्वमेव हृतमित्यर्थः । ततोऽनन्तरं नलेन अनाहारि न आहारो विद्यते यस्यां क्रियायां तद् यथा भवति तथा भ्रान्तम् । किं कृत्वा ? नानाहारि नानाविधा हारा विद्यन्ते यस्मिन् तद् भूषणम् अपास्य त्यक्त्वा ॥८ ॥

**यमकबोधिनी**—असेति-अरिः शत्रुः पुष्करः एनं नलं प्रति असमानान् असतः शब्दान् आह स्म ब्रवीति स्म । समानाः सत्समैके स्युरित्यमरः । च पुनः अमुना अरिणा पुष्करेण किं न आहारि किं न ह्रियते स्म । अपितु नलस्य सर्वं हृतमित्यर्थः । तेनापि नलेनापि अनाहारि यथा स्यात् तथा भ्रान्तम् । अनाहेन दैर्घ्येण आरो गमनं विद्यते यत्र । दीर्घप्रचारमटितमित्यर्थः । अथवा अकारप्रश्लेषः अनाहारी यथा स्यात् तथा भ्रान्तम् । आहाररहितं भ्रान्तं पर्यटितमित्यर्थः । किं कृत्वा ? नानाहारि बहुप्रकारहारयुक्तं भूषणम्, अलङ्कारम् अपास्य त्यक्त्वा ॥८ ॥

**दीपिका**—असमानानिति-अरिः पुष्करः एनं नलम् असमानान् अयोग्यान् शब्दान् आह स्म अब्रवीत् । हे नल ! अमुना मया च पुनः ते तव किं न अहारि हृतम् ? अपितु सर्वमेव । तेनापि नलेन अनाहारि आहाररहितं यथा स्यात् तथा नानाहारि नानाप्रकारमनोहरं भूषणमपास्य भ्रान्तं पर्यटितम् ॥८ ॥

**सुबोधिनी**—असेति-अरिः शत्रुः पुष्करो रिपुरेव वा एनं नलम् असमानान् अनुचितांश्च शब्दान् वाणीराह स्म । भर्त्सनावचनान्यशिश्रवदित्यर्थः । अमुना नलेन किं वस्तु नाहारि न हारितम् । यद्वा अमुना पुष्करेण अस्य नलस्य सम्बन्धि किं वस्तु न अहारि अपितु

सर्वमेव हृतमित्यर्थः। तेन नलेन हारि मनोज्ञं नाना बहुविधं भूषणमलङ्कारकुण्डलकेयूरादिकमापास्य त्यक्त्वा अनाहारि आहारस्याभावोऽनाहारः सोऽस्तीत्यस्मिन्निति तादृशमाहाररहितं यथा स्यादेवं भ्रान्तं वनेषु भ्रमितम्। द्यूते पुष्करविजितो नलो भूषणमपास्य वने बभ्रामेति भावः। अहारीति हृञोर्लुङि. चिणि ॥८ ॥

**अनुवाद**—शत्रु (पुष्कर) ने इसे (नल को) अपमानजनक शब्द कहे। इस (पुष्कर) ने उस (नल) का क्या हरण नहीं किया? इस नल ने अनेक प्रकार के हारों से युक्त आभूषणों को त्याग कर तथा अनाहार रह कर (वन मे) भ्रमण किया ॥८ ॥

**शुचमकरोदन्यस्य भ्रमन्नलः पथि पदं सरोदं न्यस्य।**
**न च पुनरोदन्यस्य त्राणायाऽभूत् पुरं परोदन्यस्य ॥९ ॥**

**अन्वयः**—नलः भ्रमन् पथि सरोदं पदं न्यस्य अन्यस्य शुचम् अकरोत्। च पुनः ओदनि पुरम् अस्य परोदन्यस्य त्राणाय न अभूत् ॥९ ॥

**अन्वयदीपिका**—शुचमिति—नलः भ्रमन् सन् पथि मार्गे सरोदं रोदनं रोदः तेन सह पदं चरणं न्यस्य आरोप्य अन्यस्य शुचम् अकरोत्। च पुनः परं श्रेष्ठम् ओदनं यस्मिन्निति ओदनि पुरम् अस्य नलस्य त्राणाय नाभूत्। किम्भूतस्य अस्य? परोदन्यस्य परा उदन्या[1] यस्य स तथा तस्य ॥९ ॥

**यमकबोधिनी**—शुचिमिति—नलः अन्यस्य जनस्यापि शुचं शोकम् अकरोत् किं पुनस्तच्छोककथा। किं कुर्वन्? पथि मार्गे सरोदं साश्रुविमोचनं यथा स्यात् तथा पदं चरणं न्यस्य निक्षिप्य भ्रमन्। च पुनः ओदनि ओदनयुक्तमपि पुरं नगरं गृहं वा पुनरस्य नलस्य त्राणाय रक्षणाय नाभूत् न बभूव। आगारे नगरे पुरमित्यमरः। ओदनं भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिवः इत्यमरः। किं लक्षणस्यास्य? परोदन्यस्य परा उत्कृष्टा उदन्या पिपासा यस्य स तथा तस्य। उदन्या तु पिपासा तृडित्यमरः ॥९ ॥

**दीपिका**—शुचमिति-नलः भ्रमन् सन् अन्यस्य शत्रोरपि शुचम् अकरोत्। का अन्येषां वार्ता। किं कृत्वा? पथि मार्गे सरोदं रोदनसहितं यथा स्यात् तथा पदं चरणं न्यस्य स्थापयित्वा। उदनि उदनयुक्तम् अपि। अत्रान्नादिपूर्णमपि पुरं नगरम् अस्य नलस्य त्राणाय रक्षणाय नाभूत्। किम्भूतस्यास्य? परोदन्यस्य परा उत्कृष्टा उदन्या पिपासा यस्य सः ॥९ ॥

**सुबोधिनी**—शुचमिति-पथि मार्गे सरोदं रोदनं रोदस्तेन सहितं साश्रु। यद्वा स नलः रुदन् रोदनं कुर्वन् पदं चरणं विन्यस्य क्षिप्त्वा भ्रमन् अन्यस्य पुष्करस्य वा शुचं शोकम् अकरोत् अकार्षीत्। च पुनः अस्य नलस्य परोदन्यस्य ओदनार्हस्य परम् अन्यत्

---

१. विद्यावती— उदन्या तु पिपासेत्यमरः।

अन्नजलादिना त्राणाय रक्षणाय न अभूत्। नलः कण्टकवति मार्गे कोमलचरणतया रुदन् परिभ्रमन् सर्वेषां शोकमकरोत् क्षुत्तृषितस्यास्य रक्षणाय कोऽपि नाभूत्। निराहार एव आसीदित्यर्थः। मन्युर्दैन्ये क्रतौ क्रुधि[1] पदं व्यवसितित्राणस्थान-लक्ष्माङ्घ्रिवस्तुषु। उदन्येति तदर्हतीति यः। अशनाय बुभुक्षा क्षुद्ग्रासस्तु कवलार्थकः। उदन्या तु पिपासा तृट् इत्यमरः। अभूदिति भुवो लुङ् ॥९॥

**अनुवाद**—रोते और भटकते हुए नल ने मार्ग में पैर रख कर शत्रु को भी शोकयुक्त कर दिया। अत्यधिक धन धान्य से युक्त वह नगर प्यास से व्याकुल उस (नल) की रक्षा नहीं कर सका ॥९॥

**नाऽस्य रमानाऽऽवासस्तच्च[2] खगा जहुरर्थ्यमाना वासः।**

**अपि[3] मदमानावास स्वरोषजलधिं तरन् क्षमानावा सः ॥१०॥**

**अन्वयः**—अस्य रमा न, आवासः (च) न। तच्च अर्थ्यमानाः खगाः वासः जहुः। सः क्षमानावा स्वरोषजलधिं तरन् अपि मदमानौ आस ॥१०॥

**अन्वयदीपिका**—नास्येति—अस्य नलस्य रमा लक्ष्मीर्न। आवासः गृहमपि न। अस्तीति शेषः। अपरं च तेन नलेन अर्थ्यमानाः दमयन्त्याः क्रीडार्थं गृह्यमाणाः खगाः हंसाः कलिमायाभूताः अस्य वासो वस्त्रं जहुः हृतवन्तः। क्षमानावा क्षमा क्षान्तिः सैव नौः तया स्वरोषजलधिं कोपसमुद्रं तरन् स नलः गतः मदमानयोः आवासो यस्मात् तादृशः। अभूदिति शेषः ॥१०॥

**यमकबोधिनी**—नेति अस्य नलस्य रमा श्रीर्न। पुष्करविजितत्वात् आवासो निवासस्थानं च न कलियुगविशिष्टत्वात्। तच्च प्रशस्तं वासो वस्त्रं खगाः पक्षिणः जहुः हरन्ति स्म। किंलक्षणाः खगाः? अर्थ्यमानाः वासः प्रतिदत्तेति राज्ञा याच्यमाना अपि। सोऽपि नलोऽपि क्षमानावा क्षान्तिनौकया स्वरोषजलाधिं निजक्रोधसमुद्रं तरन् सन् मदमानौ हर्षगर्वौ आस चिक्षेप। पक्षिजनितक्रोधमुपशमयन् सन् मदमानावपि तत्याजेत्यर्थः। हर्षप्रमोदवन्मद इत्यमरः आसेति असु क्षेपणे इति धातोर्लिट् प्रथमपुरुषैक वचनम् ॥१०॥

**दीपिका**—नास्य रमेति— अस्य नलस्य रमा लक्ष्मीः न नास्तीत्यर्थः। आवासः निवास-स्थलमपि न नास्ति। पुनः खगाः तद्वर्तमानं वासः वस्त्रं जहुः हरन्ति स्म। किम्भूताः खगाः? अर्थ्यमानाः दमयन्तीमनोनुरञ्जनार्थमभ्यर्थ्यमानाः। स नलः क्षमानावा क्षमानौकया एव स्वपापजलधिं स्वपापसमुद्रं तरन् सन् मदमानौ गर्वाहङ्कारौ आस चिक्षेप ॥१०॥

---

१. अमरादुदाहरति।

२. तेन इति 'क' 'छं' पुस्तकयोः पाठः।

३. 'गत' इति 'क' 'छ' पुस्तकयोः पाठः।

**सुबोधिनी**—नास्येति अस्य नलस्य रमा लक्ष्मीर्न। आवासो गृहमाच्छादनमासीत् इति अध्याहार:। तच्च वास: तस्य वस्त्रम् अर्थ्यमाना: क्रीडार्थमाहरेति दमयन्त्या याच्यमाना: खगा: कलिमायाविर्भूता: हंसा: जहु:। दमयन्ती परिहृतवस्त्रैकेदेशं परिधाय हंसजिघृक्षया स्ववस्त्रं तदुपरि क्षिप्तम्। तद्वस्त्रं गृहीत्वा हंसा ययुरिति पुराणवार्ता। स नल: क्षमानावा शान्तिनौकया स्वरोषजलधिं स्वक्रोधसमुद्रं तरन् उल्लङ्घयन् मदगर्वमानमभिमानं च आस चिक्षेप। लक्ष्मी: स्थलं नास्य आसीत्। कुत्रापि न स्थितवानित्यर्थ:। पथि च तद्वासो गृहीत्वा पक्षिणो गता:। असौ च गर्वाभिमानौ अत्याक्षीत्। आस इति असु क्षेपणे इत्यस्य लिटि ॥१० ॥

**अनुवाद**—इस (नल) के धन नहीं था और आवास भी नहीं था। दमयंती द्वारा चाहे गये पक्षी (हंस) वस्त्र लेकर भी चले गये। उसने अपने क्रोध समुद्र को क्षमारूपी नाव से तैरते हुए गर्व और अभिमान को छोड़ दिया ॥१० ॥

**तापशतेन वसा नौ द्रवेदितीमौ सुखादृतेऽनवसानौ।**[१]
**चेलान्तेन वसानौ चेरतुरेकेन पर्वते नवसानौ ॥११ ॥**

**अन्वय:**—तापशतेन नौ वसा द्रवेत् इति इमौ सुखात् ऋते अनवसानौ एकेन चेलान्तेन वसानौ नवसानौ पर्वते चेरतु: ॥११ ॥

**अन्वयदीपिका**—तापेति - इमौ दमयन्तीनलौ इति उक्त्वा नवसानौ पर्वते नवा: सानवो यस्मिन् तत्र चेरतु:। इतीति किम्? नौ आवयो: वसा धातुविशेष: तापशतेन तापाधिक्येन द्रवेत् नश्येत्। कथं भूतौ इमौ? सुखादृते सुखं विना अनवसानौ। अनवसानम् एकत्र स्थितिर्ययोस्तौ। पुन: किंविधौ? एकेन चेलान्तेन वस्त्रेण वसानौ ॥११ ॥

**यमकबोधिनी**—तापेति-इमौ दमयन्तीनिषधराजौ इति हेतो: पर्वतशैले चेरतु: जग्मतु:। किंलक्षणे पर्वते? नगैर्वृते[२] नगै: वृक्षै: वृते। पुन: किं लक्षणे पर्वते? नवसानौ नवशिखरे। इतीति किम्? तापशतेन तापानां शतेन नौ आवयो: वसा शरीर-धातुविशेष: द्रवेत् शिथलीभवेत् इति घनच्छायायां वृक्षावृते हि पर्वते तापनाश: स्यादिति। किंलक्षणौ इमौ? एकेन दमयन्त्या: चेलान्तेन वस्त्रान्तेन वसानौ आच्छादयन्तौ। आत्मानाविति शेष:। वस आच्छादने इति धातो: शाने रूपम्। पुन: किंलक्षणौ? अनवसानौ अवसानरहितौ। दु:खेन अनन्तावित्यर्थ: ॥११ ॥

**दीपिका**—तापशतेनेति — इमौ दमयन्तीनलौ इति पर्वते गिरौ चेरतु: जग्मतु:। इतीति किम्? तापशतेन तापसमूहेन नौ आवयो: वसा मदहेतुर्धातुविशेष: द्रवेत् नश्येत्। किम्भूतौ तौ? सुखादृते सुखं विना अनवसानौ अनवस्थितौ। पुन: किम्भूतौ इमौ? एकेन

---

१. क. नगावृते इति 'च' पुस्तके पाठ:। ख. नगैर्वृते इति 'घ''ञ' पुस्तकयो: पाठ:

२. 'ग' पुस्तके मूले 'सुखादृते' इत्येव पाठ:किन्तु व्याख्यायां यमकबोधिन्यां तत्रापि नगैर्वृते इत्येव पाठ: इति 'ग''घ' पुस्तकयो: पाठसाम्यम्।

चेलान्तेन वसानौ वस्त्रस्वरूपेण वसानौ आच्छादितौ । किम्भूते पर्वते ? नवसानौ नवशिखरे ॥११ ॥

**सुबोधिनी**—तापेति-इमौ दमयन्तीनलौ तापशतेन तापाधिक्येन नौ आवयोर्वसा मेदो द्रवेत् शोष्यतीति हेतोरेकेन चेलान्तेन वसनखण्डेन वसानौ छादयन्तौ अनवसानौ न अवसानं मृत्युर्ययोस्तादृशौ । नवसानौ नवं नूतनं सानु शृङ्गं यस्य तादृशे पर्वते नगैर्वृक्षैरावृते युते चेरतुश्चलितवन्तौ । अतिघर्मे एकेन पटान्तेनाच्छादयन्तौ इमौ मरणरहितौ पर्वते चलिताविति भावः । नगावृते इत्यत्र सुखादृते इति पाठे सुखं विनापि अविनाशिनौ इत्यर्थः । मेदस्तु वपा वसा । युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ इति नौ । द्रवेदिति द्रु गतावित्यस्य लिङि । शैल-वृक्षौ नगावगौ । स्नुः प्रस्थः सानुरस्त्रियामिति अमरः । चेरतुरिति चरतेर्लिटि ॥११ ॥

**अनुवाद**—अत्यधिक ताप से हमारी मेदा सूख जाय (ऐसा सोचकर नल और दमयंती) दोनों ने दुःख से एक ही वस्त्र के छोर से अधखुले ढके हुए नई चोटी वाले पर्वत पर भ्रमण किया ॥११ ॥

**तद्वासस्वापायान्नीतिरियं[1] चेति विपदि स स्वापायाम् ।**

**निजवासस्स्वापायान्निकृत्यताममुचिदिह च सस्वापायाम् ॥१२ ॥**

**अन्वयः**—सः इह स्वापायां निजवासस्स्वापायात् विपदि स्वापायाम् इयं नीतिः इति तद्वासः निकृत्य सस्वापायां ताम् अमुचत् ॥१२ ॥

**अन्वयदीपिका**—तदिति-च अपरं सः नलःइह अस्यां च दमयन्त्यां सस्वापायां स्वापेन निद्रया सह वर्तमानायां सत्यां निजवासस्स्वापायात् निजवासश्च स्वं वित्तं च तयोः अपायो नाशः तस्माद् हेतोः विपदि सुखेन आप्यते स्वापा तस्यां सुलभायां सत्यामियं नीतिः इति विचार्य तत्[2] प्रसिद्धं वासः निकृत्य छित्वा तां दमयन्तीम् अमुचत् । कीदृशीं ताम् ? स्वापायां स्वस्य अपगतः अयो भाग्यं यस्याः ताम् ॥१२ ॥

**यमकबोधिनी**—तद्वास इति-स नलः इह वनान्ते तां दमयन्तीम् इति हेतोः अमुचत् मुमोच । इतीति किम् ? स्वात्मीया इयं नीतिः विपदि व्यसनेऽमुं दमयन्तीं पायात् रक्षतु इति । इयं तु पितृग्रहगमनव्यपनीतदुःखा भवतु इत्यर्थः । किं कृत्वा ? तद्वासः तस्याः दमयन्त्याः वासः वस्त्रं निकृत्य छित्वा अर्द्धं गृहीत्वा इत्यर्थः । कस्मात् ? निजवासस्वापायात् वासश्च स्वं च वासस्वे । निजे च ते वासस्वे च । तयोरपायः अभावः तस्मात् स्वकीयस्थानद्रव्यनाशात् । किंलक्षणाममुम् ? सस्वापायां स्वापायाः निद्रायाः आयो लाभस्तेन सह वर्तमानां तां सुप्तामित्यर्थः । विपदि विशेषणं वा । सस्वापायां सुलभायां सत्याम् । पुनः किं लक्षणाम् ? स्वापायां

१. नीतिरमूमिति 'ञ' पुस्तके पाठः ।

२. विद्यावती- अत्र तस्याः वासः तद्वासः इत्येव समीचीनम् ।

स्वस्याःअपगतः अयो भाग्यं यस्याः सा । तां दमयन्तीं पायादिति अशिषि लिङ् । अमुचदिति मुचेर्लुङि । स्वो ज्ञातावात्मनि स्वः त्रिष्वात्मीये स्वः स्त्रियां धने इत्यमरः ॥१२ ॥

**दीपिका**—तद्वास इति — स नलः विपदि विपद्दशायामियं नीतिः इति तद्वासः निकृत्य तस्याः दमयन्त्याः वासः छित्वा च पुनः ताम् अमुचत् अत्यजत् । किम्भूतायां विपदि ? स्वापायां सुखेन आप्यते सा स्वापा तस्याम् । किम्भूतां ताम् ? स्वापायां स्वतः आत्मतः अपगतः अयो दैवं यस्यास्ताम् । कस्मात् ? निजवासस्वापायात् निजम् आत्मनः वासः वस्त्रं स्वचेतः एतेषाम् अपायो नाशः तस्मात् । कस्यां सत्याम् ? इह अस्यां दमयन्त्यां सस्वापायां सनिद्रायां सत्याम् ॥१२ ॥

**सुबोधिनी**—तद्वास इति -स नलः कलिच्छन्नबुद्धित्वात् विपदि विपत्तौ इयमेव नीतिः इति मत्वा तां दमयन्तीं स्वापायां स्वापम् आयातीति स्वापायां तादृशीं सुप्ताम् । सस्वापायां स्वस्यापायो विश्लेषः तत्सहिताम् । पुनः स्वापायां स्वस्मात् अपगतः शुभावहविधिर्यस्याः तां दुरदृष्टामित्यर्थः । तां दमयन्तीमिह वने निजवासस्वपायात् निजं स्वकीयं यद्वासः स्वं च धनं तदपायात् तदपगमात् तद्वासः तस्याः दमयन्त्या वासो वसनं निकृत्य आच्छिद्य अमुचत् अत्याक्षीत् । यद्वा विपदि किम्भूतायाम् ? स्वापायाम् स्वेन आत्मना च आप्यते प्राप्यते स्वापा तस्यां सत्यां सस्वापायां स्वापयुक्तायां दमयन्त्यां सत्यामित्यर्थः । नलो वने प्रसुप्तां दमयन्तीं वसनार्द्धैः छित्वा अमुचदिति भावः । अमुञ्चदिति पाठे लुङि लृदित्वादङ् ॥१२ ॥

**अनुवाद**—उस ने दमयंती के सो जाने पर, अपने वस्त्र तथा वित्त के विनष्ट होने से (उत्पन्न) सुलभ विपत्ति में यह नीति है, ऐसा सोच कर उसके वस्त्र को फाड़कर उस दुर्भाग्य शालिनी को वहीं छोड़ दिया ॥१२ ॥

**बभ्रामाऽनस्तेन श्रमेण कलिनाऽवधूयमानस्तेन[१] ।**

**स हि[२] रिपुमानस्तेनः स्वभाग्यदोषाः क्व समहिमानस्ते न ॥१३ ॥**

**अन्वयः**— तेन अनस्तेन कलिना अवधूयमानः रिपुमानस्तेनः सः श्रमेण बभ्राम । ते हि स्वभाग्यदोषाः क्व समहिमानः न (भवन्ति) ? ॥१३ ॥

**अन्वयदीपिका**—बभ्रामेति-तेन कलिना अवधूयमानः स नलः अनस्तेन अस्तो न भवतीति अनस्तः तेन आक्षिप्तेन अनेन उपलक्षितो बभ्राम । कथं भूतो नलः ? रिपुमानस्तेनः रिपूणां शत्रूणां मानोऽभिमानः तस्य स्तेनः चौरः । तथा हि — ते स्वभाग्यदोषाः क्व कुत्र समहिमानः महिम्ना सह वर्तन्त इति समहिमानः न भवन्ति । अपि तु सर्वत्र भवन्ति ।१३ ॥

१. विधूयमानः इति 'ञ' पुस्तके पाठः ।

२. अपि रिपुमानस्तेन इति 'ञ' पुस्तके पाठः ।

**यमकबोधिनी**—बभ्रामेति — स नलः अनस्तेन बहुलेन श्रमेण खेदेन कृत्वा बभ्राम भ्रमति स्म। न अस्तः अनस्तः तेन। किं लक्षणः सः? तेन कलिना अवधूयमानः आकम्प्यमानः। पुनः किं लक्षणः सः? रिपुमानस्तेनः शत्रुगर्वचौरः। भ्रमणे हेतुः हि यतः ते प्रसिद्धाः समहिमानः समहात्म्याः स्वभाग्यदोषाः आत्मवैदोषाः क्व न? अपितु सर्वत्र भवन्तीत्यर्थः ॥१३॥

**दीपिका**—बभ्रामेति — स नलः अनस्तेन अप्राप्तेन श्रमेण उपलक्षितः सन् बभ्राम भ्रमति स्म। किम्भूतः सः? तेन कलिना अवधूयमानः निगृह्यमाणः। पुनः किम्भूतः? रिपुमानस्तेनः अमित्राभिमानचौरः। हि निश्चितं ते प्रसिद्धाः स्वभाग्यदोषाः आत्मनि सन्ति दोषाः समहिमानः माहात्म्ययुक्ताः क्व न सन्ति किन्तु सर्वत्रैव भवन्ति। स्वपराक्रमं ज्ञापयन्तीत्यर्थः ॥१३॥

**सुबोधिनी**—बभ्रामेति - रिपुमानस्तेनः शत्रुगर्वापहारी स नलः श्रमेण प्रयासेन अनस्तेन नास्तङ्गतेन सता अत्यन्तपरिदुःखान्तेन कलिनाऽवधूयमानः कम्पितः सन्। अथवा कलिना अनस्तेनामुक्तेन श्रमेण यस्य श्रमस्य दुःखस्य कलिः प्रयोक्ता तेन परिश्रमेण दह्यमानः सन् बभ्राम पर्यटितवान्। हि यस्मात् कारणात् स्वभाग्यदोषाः स्वपूर्वार्जितदुष्कृतादिकर्मदोषाः क्व कस्मिन् समहिमानः समहत्वाः न? अपि तु सर्वत्रैव। पूर्वकर्मप्राधान्यम्। यतो हीदृगवनीशोऽप्येकाकी गतराज्यभारो वने पर्यभ्रमीत् ॥१३॥

**अनुवाद**—उस प्रभावशाली कलि के कारण विकम्पित, शत्रुओं के मान को चुराने वाला वह (नल) दुःखी होकर (वनों में) भटका। वे स्वभाग्यदोष कहां प्रबल नहीं होते? ॥१३॥

**मृगकुलमाऽऽरसदाऽऽविश्रममभितापा[1]ऽऽतुरो ममार सदाऽवि।[2]**

**स्फुरिततमा[3] रसदा विस्तृता नगाः यत्र विपिनमाऽऽर स दावि ॥१४॥**

**अन्वयः**—आविश्रममभितापाआतुरः सः यत्र सदा आरसत् मृगकुलं ममार, स्फुरिततमाः रसदाः विस्तृताः नगाः च आसन् (तादृशं) दावि अवि विपिनम् आर ॥१४॥

**अन्वयदीपिका**—मृगेति -स नलः विपिनम् आर प्राप। तत् कतरत्? यत्र विपिने आ समन्तात् रसतीति आरसत् शब्दं कुर्वत् मृगकुलं हरिणयूथं सदा ममार मारयति स्म। यत्र विपिने रसदा जलदा मेघाः स्फुरिततमा अतिशयेन स्फुरिताः। यत्र नगाः वृक्षाः विस्तृताः। कीदृशः सः? अविर्भूतश्चासौ भ्रमतापश्चेति तस्मात् आतुरः। कीदृशं वनम्? दावि दावयुक्तम्। पुनः किं विधं वनम्? अवि पक्षिरहितम् ॥१४॥

---

१. आविर्भ्रमतापादातुर इति 'क' पुस्तके पाठः।

२. विः इति 'ञ' पुस्तके।

३. स्फुटित इति 'ङ' 'ज' 'ञ' पुस्तकेषु।पाठः।

**यमकबोधिनी**—मृगकुलमिति-स नलः दावि वनवह्नियुक्तं विपिनं वनम् आर प्राप । यत्र विपने मृगकुलं ममार म्रियते स्म । किं कुर्वत् मृगकुलम् ? आरसत् शब्दं कुर्वत् । किं लक्षणं मृगकुलम् ? आविश्रमं प्रकटश्रमम् । किं लक्षणः सः ? अभितापातुरः अभितापेन अभि सर्वतस्तापेन आतुर; सदा सर्वदा । किं लक्षणं विपिनम् ? अवि न वयः पक्षिणो यस्मिन् तत् पक्षिरहितम् । पुनः यत्र वने स्फुरिततमा; नगाः वृक्षाः । क्वचित् स्फुटिततमाः इति पाठः । अतिशयेन विकशिता इत्यर्थः । किं लक्षणाः नगाः ? रसदा रागदा हर्षदा वा । पुनः किं लक्षणाः ? विस्तृता विस्तारवन्तः ॥१४ ॥

**दीपिका**—मृगकुलमिति-स नलः दावि दवाग्नियुक्तं विपिनम् आर प्राप । तत्किम् ? यत्र सदा अनवरतं मृगकुलं कुरङ्गयूथं ममार मारयति स्म । किम्भूतं मृगकुलम् ? आरसत् सशब्दम् । पुनः किम्भूतं मृगकुलम् ? आविश्रमम् आविर्भूतपरिश्रमम् । किम्भूतं विपिनम् ? अवि पक्षिरहितम् । किम्भूतः सः ? अभितापातुरः अभितः तापैः सन्तापैः आतुरः शीर्णः । पुनः तत्किम् ? विपिनम् । यत्र स्फुटिततमाः विकसिततमाःरसदाः दाहेन स्वेदकणमुचः नगा वृक्षो विस्तृताः व्याप्ताः ॥१४ ॥

**सुबोधिनी**—मृगेति-स नलो दावि दावो वनवह्निस्तत्संयुक्तं प्रज्वलद्दावं विपिनम् आर जगाम । यत्र यस्मिन् विपिने मृगकुलं मृगगणम् अविश्रमम् शान्तिरहितम् आविर्भूतश्रमं यथा स्यादेवम् आरसत् अतिशब्दं कुर्वत् जलाभावात् तृषाकुलं ममार । विः पक्षी अभितापातुरोऽभिसमन्ततः यस्तापः सन्तापः तेन आतुरः क्लान्तः सदा सर्वदा ममार मृतवान् । सदावीति निर्विसर्गपाठे विपिनम् । किम्भूतम् ? अवि न विद्यन्ते वयः पक्षिणो यत्र तादृशम् । अभितापातुर इति नलविशेषणम् । विस्तृता विस्तीर्णशाखाः रसदाः रसो भयानकरसस्तं ददातीति तादृशाः । स्फुरिततमाः प्रकाशिततमाः नगा वृक्षाः । सफुटिततमा इति पाठे विदीर्णाः विस्तृताः भूमौ आस्तीर्णाः । रसदाः दवाग्निदह्यमानत्वात् सशब्दाः । नलो तदाकुलं वनं गतवान् यत्र भयप्रदविस्तीर्णशाखाः वृक्षाः यस्मिन्नतिगहनतरुदर्शनेन भयं भवतीति यावत् । यत्र चला अलसा मृगा इतस्ततो धावन्तः कृताक्रन्दाः सन्तो मृताः । पक्षिणश्च मृताः । तादृशं देशं मरुदेशं गतवानिति भावः ॥१४ ॥

**अनुवाद**—उत्पन्न हुए श्रमताप के कारण व्याकुल वह (नल) जहां अविरत गति से शब्द करता हुआ मृगसमूह मारा जा रहा था । दावाग्नि के कारण बड़े बड़े और भूमि पर गिरे हुए भयावनें वृक्ष थे । ऐसे दावाग्नि से युक्त और पक्षियों से रहित वन में पहुंचा ॥१४ ॥

**शोकभरोदस्तेन श्रुतो[१]ऽत्र नलाऽऽद्रवेति रोदस्तेन ।**

**द्रुतिम[२]करोदस्तेनः स्वयमित्यूचे[३] भयं पुरोऽदस्ते न ॥१५ ॥**

---

१. श्रुतः स च इति 'छ' पुस्तके पाठः ।

२. द्रतमिति च पुस्तके पाठः ।

३. स्वयमत्रोचे इति 'ञ' पुस्तके

**अन्वयः**—शोकभरोदस्तेन तेन नल !अत्र आद्रव इति रोदः श्रुतः । (ततः सः) द्रुतिम् अकरोत् । अस्तेनः ते च पुरः अदः भयं न इति (च) स्वयम् ऊचे ॥१५ ॥

**अन्वयदीपिका**—शोकेति-शोकभरोदस्तेन शोकस्य भरम् आधि तेनोदस्तः आकुलः तेन नलेन हे नल ! रक्ष इति रोदः अबलतः रोदनम् आकर्णितम् । ततोऽनन्तरं सः नलः द्रुतगतिम् अकरोत् । अस्तेनः अस्तः तिरस्कृतः कान्त्या इनः सूर्यो येन स नलः हे प्राणिन् पुरोऽग्रे ते तव अदः भयं न भविष्यतीति स्वयमूचे ॥१५ ॥

**यमकबोधिनी**—शोकेति — तेन नलेन इति रोदः श्रुतः । रोदनम् अश्रावि । इतीति किम् ? हे नल ! त्वम् आद्रव आगच्छ । अत्रेति पदस्य आगमने सम्बोधो वा । किं लक्षणेन नलेन ? शोकभरोदस्तेन शोकभरेण उदस्तः उत्क्षिप्तस्तेन स्वयं नलः द्रुतिगमनम् अकरोत् । इति ऊचे । चकारस्याध्याहारः । हे अनस्तेन ! हे अचौर । हे साधो ! इत्यर्थः । अदः परोऽग्रे भयं दवाग्निजं न ते तव मम शरणागतपालकत्वादिति भावः ॥१५ ॥

**दीपिका**—शोकभर इति-तेन नलेन अत्र वने हे नल ! आद्रव आगच्छेति रोदः विलापः श्रुतः आकर्णितः । किम्भूतेन तेन ? शोकभरोदस्तेन शोकाधिव्याकुलेन । अथ स नलः द्रुतं शीघ्रं गतिम् अकरोत् । मे पुरः ते तव अदः भयं साध्वसं नेत्यूचे च । किम्भूतः सः ? अस्तेनः अस्तः निरस्तः सूर्यो येन सः ॥१५ ॥

**सुबोधिनी**—शोकेति-तेन नलेन शोकभरोदस्तेन शोकातिशये उदस्तेन व्याकुलेन ऊर्ध्वम् अस्तेन क्षिप्तेन शरीरादुद्भ्रान्तजीवेन हे नल ! आद्रव आगच्छेति रोदः रोदनं श्रुतःआकर्णितः । तेन करणेन स च नलः द्रुतं वेगम् अकरोत् । च पुनः हे अस्तेन अस्तः इनः प्रभुर्यस्य अनाथः । हे अदः इदं ते तव भयं न इति पुरोऽग्रे स्वयम् ऊचे उक्तवान् । स्वकमिति पाठे स्वकीयम् आत्मसम्बन्धि भयं नास्ति इत्यर्थः । शोकभारविक्षिप्तचेतसा नलेन 'नलागच्छेति' कर्कोटकनागरोदनं श्रुतम् । स तत्र गत्वा ते इदं भयं न भविष्यतीत्यवोचिदिति भावः । अस्तेनः इति सविसर्गपाठे अस्तेनः अस्तः कान्त्या तिरस्कृतः इनः सूर्यो येनेति नलविशेषणम् । द्रुतगतावित्यस्य लोटि मध्यमे । ऊचे ब्रुवो लिटि । स्यात् पुरः पुरतोऽग्रतः भीतिर्भीसाध्वसं भयमित्यमरः ॥१५ ॥

**अनुवाद**—शोक की अधिकता से व्याकुल उस नल ने "हे नल ! दौड़ो (बचाओ) ऐसा रोना सुना । जिससे अपनी कान्ति से सूर्य को भी तिरस्कृत करने वाले (नल) ने गति को तेज कर दिया और इससे आगे तुम्हें भय नहीं होगा ऐसा वह स्वयं बोला ॥१५ ॥

**क्व भवान् शंसत्वस्यत्वापदमित्याश्रयोऽनृशंसत्वस्य ।**
**तं देशं सत्वस्य प्राप नलः सत्वरो भृशं स त्वस्य ॥१६ ॥**

**अन्वयः**—भवान् क्व (इति) शंसतु । आपदम् च अस्यतु । इति अनृशंसत्वस्य आश्रयः सः नलः तु अस्य सत्वस्य तं देशं प्राप ॥१६ ॥

**अन्वयदीपिका**—क्वेति-भवान् कुत्र तिष्ठति इति शंसतु। अनृशंसत्वस्य न नृशंसत्वम् अनृशंसत्वं तस्य आश्रय: भवान्[१] आपदं दवाग्निजनितां विपदम् अस्यतु दूरीकरोतु इति उक्त्वा तु पुन: स नल: अस्य सत्वस्य प्राणिन: संस्थानं प्राप । कथं भूतो नल: ? भृशम् अत्यर्थं सत्वर: ॥१६ ॥

**यमकबोधिनी**—क्वेति— तु इत्यव्ययम् अवधारणे भेदे वा । स नल: अस्य सत्वय जीवस्य तं देशं दावाग्निसङ्कुलं-स्थानं भृशम् अत्यर्थमिति प्राप प्राप्नोति स्म । किं लक्षणो नल: ? सत्वर: त्वरया सम्भ्रमेण सह वर्तमान: सत्वर: । इति कथम् ? हे जीव ! भवान् क्व शंसतु कथयतु। त्वं कुत्रासि इति कथयत्वित्यर्थ:। भवान् आपदम् अस्यतु क्षिपतु त्यजत्वित्यर्थ:। मय्यागते आपदोऽभावात्। किं लक्षणो नल:? अनृशंसत्वस्य आश्रय: अक्रूरत्वस्य आश्रय: स्थानम्। नृशंसस्य अदयाया: भावो नृशंसत्वं न नृशंसत्वम् अनृशंसत्वं स तथा तस्य ॥१६ ॥

**दीपिका**—क्व भवानिति-स नल: तु पुन: इति वक्ष्यमाणमुक्त्वा अस्य सत्वस्य तं देशं तत् स्थानं प्राप जगाम । इतीति किम् ? भवान् क्व तिष्ठतीति शंसतु कथयतु । आपदं विपदम् अस्यतु क्षिपतु । कम्भूतो नल: ? अनृशंसत्वस्य अक्रूरताया: आश्रय: स्थानम् । पुन: किम्भूतो नल: ? भृशम् अत्यर्थं सत्वर: सवेग: ॥१६ ॥

**सुबोधिनी**—क्वेति — स तु नलो भृशम् अत्यर्थं सत्वर: त्वरायुक्त: सन् अस्य सत्वस्य प्राणिनस्तं देशं प्राप गतवान् । भवान् क्वासीति शंसतु । आपदम् अस्यतु त्यज इति निगद्येति यावत्। कीदृशो नल:? अनृशंसत्वस्य अक्रौर्यस्य कारुणिकत्वस्य आश्रयो निवास:। रोदनश्रवणानन्तरं नलो गत्वा भवान् क्वास्ति इति कथयतु। आपदं जहातु इति निगद्य दवाग्निमविशदिति भाव:। शंसतु शंसु स्तुतावित्यस्यानेकार्थत्वाद् वदनमात्रार्थ: । अस्यत्विति असु क्षेपणे इत्यस्य लोटि । विपत्यां विपदापदौ । नृशंसो घातुक: क्रूर: । प्रापेत्यपेर्लिटि । सत्वमस्त्री तु जन्तुषु इत्यमर: ॥१६ ॥

**अनुवाद**—आप कहां हैं, यह कहें और भय से रहित हो जायें । अक्रूरता के आश्रयभूत उस नल ने अत्यधिक शीघ्रता से उस प्राणी के स्थान को पा लिया ॥१६ ॥

**अथ पवनाशमयन्तं क्वापि दवाग्नौ ददर्श नाशमयन्तम् ।**

**स्वबलेनाऽशमयन्तं रुजमजिघृक्षच्च पुनरनाशमयन्तम् ॥१७ ॥**

**अन्वय:**—अथ अयं क्वापि दवाग्नौ नाशम् अयन्तं स्वबलेन रुजम् अशमयन्तम् अनाशम् अयन्तं च पवनाशं ददर्श । पुन: तम् अजिघृक्षत् ।१७ ॥

---

१. विद्यावती अत्र अनृशंसत्वस्य आश्रय इति कर्कोटकविशेषणत्वेन प्रयुक्त: । नलविशेषणत्वेनैव तस्य सार्थकतेति ।

**अन्वयदीपिका**—अथेतिं अथानन्तरम् अयं नलः क्वापि दवाग्नौ नाशमयन्तं गच्छन्तं तं प्रसिद्धं कर्कोटकनामानं सर्पं ददर्श ।[१] च पुनः अजिघृक्षत् जग्राह इत्यर्थः । कीदृशं तम् ? स्वबलेन रुजं दवाग्निपीडाम् अशमयन्तम् अशितुम् अशक्नुवन्तम् । पुनः कीदृशम् ? अनाशं न नाशो यस्य स अनाशः तम् । पुनः कीदृशम् ? अयन्तम् एतीति यन् न यन् अयन् तम् अयन्तं तं स्थानान्तरे अगच्छन्तम् ॥१७ ॥

**यमकबोधिनी**—अथेति-अथानन्तरम् अयं नलः क्वापि दवाग्नौ दावानले नाशम् अयन्तं गच्छन्तं तं प्रसिद्धं कर्कोटकनामानं पवनाशं सर्पं ददर्श अपश्यत् । अयन्तमिति इण् गतावित्यस्य रूपम् । पुनः अजिघृक्षच्च गृहीतुम् ऐक्षच्च । ग्रह उपादाने इति धातोः सप्रत्यतान्तं रूपम् । किं कुर्वन्तम् ? स्वबलेन आत्मबलेन आत्मपौरुषेण वा रूजं दवजनितां पीडाम् अशमयन्तम् अनुपशमयन्तम् । किं लक्षणं पवनाशम् ? अनाशम् आशारहितम् । पुनः किं कुर्वन्तम् अयन्तम् अगच्छन्तम्[२] दवरूद्धत्वात् । इण् गतावित्यस्य शत्रन्तं रूपम् ॥१७ ॥

**दीपिका**—अथ पवनाशमिति-अथानन्तरमयं नलः तं पवनाशं कर्कोटकाभिधं सर्पं ददर्श पश्यति स्म । पुनः अजिघृक्षच्च जग्राह । (कीदृशं पवनाशिमिति वर्णयति)[३] रुजं दुःखम् (वनोद्भूतदवाग्निपीडां) अशमयन्तम् अदूरीकुर्वन्तम् । पुनः किम्भूतं तम् ? अनाशं न विद्यते प्राणानाम् आशा यस्य । पुनः किम्भूतं तम् ? अयन्तम् एतीति यन् (न यन् इत्ययन् तम् । स्थानान्तरे गन्तुमशक्तम्) ॥१७ ॥

**सुबोधिनी**—अथेति— अथ समीपगमनानन्तरमयं नलः तं पवनाशं पवनं वातमश्नातीति पवनाशस्तादृशं तं सर्पं कर्कोटकाख्यं क्वापि दवाग्नौ कस्मिन्नपि दवदहने अयन्तं गच्छन्तम् इतस्ततः विनाशमयन्तं विनश्यन्तं ददर्श अद्राक्षीत् । कीदृशम् ? स्वबलेन स्वप्रभावेन रूजं पीडाम् अशमयन्तम् अपरिहरन्तम् । पुनः अनाशम् आशा जीविताशा तद्रहितम् । अनाशं मृतं मुमूर्षुं वा । अजिघृक्षच्च । पुनः गृहीतुमैच्छत् नलो दवदहनदह्यमानं कर्कोटकमपश्यत् । गृहीतुं चैषीत् । जिह्मगः पवनाशनः । ग्रह उपादानेऽस्य सनि ग्रहगुहोश्चेतीट् निषेधाद् द्वित्वे कृते लङि रूपम् ॥१७ ॥

**अनुवाद**—वहां पहुंच कर इस नल ने कहीं दावानल मे नष्ट हो रहे, अपनी शक्ति से दवाग्नि की पीडा को शमित करने में असमर्थ, निराश और दूसरे स्थान को जा सकने में असमर्थ (कर्कोटक नामक) सांप को देखा और उसे उठा लिया ॥१७ ॥

---

१. विद्यावती-कर्कोटककथेयं भारते विस्तरेण वर्णिता। नलपर्वणि नलकर्कोटकसंवादस्तयो-मैत्रीकथाऽनुसन्धेया ।

२. विद्यावती-अयन्तमित्यस्य स्थानान्तरे गन्तुमशक्तस्य इत्येवार्थः॥ भारतेऽपि नारदशापात् कर्कोटकस्य गमनराहित्यं वर्णितम् । तदेव 'अयन्तमिति पदेऽन्तर्भावितं कविना ।'

३. कोष्ठकेषु सम्पादकस्य । तत्र तत्राक्षरलोपः ।

**स च[१] धृतनागस्तेन स्वविषेण विरूपितो मनागस्तेन।**

**[२]सहितानागस्तेन प्रोक्तश्चात्मास्तु वेदनागस्ते न ॥१८॥**

**अन्वयः**—स धृतनागः तेन अस्तेन स्वविषेण मनाक् विरुपितः इति प्रोक्तश्च-हे सहितानागस्त इन ! ते आत्मा वेदनागः न अस्तु ॥ १८ ॥

**अन्वयदीपिका—** स इति-च अपरं धृतनागः सः नलः अस्तेन क्षिप्तेन कर्कोटकेन कर्त्रा मनाक् ईषत् स्वविषेण साधनेन विरूपितो विवर्णभावं प्रापितः इति प्रोक्तश्च आभाषितः। इति किम् ? हे सहितानागस्त न आगोऽपराधो यस्य सः अनागाः। अनागसो भावः अनागस्ता।अनागस्तया सहितः सहितानागस्तः तस्य सम्बोधनम्। हे इन ! स्वामिन् ते तव आत्मवेदनागः आत्मनि वेदनां गच्छतीति[३] एतादृशस्तम्। अहमिति शेषः ॥१८॥

**यमकबोधिनी—**सेति-तेन सर्पेण स च नलः स्वविषेण विपूरितः प्रोक्तश्च। विषपूरणेन कुब्जीकृत इत्यर्थः। किं लक्षणः सः ? भृतनागः भृतो दावाद्रक्षणेन पुष्टो धृतो वा नागः सर्पो येन स तथा। नलशरीरस्थितकलिनाशाय दशनच्छलेन विषपूरणम्। क्वचित् संविषेण विरूपित इति पाठः। किं लक्षणेन विषेण ? मनाक् ईषत् अस्तेन क्षिप्तेन। पुनः किं लक्षणः सः ? सहिताः हितेन सह वर्तमानः। सहितसर्पयुक्तः इत्यर्थः। किं प्रोक्तस्तदाह हे इन स्वामिन् न आगस्ता अपराधता यस्य स अनागस्तः तस्य सम्बोधनम्। ते तव आत्मा देहः वेदनागः वेदनां प्राप्तुं गच्छतीति ईदृशो मास्तु। मद्विषं तव वेदनां मा करोतु। क्वचित् सहितानागस्तेन इति पाठः। तत्र अनागस्तया सहितः सहितानागस्तः तत्सम्बोधनम्। हे अनपराधयुक्तेत्यर्थः। हे इनेति अन्यत्तथैव ॥१८॥

**दीपिका—**सचेति-तेन सर्पेण स नलः स्वविषेण विरूपितः विवर्णतां प्रापितः। इत्युक्तप्रकारेण प्रोक्तश्च कथितोऽपि। इतीति किम् ? हे सहितानागस्तेन न आगः अनागः अनागसो भावः अनागस्ता तया अनागस्तया अनपराधतया सहित हे इन ! स्वामिन्। ते आत्मा वेदनागः पीडया सह मास्तु मा भवतु। किम्भूतः सः ? धृतनागः करगृहीतसर्पः। किम्भूतेन विषेण ? मनाग् ईषत् अस्तेन क्षिप्तेन ॥१८॥

**सुबोधिनी—**स चेति-स च नलः धृतनागः धृतसर्पः मनागस्तेन मनाक् ईषत् अस्तेन क्षिप्तेन कर्कोटकेन स्वविषेण विरुपितः विरूपोऽसुन्दरः कुब्जः कृतःअनागस्तेन आगस्तनोतीत्यागस्तो न आगस्तोऽनागस्तः तादृशेन निरपराधिना नलः। किम्भूतः ? सहितः हितं प्राणरक्षणलक्षणं तेन सहितः कृतात्मरक्ष उक्तश्च। किमित्याह हे नल ! ते आत्मा वेदनागः पीडाभाक् न अस्तु न भवतु। तव प्रसादाद

---

१. भृतनाग इति ग घ पुस्तकयोः पाठः। ङ 'ञ' पुस्तकयोरपि।

२. सहितो नागस्तेनेति ग घ पुस्तकयोः पाठः।

३. विद्यावती— गच्छतीत्यत्र अन्तर्भावितणिच्। गमयतीत्यर्थो बोध्यः।

विषवेदना मा भूत्। यद्वा यतः स नागः हितस्तेन हेतुना उक्त इत्यर्थः। नलः सर्पमुत्क्षिपंस्तेन दष्टो विरूपितोऽभवत्। तेनैव च तव पीडा न भविष्यतीत्यभिहितश्चेति भावः। अत्र कथोपकथनं भारतेऽनुसन्धेयम्। यथा कर्कोटकनामा नागोऽहं नारदशापाच्चलितुमशक्तः। पश्चात् स मुनिरेवमाह यदा नलो राजा त्वामितो नेष्यति तावत् त्वमचलो भूत्वाऽत्र तिष्ठ। अतस्त्वं मामितो नय। श्वोऽहं तवोपकारोपायमपि उपदेक्ष्यामि। इत्युक्त्वा सा मुष्टिप्रमाणोऽभूत्। नलस्तं वनावनेरन्यत्र निनाय। ततस्त्यक्तुकामं नलं पुनरुवाच। पदानि गणयन् गच्छ। ततः श्रेयः करिष्यामि। ततो नलेन एकादिक्रमेण गणयित्वा दशेत्युक्ते आज्ञाच्छलेन नागस्तमदंशयत्। ततो नलो विरूपोऽभवत्। नागस्त्वाह जनास्त्वां न जानन्त्विति रूपमन्तर्द्धापितम्। यत्कृते त्वं दुःखी जातः। स कलिर्मम विषेण दग्धस्त्वां त्यक्षति। अयोध्यां गच्छ। बाहुकनामा सारथिरहमिति ब्रुवन् ऋतुपर्णनृपसमीपे स्थीयताम्। स तेऽक्षविजयविद्यां दत्वा अश्वविद्यां नेष्यति। ततस्ते कल्याणं भविष्यति। मत्स्मरणार्थं वासोयुगं ग्रहाण। यदा इदं वासः परिधास्यति तदा निजरूपं प्राप्स्यसि। इत्युक्त्वा नागो गत इति महाभारतवार्ता। नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः। किञ्चिदीषन्मनागल्पे। यातना तीव्रवेदना। पीडा बाधा व्यथा दुःखम्।[१] "अनागस्तेनेति तनोतेरन्येभ्योऽपि दृश्यते इति ड प्रत्यये रूपम्। अस्तु अस्तेर्लिटि ॥१८॥

**अनुवाद**—नाग को धारण करने वाला वह (नल) उस (कर्कोटक) के द्वारा विसर्जित विष से विरूप (कुबड़ा) हो गया। वह (कर्कोटक) सर्प नल से बोला-हे अनपराधी स्वामी ! इस विष से तुम्हारी आत्मा को पीड़ा नहीं पहुंचेगी। (अपितु इससे उत्पन्न कुब्जत्व तुम्हारे कल्याणार्थ है) ॥१८॥

**स्यात्[२] तरसा कल्यन्ते वपुरमुनाऽऽत्तेन[३] वाससा कल्यन्ते।**

**ये यशसा कल्यन्ते गुणोदयैर्दधति भूतिसाकल्यन्ते ॥१९॥**

**अन्वयः**—अमुना आत्तेन वाससा कल्यन्ते ते वपुः तरसा कल्यं स्यात्। ये यशसा गुणोदयैः कल्यन्ते ते भूतिसाकल्यं दधति ॥१९॥

**अन्वयदीपिका**—पुनः किं प्रोक्तः ? स्यादिति- हे राजन् ! कल्यन्ते कलेरन्तः कल्यन्तः तस्मिन् सति आत्तेन गृहीतेन अमुना वाससा ते तव वपुः तरसा शीघ्रं कल्यं निरुपप्लवं स्यात्। कलियुक्तं शरीरं नीरोगं कथं स्यादत आह। ये पुरुषाः यशसा कीर्त्या गुणोदयैः गुणसमृद्धिभिश्च कल्यन्ते प्रार्थ्यन्ते ते इत्यर्थः। ते पुरुषाः भूतिसाकल्यं श्रीसामग्र्यं दधति प्राप्नुवन्ति ॥१९॥

---

१. अमरादुद्धृतानि।

२. 'घ' पुस्तकेऽत्र क्रमभङ्गः श्लोकस्यास्य विंशतितमत्वेन पाठात्।

३. वपुर्ममानेनेति 'ञ' पुस्तके पाठः।

**यमकबोधिनी**—स्यादिति- हे नल ! अमुना मद्विषजेन तरसा बलेन कल्यन्ते कलिनाशे सति ते तव वपुस्तेन प्रसिद्धेन वाससा बहुमूल्येन वस्त्रेण आकल्यं स्यात् । आकलनीयं स्यात् । मद्विषेण कलियुगनाशे तव शरीरं वस्त्रादिसर्वशरीरयुक्तं भवतीत्यर्थः । ये पुरुषाः यशसा कीर्त्या कल्यन्ते युज्यन्ते ते गुणोदयैः कृत्वा भूतिसाकल्यं भूत्याः सकलस्य भावः साकल्यम् । ऐश्वर्यसकलतां दधति धारयन्ति । भवतोऽपि यशश्वितया सर्वैश्वर्यप्राप्तिर्भविष्यतीत्यर्थः । पूर्वार्द्धार्थान्तरम् । हे नल ! ते तव रिपुः तेन अमुना मद्दत्तेन वाससा हेतुना तरसा वेगेन कल्यन्ते कलिनाशे कल्यं सज्जं दक्षं वा स्यात् । कल्यं प्रज्ञातं सज्जं च । कल्यो नीरोगदक्षयोरिति शाश्वतः । कलासु साधु इति कल्यम् । कर्कोटकेन राज्ञे वस्त्रं दत्तमिति ज्ञातव्यम् ।१९ ॥

**दीपिका**—स्यात् तरसेति-हे नल ! अमुना आत्तेन प्राप्तेन वाससा वस्त्रेण तव वपुः शरीरं कल्यन्ते कलेः नाशे तरसा शीघ्रं कल्यं नीरोगं स्यात् भवेत् । विवर्णवपुषः कथं सुवर्णतेत्यत आह ये पुमांसः यशसा कीर्त्या गुणौदयैः गुणसम्पद्भिश्च कल्यन्तेऽङ्गीक्रियन्ते ते भतिसाकल्यम् ऐश्वर्यसामग्र्यं दधति विभ्रति । समृद्धिभङ्गेऽपि तेषां पुनरपि समृद्धिर्भवतीत्यर्थः ॥१९ ॥

**सुबोधिनी**—कर्कोटको नलमाह स्यादिति-हे नल ! अमुना आत्तेन गृहीतेन वाससा वस्त्रयुगलेन ते तव वपुः शरीरं कल्यन्ते कलिपीडापगमे तरसा वेगेन कल्यं निरामयं स्यात् भविष्यति ये जनाः यशसा कीर्त्या कल्यन्ते श्रीयन्ते गुणोदयैः गुणानामुदयैरधिगमैः भूतिः सम्पत्तिः तत्साकल्यं सम्पूर्णत्वं दधति धारयन्ति । ये यशस्विनस्ते गुणोदयवशाल्लक्ष्म्या श्रीयन्ते एवेति । अतः खेदं मा कुर्विति भावः । आत्तेनेत्यत्र अन्त्येनेति पाठे अध्यवसितेन ईप्सितेनेति यावत् यशसा इत्यस्य विशेषणम् । यद्वा निश्चयेन कल्यं स्यादित्यर्थः । यद्वा हे अन्तेन इति सम्बोधनम् । अन्ते अन्तकाले हे इन प्रभो इत्यर्थः । वार्तो निरामयः कल्यः । अन्तोऽध्वसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके । कल मदे इत्यस्यानेकार्थत्वात् श्रयणमित्यर्थः । तस्मात् कर्मणि लटि रूपम् । समग्रं सकलं पूर्णम् ॥१९ ॥

**अनुवाद**—इस प्राप्त वस्त्र से कलि (की पीड़ा) के अंत हो जाने पर तुम्हारा शरीर शीघ्र ही नीरोग (कुब्जत्वादि से रहित) हो जायेगा । जो लोग कीर्ति (और) गुणोदयों के द्वारा प्रार्थित होते हैं, वे समस्त समृद्धियों को धारण करते हैं ॥१९ ॥

**अपि च विना मानेन श्रयणीयः सर्तुपर्णनामा नेनः[१] ।**

**स्वाङ्गेनाऽमाऽनेनः स्युर्विपदो देहिनां क्व नामाऽनेन[२] ॥२० ॥**

१. 'ग' 'घ' पुस्तकयोः निर्विसर्गपाठोऽत्र । नतर्तुपर्णनामा नेन इति 'ञ' पुस्तके ।

२. न हि नृणां क्व नामानेनः इति 'ञ' पुस्तके ।

**अन्वयः**—अपि च मानेन विना स इनः ऋतुपर्णनामा अनेन स्वाङ्गेन अमा न श्रयणीयः ? अनेनः[१] ! देहिनां विपदः क्व न नाम ? ॥२० ॥

**अन्वयदीपिका**—अपीति-अपि चेत्युपदेशानन्तरं हे नल ! त्वया मानेन विना अभिमानम् अकृत्वा ऋतुपर्णनामा नृपः अनेन स्वाङ्गेन शरीरेण मया विरूपितेनेत्यर्थः अमा सह न श्रयणीयः इति न । किन्तु श्रयणीयः । कथं भूतः ऋतुपर्णः ? इनः समर्थः इष्टदः दमयन्तीप्राप्तिहेतुः । न विद्यते एनः पापं यस्य सः तस्य सम्बोधनम् । देहिनां विपदः दुःखानि क्व न भवन्ति । नाम निश्चितम् ॥२० ॥

**यमकबोधिनी**—अपि चेति-अपि च हे अनेनः । न एनो यस्य सः अनेनाः तत्सम्बुद्धौ । हे अनघ ! अनेन मद्विषपूरितेन कृतकुब्जेन स्वाङ्गेन निजशरीरेण करणेन ऋतुपर्णनामा इनः पुरुषः श्रयणीयः । त्वया इत्यर्थः । केन विना ? मानेन अहङ्कारेण विना । किं लक्षणेन स्वाङ्गेन ? अमानेन न मानः पूजा यस्य तत् तेन तथा । नलशरीरज्ञानाभावात् सत्काररहितेन । असत्कारहेतुमाह अर्थान्तरन्यासेन । नाम प्रसिद्धौ । देहिनां देह-धारिणां विपदः क्व न स्युः । अपि तु सर्वत्र भवेयुः । न ऋतुपर्णनामानेनः इति सविसर्गपाठे ऋतुपर्णनामा स्वाङ्गेन अमा सार्द्धम् इति योज्यम् । अन्यत्तथा । ऋतुपर्णो नाम अयोध्याधिपतिः ॥२० ॥

**दीपिका**—अपि चेति-अपि न अन्यच्च शृणु इति शेषः । त्वया मानेन अभिमानेन विना ऋतुपर्णनामा इनः प्रभुः अनेन स्वाङ्गेन अमा सार्द्धं न आश्रयणीयः इति न किन्तु श्रयणीय एव । नामेति सम्भावनायाम् । हि निश्चितम् नल ! नृणां विपदः क्व न स्युः । अपितु दैववशात् सर्वत्रैव स्युरित्यर्थः ॥२० ॥

**सुबोधिनी**—अपीति-स एवाह हे अनेन ! निष्पाप नल ! हे इन ! प्रभो ! मानेनाभिमानेन विनापि च ऋतुपर्णनामा ऋतुपर्णाख्योऽनेन स्वाङ्गेन शरीरेण अमा सह श्रयणीयो न अपितु श्रयणीय एव । तत्र मानं न कार्यमिति भावः । यद्वा ऋतुपर्णनामा इनः प्रभुः न श्रयणीय इति नेत्यर्थः । हि यतः देहिनां प्राणिनां क्व नाम कुत्र नाम विपदो न विपत्तयो न ? अपि तु प्राणिनो विपदा परिभूयन्ते एव । अनेनेति निर्विसर्गपाठे न विद्यते इनः यस्य यस्माद्वा स अनेनः चक्रवर्तित्वात् तस्य सम्बोधनम् हे अनेन । तथा च सार्वभौमत्वान्मानं न कार्यमिति भावः । त्वया अनेन कुब्जशरीरेण समयप्रतीक्षया ऋतुपर्ण आश्रयणीयः । प्राणिनां विपद्भवत्येवेति समाश्वासयतीति भावः । कलुषं वृजिनैनौघमंहो दुरितदुष्कृतम् । नाम प्रकाश्यसम्भाव्यक्रोधोपक्रमकुत्सने । गर्हा समुच्चयप्रश्नशङ्कासम्भवनास्वपि ।२० ॥

---

१. विद्यावती— न एनः पापं यस्य स अनेनः तस्य सम्बोधनम् । अथवा निर्विसर्गोऽत्र पाठः । न इनः स्वामी यस्य स अनेनः चक्रवर्ती सम्राट् । तस्य सम्बोधनम् ।

**अनुवाद**—तथा अभिमान रहित हो कर उस समर्थ ऋतुपर्ण नामक राजा का अपने इस (कुब्जत्व युक्त) शरीर से आश्रय लो। हे निष्पाप। देहधारियों को विपत्तियां कहां नहीं होती? ॥२०॥

**व्रज सुखमायाहीनश्रीरित्यन्तर्हितः शमायाऽहीनः।**

**स्निग्धो मायाहीनः स्याज्जनतायाः क्व नोत्तमाया न हीनः[१] ॥२१॥**

**अन्वयः**—इनश्रीः शमाय व्रज। सुखम् आयाहि इति (उक्त्वा) अहीनः अन्तर्हितः। हि मायाहीनः इनः उत्तमायाः जनतायाः क्व न स्निग्धः स्यात् ॥२१॥

**अन्वयदीपिका**—व्रजेति-हे नल! इनश्रीः इनस्य सूर्यस्य श्रीरिव श्रीर्यस्य स एवं विधः त्वं शमाय शान्तये व्रज गच्छ। ऋतुपर्णराजानं प्रति इति शेषः। सुखम् आयाहि प्राप्नुहि। इति उक्त्वा अहीनः[२] कर्कोटकः अन्तर्हितः अन्तर्दधौ। ननु सर्पः नले एवं विधं स्नेहं कथं कृतवान्? अत आह हि यस्मात् इनः समर्थः मायाहीनः कपटरहितः अहीनः सर्पेश्वरः उत्तमाया जनताया जनसमूहस्य क्व न स्निग्धः सस्नेहः न स्यात्? अपि तु सर्वत्रैव स्यात् ॥२१॥

**यमकबोधिनी**—व्रजेति — अहीनो भुजगेशः कर्कोटक इति अन्तर्हितः अन्तर्ध्यानं प्राप्तः। इति कथम्? हे नल! त्वं व्रज गच्छ। पुनःसुखम् आयाहि प्राप्नुहि। किं लक्षणस्त्वम्? इनश्रीः इनस्य सूर्यस्य इ श्रीः शोभा यस्य स तथा। हि यतः उत्तमायाः जनतायाः जनसमूहस्य इनः प्रभुः क्व न शमाय शान्त्यै स्यात् अपि तु न क्वापीत्यर्थः। उत्तमप्रजानाथस्योत्तमजनतां विनाऽन्यत्र शान्तेरभावात्। किं लक्षणः प्रभुः? स्निग्धः प्रीतो वत्सलः। पुनः किं लक्षणः? मायाहीनः कपटरहितः ॥२१॥

**दीपिका**—व्रजेति-हे नल! शमाय शान्त्यै त्वं व्रज ऋतुपर्णान्तिकं व्रज सुखम् आयाहि प्राप्नुहि। इत्युक्त्वा अहीनः कर्कोटकोऽन्तर्हितः अन्तर्ध्यानं प्राप्तः। किम्भूतस्त्वम्? इनश्रीः सूर्यश्रीः। उत्तमायाः उत्कृष्टायाः जनतायाः इनः क्व स्निग्धो न क्व स्नेहयुक्तो न स्यात्। किम्भूतः इनः? मायाहीनः कपटरहितः ॥२१॥

**सुबोधिनी**—व्रजेति-हे नल! कथं भूतः? इनश्रीः इनस्य सूर्यस्य श्रीरिव श्रीर्यस्य सूर्यकान्तिः। अथवा इनश्रीरिति सर्पविशेषणम् अयुक्तं वैतत् नलस्य विशेषणं तदानीं विरूपत्वात्। व्रज गच्छ। उद्दिष्टमृतुपर्णसमीपमिति यावत्। किमर्थम्? शमाय शान्त्यै सुखम् आयाहि आप्नुहि। इत्युक्त्वाऽहीनः सर्पराजोऽन्तर्हितः। एनमेवार्थमुपोद्घापयति। हि यतः उत्तमाया जनताया उत्कृष्टस्य जनसमूहसय मायाहीनो निर्दम्भः इनः समर्थ; स्निग्धः मित्रं क्व कुत्र न स्यात्। अपि तु सर्वत्रैव स्यात्। कर्कोटको नलं व्रज सुखं च लभस्वेत्युक्त्वान्तर्दधे। सज्जनस्य सुहृन्मिलत्वेति

१. क्व नूत्तमाया ही न इति 'ञ' पुस्तके पाठः।

२. विद्यावती— अहीनां सर्पाणाम् इनः स्वामीति अहीनः। नागानां राजा कर्कोटक इत्यर्थः।

भावः । स्निग्धो वयस्य:सवयाः । इनः पत्यौ नृपार्कयोरिति मेदिनी । स्यादस्ते-विधिलिङि । जनतेति ग्रामजनबन्धुभ्यस्तल् ॥२१ ॥

**अनुवाद**—सूर्य के समान तेजस्वी हे नल ! कल्याणार्थ (ऋतुपर्ण के पास) जाओ और सुख प्राप्त करो । ऐसा कह कर सर्पेश्वर (कर्कोटक) अंतर्भूत हो गया । निश्चय ही समर्थ, छल आदि से रहित राजा उत्तम जनता के लिये कहां स्नेहवान् नहीं होता ? ॥२१ ॥

**प्रीतिरसादनवनतः कृत्वा[१] तद्वसनमात्मसादनवनतः ।**

**बहुमांसादनवनतः सोऽस्मादृतुपर्णमाससाद नवनतः ॥२२ ॥**

**अन्वयः**—[२]नवनतः अनवनतः सः प्रीतिरसात् तद्वसनम् आत्मसात् कृत्वा अस्माद् अनवनतः बहुमांसादनवनतः ऋतुपर्णम् आससाद ॥२२ ॥

**अन्वयदीपिका**—प्रीतिरसादिती-स नलः ! प्रीतिरसात् तद्वसनम् आत्मसात्कृत्वा अस्माद् बहुमांसादनवनतः बहवो मांसादनाः यस्मिन् तत् तस्माद् वनतः ऋतुपर्णम् आससाद प्राप । कथं भूताद् वनात् ? अनवनतः न अवनतं यस्मिन् तत् तस्मात् । कथं भूतः सः ? अनवनतः न अवनतः अनवनतः स्तब्धः । पुनः कथं भूतः ? नवनतः नवं नतं यस्य सः ॥२२ ॥

**यमकबोधिनी**—प्रीतीति-स राजा अस्माद् बहुमांसादनवनतः बहवो मांसादनाः पलभक्षणा सिंहादयो राक्षसा वा यस्मिन् तद्बहुमासादनम् । तथाभूतं च तद्वनं च तस्मात् पञ्चम्यास्तस् । ऋतुपर्णनामानं राजानं प्राप । किं कृत्वा ? प्रीतिरसात् प्रमोदरसात् तद्वचनं कर्कोटकवचनम् आत्मसात्कृत्वा । तद्वसनिमिति पाठे तत् कोंटकदत्तं वसनं वस्त्रम् आत्मायत्तं कृत्वा । किं लक्षणाद् बहुमांसादनवनतः ? अनवनतः न नवनं स्तुतिर्यस्य तत्तथा राक्षसाश्रयत्वात् । पुनः किं लक्षणात् ? अवनं रक्षणे प्रीताविति धरणिः । किं लक्षणः राजा ? नवनतः नवं यथा स्यात् तथा नतो नम्रः । वा नवः स्तुतिस्तत्र ततो नम्रीभूतः । ततः नम्रत्वस्याभावात् ॥२२ ॥

**दीपिका**—प्रीतिरसादिति—स नल ! अस्माद् बहमासांदनवनतः बहवो मासादनाः शार्दूलादयो यस्मिन् तत् तादृशं च तद् वनं च तस्मादृतुपर्णं राजानं नवनतः प्रत्यग्रनम्रः सन् आससाद प्राप । किं कृत्वा ? तद्वसनं सर्पदत्तं वस्त्रम् आत्मसात् आत्माधीनं कृत्वा । किम्भूतः सः प्रीतिरसात् स्नेहरसात् अनवनतः । तच्च जडीभूत इत्यर्थः । किम्भूतात् ? अनवनतः न विद्यते अवनं रक्षणं यत्र ॥२२ ॥

---

१. तद्वचनम् इति ग घ पुस्तकयोः पाठः ।

२. विद्यावती— न वनतः इति वा विच्छेदः । वनतः ऋतुपर्णं न आससादेति न । अपितु तत्र प्राप्त एवेति भावः ।

**सुबोधिनी**—प्रीतीति-अर्थात् स नलः प्रीतिवशात् अनवनतः नवनं स्तुतिः (न नवनम्)[१] अनवनं तस्मात्। पञ्चम्यास्तसिल्। तथा च प्रीतिवशादेव तद्वस्त्रं गृहीतं न तु स्तवं कृत्वेत्यर्थः। तद्वसनं वस्त्रम् आत्मसात्कृत्वा गृहीत्वा। अस्माद् वनतः अरण्यात् ऋतुपर्णं नाससाद अपितु आससादैव। काक्वर्थे नञ्। किम्भूतात्? न अवनं रक्षणं यस्मिंस्तस्माद्रक्षाहीनाद् बहुंमांसादनवनतः बहुतरा ये मांसादना व्यालाः सिहशार्दूलराक्षसास्तेषां वनतः वन्यते सम्भक्त्यते अस्मिन् तद् वनम्। तादृशाद् बहुत्र व्यालसम्भक्तात् समूहात्। वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम्। तदधीनवचनं इति सातिः। वनषनसम्भक्तावित्यस्य वनत इति। आससादेति सदेर्लिटि ॥२२॥

**अनुवाद**—(कुब्जत्व आदि) नये झुकाव से युक्त (वह नल) बिना स्तुति आदि के प्रेम पूर्वक ही उसके (कर्कोटक के) वस्त्रों को लेकर इस रक्षाहीन और बहुत से मांसाहारी जीवों (की बस्ती) वन से ऋतुपर्ण के पास पहुंचा ॥२२॥

**अकृत मुदायन्तारं स तममनुत चाऽध्वनो यदाऽयन्तारम्।**
**ध्वनिसमुदायन्तारं दधतोऽश्वास्तं तदाऽऽयन्ताऽरम् ॥२३॥**

**अन्वयः**—सः मुदा तं यन्तारम् अकृत। यदा अयम् अध्वनः तारम् अमनुत तदा तं अश्वाः तारं ध्वनिसमुदायं दधतः अरम् आयन्त ॥२३॥

**अन्वयदीपिका**—अकृतेति-सः ऋतुपर्णः मुदा हर्षेण तं नलं यन्तारं सारथिम् अकृत कृतवान्। च पुनः अयं नलः यदा अध्वनः तारं मार्गोत्तरणम् अमनुत अमन्यत तदा तं गताः तदीया अश्वाः तारम् उच्चं ध्वनिसमुदायं शब्दसमूहं दधतःसन्तः तं नलम् अरम् अत्यर्थम् आयन्त[२] आजग्मुः ॥२३॥

**यमकबोधिनी**—अकृतेति-स ऋतुपर्णः तं नलं मुदा हर्षेण यन्तारं सूतम् अकृत अकार्षीत्। स नलश्च यदाऽयम् यस्य ऋतुपर्णस्य आयः शीघ्रमार्गोल्लङ्घनरूपस्तम् अध्वनो मार्गस्य तारं तरणम् उल्लङ्घनम् अमनुत अमन्यत। यस्य ऋतुपर्णस्य आयो लाभो यदायस्तं शीघ्रमार्गोल्लङ्घनेन राज्ञः सन्तोष इति मेने इत्यर्थः किलेति सत्ये। तदा तस्मिन्नवसरे अस्य नलस्य सम्बन्धिनो हयास्तुरगाः अरम् अत्यर्थम् आयन्त आगच्छन्। किं कुर्वन्तः? तारम् अत्युच्चैर्ध्वनिसमुदायं निर्घोषसमूहं दधतः विभ्रतः। यन्ता हस्तिपके सूते इत्यमरः ॥२३॥

**दीपिका**—अकृतेति-स ऋतुपर्णाभिधो राजा तं नलं मुदा तोषेण यन्तारं सारथिम् अकृत कृतवान्। च पुनः अयं नलः यदा यस्मिन् समये अध्वनः मार्गस्य तारं तरणम् अमनुत मन्यते स्म तदा तद्गता अश्वाः ऋतुपर्णसविधम् अरम् अत्यर्थम् एनं नलम् आयन्त

---

१. कोष्ठकान्तर्वत्ति सम्पादकस्य।

२. विद्यावती-आयन्त इति अयगताविति धातोःरूपम्।

आजग्मुः। किम्भूताः अश्वाः? तमुत्कृष्टं ध्वनिसमुदायं शब्दसमूहं दधतः विभ्रतः ॥२३॥

**सुबोधिनी—**अकृतेति - स ऋतुपर्णः तं नलं मुदा हर्षेण यन्तारं सारथिम् अकृत। सोऽयं नलो यदाऽध्वनो मार्गस्य तारं तरणम् अमनुत मेने अङ्गीकृतवान् तदा तस्मिन् काले तारमत्युच्चैर्ध्वनिसमुदायं हेषासमूहं दधतः कुर्वन्तोऽस्य ऋतुपर्णस्य हया अश्वा अरम् अतिशीघ्रम् आयन्त आजग्मुः। यदा ऋतुपर्णाल्लब्धसारथ्यो नलो मार्गे त्वां यथेष्टं तारं यामीत्यङ्गीकृतवांस्तदा हेषमाणा ऋतुपर्णवाजिनोऽतिशीघ्रं चेलुरिति भावः। नियन्ता प्राजिता यन्ता सूतः क्षन्ता च सारथिः। तारोऽत्युच्चैस्त्रयस्त्रिष्वित्यमरः। अयगतावित्यस्यात्मनेपदिन आयन्त ॥२३॥

**अनुवाद—**ऋतुपर्ण ने सहर्ष उसे (नल को) सारथी बना लिया। जब इसने मार्ग पार करना चाहा तब उसकी अधीनता वाले अश्व जोर से ध्वनि करते हुए शीघ्र ही आ गये ॥२३॥

**अथ सहसा दमयन्त्या सा दमयन्त्याऽऽत्मशर्म[1] निद्रा मुमुचे**

**[2]धीहिंसादमयन्त्या सादमयं त्यागमकृत स यदा तस्याः ॥२४॥**

**अन्वयः—**स अयं यदा तस्या (दमयन्त्याः) त्यागम् अकृत । अथ धीहिंसादं सादम् अयन्त्या आत्मशर्म दमयन्त्या दमयन्त्या सहसा सा निद्रा मुमुचे ॥२४॥

**अन्वयदीपिका—**अथेति-अयं नलः दमयन्त्याः त्यागम् अकृत।तदा अथानन्तरं दमयन्त्या सहसा अकस्मात् निद्रा मुमुचे तत्यजे। कथं भूतया दमयन्त्या? आत्मसुखं दमयन्त्या नाशयन्त्या। आत्मसुखं नाशयतीति निद्राविशेषणं वा। पुनः कथं भूतया दमयन्त्या? धीहिंसादं धियः हिंसां ददातीति धीहिसादस्तं बुद्धिनाशकं सादं दुःखम् अयन्त्या प्राप्तया ॥२४॥

**यमकबोधिनी—**अथेति-अथेत्यव्ययम्। दमयन्तीचरितमारेभे। अयं नलः यदा तस्याः दमयन्त्यास्त्यागम् अकृत करोति स्म तदा दमयन्त्या भैम्या सहसा वेगेन सा निद्रा स्वापं मुमुचे। अमुच्यत। तदा दमयन्ती प्रबुद्धेत्यर्थः। किं कर्वन्त्या? आत्मशर्म निजसुखं दमयन्त्या उपशमयन्त्या। पुनः किं कुर्वन्त्या? सादं खेदम् अयन्त्या गच्छन्त्या। किं लक्षणं सादम्? धीहिसादम्। धियो बुद्धेर्हिसा नाशस्तं ददाति इति तं बुद्धिनाशदमित्यर्थः ॥२४॥

**दीपिका—**अथेति-अथानन्तरं दमयन्त्या सहसा शीघ्रं सा निद्रा मुमुचे तत्याज। सा यस्यां निद्रायाम् अयं नलः तस्याः भैम्याः त्यागं परित्यागम् अकृत कृतवान्। किम्भूतया

---

१. आत्मसुखमिति 'क' पुस्तके पाठः।

२. जीवितसादमिति 'च' 'छ' पुस्तकयोः।

दमयन्त्या ? आत्मशर्म निजसुखं दमयन्त्या नाशयन्त्या। पुनः किम्भूतया दमयन्त्या ? धीहिंसादं बुद्धिनाशप्रदं सादं दुःखम् अयन्त्या गच्छन्त्या ॥२४ ॥

**सुबोधिनी**—अथेति-अथ नलापगमनानन्तरम् आत्मशर्म स्वसुखं दमयन्त्या उपतापयन्त्या दमयन्त्या भैम्या सा निद्रा शयनं सहसा शीघ्रं मुमुचे त्यक्ता। कीदृश्या ? जीवितसादं जीवतस्य सादमवसादं विनाशम् अयन्त्या गच्छन्त्या प्राणान् जहत्येति यावत्। स च नलः सादमयं दुःखमयं परित्यागं तस्याः दमयन्त्याः यदा यस्मिन् काले अकृत कृतवान्। नलेऽपयाते वनप्रदेशसुप्ताया दमयन्त्याः निद्रा मुक्ता। कदा ? अयं नलः दुःखप्रचुरं तं त्यागं यदाऽकार्षीत्। दमु उपतापेऽस्यण्यन्तस्य शत्रन्तस्य स्त्रीत्वे दमयन्त्येति रूपम्। साद्यतेऽवसाद्यतेऽनेनेति सादो दुःखम्। त्यज हानावित्येतद्धात्वर्थत्वेन कण्ठोक्त एवार्थः। अकृतेति कृञो लुङि। जीवितसादमित्यत्र धीहिसादमिति पाठे धीहिंसाबुद्धिनाशस्तं ददातीति सः। तं नलम् अयन्त्या चिन्तयन्त्या नलः क्व गतः ? अहं वा क्व गच्छामि ? कुत्र तं पश्यामि ? इति भावयन्तया। अय धातोर्गत्यर्थकत्वात् ज्ञानर्थकत्वमित्यर्थः ॥२४ ॥

**अनुवाद**—उस (नल) ने जब दमयन्ती का त्याग कर दिया तब बुद्धि को नष्ट करने वाले दुःख को प्राप्त करती हुई, अपने सुख को नष्ट करती हुई, उस दमयंती ने सहसा निद्रा छोड़ी ॥२४ ॥

**साऽत्र ससादा रामा सीतेव त्रासमाससादाऽरामा।**
**या प्रासादारामानुपेत्य भर्त्रा रतिं रसादाऽऽराऽमा ॥२५ ॥**

**अन्वयः**—या प्रासादारामान् उपेत्य भर्त्रा अमा रसात् रतिम् आर सा रामा अत्र ससादा अरामा सीता इव त्रासम् आससाद ॥२५ ॥

**अन्वयदीपिका**—सेति-सा दमयन्ती अत्र वने त्रासम् आससाद प्राप। सा का ? या दमयन्ती पूर्वं प्रासादारामान् प्रासादाश्च आरामाश्च तान् उपेत्य प्राप्य भर्त्रा अमा सह रसात् स्नेहात् रतिक्रीडाम् आर प्राप। कथं भूता सा ? रामा मनोहरा। पुनः किं विधा सा ? ससादा सखेदा। केव ? अरामा सीतेव। यथा सीता वने त्रासं[1] प्राप्तेति पूर्ववत् ॥२५ ॥

**यमकबोधिनी**—सेति — सा रामा रमणी दमयन्ती अत्रास्मिन् वने त्रासं भयम् आससाद प्राप। किं लक्षणा सा ? ससादा सखेदा। किम्भूता सा ? उत्प्रेक्षते। अरामा राघवरहिता सीतेव जानकीव। सा का ? या पूर्वं प्रासादारामान् राजमन्दिरोपवनानि उपेत्य उपगम्य भर्त्रा प्रियेण अमा सार्द्धं रसात् रागात् रतिक्रीडाम् आर प्राप ॥२५ ॥

---

१. विद्यावती-सीता इव वने त्रासं प्राप्तेति न कवेर्विवक्षितोऽर्थस्तस्या अरामा इतिपदेन विशिष्टत्वात्। अतोऽरामा रामरहिता सीता यथा रामं विना लङ्कायाम् अशोकवने दुःखं प्राप्तेति तथा दमयन्ती अपि नलरहिते वने इत्यर्थः ॥

**दीपिका**—सात्रेति — अत्र वने सा रामा दमयन्ती त्रासं भयम् आससाद प्राप। सा ससादा सदु:खा। केव? अरामा रघुनाथरहिता सीतेव जानकीव ॥२५॥

**सुबोधिनी**—सेति-अत्र भयङ्करे वने सा रामा दमयन्ती ससादा सदु:खा त्रासं भयम् आससाद प्राप्तवती। का इव? अरामा रामरहिता सीतेव या दमयन्ती पूर्वं प्रासादारामान् नृपगृहान् उपवनानि उपेत्य आगत्य रसात् स्नेहात् भर्त्रा नलेन अमा सह रतिक्रीडाम् आर प्राप। प्रासादो देवभूभुजाम्। आरामः स्यादुपवनम्। सुन्दरी रमणी रामा। अमा सह समीपे चेत्यमरः ॥२५॥

**अनुवाद**—जो (दमयंती) महलों और बगीचों के सुखों को पाकर पति के साथ सस्नेह रति प्राप्त करती थी, वही मनोहर (दमयंती) वन में कष्टों के साथ राम से विहीन सीता की तरह दु:खों को पाई ॥२५॥

**तत्र पदे व्यालीनामथ विभ्रान्तं वने च देव्याऽलीनाम्[1]।**

**तरुवृन्दे व्यालीनां ततिं दधाने तयाऽऽस्पदे व्यालीनाम्[2] ॥२६॥**

**अन्वयः**—अथ तया देव्या व्यालीनां पदे, व्यालीनाम् आस्पदे, तरुवृन्दे व्यालीनाम् अलीनां ततिं दधाने च तत्र वने विभ्रान्तम् ॥२६॥

**अन्वयदीपिका**—तत्रेति-अथेत्यनन्तरं देव्या दमयन्त्या तत्र वने विभ्रान्तं नलान्वेषणायेति शेषः। कथं भूते वने? व्यालीनां सर्पस्त्रीणां पदे क्रीडास्थाने। पुनः किं विधे? व्यालीनां वीनां पक्षिणाम् आलयः व्यालयः तासाम् आस्पदे स्थाने तथा अलीनां भ्रमराणां ततिं समूहं दधाने। कथं भूतां ततिम्? तरुवृन्दे वृक्षसमूहे व्यालीनां निलीयमानाम्।[3] ॥२६॥

**यमकबोधिनी**—तत्रेति-अथानन्तरं तया दमयन्त्या तत्र तस्मिन् वने विभ्रान्तं विशेषेण भ्रमणम् अकारि। किं लक्षणे वने? व्यालीनां सर्पिणीनां पदे स्थाने। किं लक्षणे वने? आलीनां भृङ्गीणां ततिं पङ्क्तिं दधाने बिभ्राणे। किं लक्षणां ततिम्? तरुवृन्दे वृक्षसमूहे व्यालीनां विशेषेण आलीनां मग्नाम्। पुनः किं लक्षणे वने? वीनां पक्षिणाम् आलयः पङ्क्तयस्तासां पक्षिश्रेणीनाम् आस्पदे आवासे। देवी राज्ञी देवः सुरे घने राज्ञि। देवमाख्यातमिन्द्रयमिति यादवप्रकाशः। पुंयोगे इण् ॥२६॥

**दीपिका**—तत्रेति-अथानन्तरं तया देव्या दमयन्त्या तत्र वने विभ्रान्तम्। नलान्वेषणाय परितो गतमित्यर्थः। किम्भूते वने? व्यालीनां सर्पिणीनां पदे स्थाने। पुनः किम्भूते वने तरुवृन्दे वृक्षसमूहे। व्यालीनां निलीयस्थितानाम् अलीनां भ्रमराणां ततिं दधाने बिभ्रति। पुनः किम्भूते वने? व्यालीनां पक्षिपङ्क्तीनाम् आस्पदे स्थाने ॥२६॥

---

१. दमयन्त्या भ्रान्तमास्पदे व्यालीनामिति 'ञ' पुस्तके।

२. वनेऽत्र देव्यालीनामिति 'ञ' पुस्तके।

३. विद्यावती — व्यालीनां विशेषेण आ समन्तात् लीनां मग्नां वेति व्यालीनाम्। अतः निलीनामिति युक्तम्।

**सुबोधिनी**—तत्रेति-अथानन्तरं तत्र तस्मिन्नरण्ये तया देव्या दमयन्त्या च पुनः बहु विभ्रान्तम्। बहुविधं विभ्रमितं पर्यटितम्। नलमन्वेषयन्तीति शेषः। कीदृशे वने? व्यालीनां सर्पिणीनां पदे स्थाने। पुनस्तरुवृन्दे व्यालीनां छन्नामासक्ताम् आलीनां भ्रङ्गाणां ततिं समूहं दधाने धारयति। पुनः व्यालीनां वयः पक्षिणः तेषाम् आलीनां पङ्क्तीनाम् आस्पदे प्रतिष्ठास्थले। आली सख्यावली षट्पदभ्रमरालयः। देवी कृताभिषेकायां विभ्रान्तमित्युदितो वेतीड्विकल्पः। प्रतिष्ठास्थानमास्पदम् ॥२६॥

**अनुवाद**—वह देवी (दमयंती) सर्पिणियों के क्रीडा स्थान में 'झुंड' के 'झुंड' रहने वाले पक्षियों के स्थान में वृक्षों में आसक्त भ्रमरों को धारण करने वाले स्थानों में (नल को खोजती हुई) भटकी ॥२६॥

**वेगबलापासितया वेण्या भैमी युता ललापाऽसितया।**
**नृप सकलापासितया हत्वाऽरीन् बान्धवान् किलाऽऽपासि तया ॥२७॥**

**अन्वयः**—वेगबलापासितया तया असितया वेण्या युता भैमी नृप! सकलापासितया अरीन् हत्वा बान्धवान् आपासि किल इति ललाप[1] ॥२६॥

**अन्वयदीपिका**—वेगेति-वेगबलेन अपासिता वेगबलापासिता तया विस्तृतया इत्यर्थः पुनः असितया कृष्णवर्णया केशकलापेन युक्ता भैमी ललाप विलापम् अकरोत्। किं विललापेत्याह हे नृप! त्वं सकलापासितया कलापो निषङ्गश्च ताभ्यां सह वर्तमानः तस्य भावः तया[2] सकलापासितया अरीन् हत्वा बान्धवान् आपासि आ समन्तात् पालयसि। किल सत्यम् ॥२६॥

**यमकबोधिनी**—वेगेति- भैमी दमयन्ती ललाप विललापेत्यर्थः। किं लक्षणा भैमी? असितया श्यामया वेण्या बद्धकेशश्रेण्या युता युक्ता। वेणी तु केशबन्धे स्याज्जलस्रोतसि च स्मृतेति यादवः। किं लक्षणया वेण्या? वेगबलापासितया वेगबलेन जवेन अपासितया अपक्षेपितया। किं विललाप तदाह हे नृप! हे राजन् किलेति सत्ये तया प्रसिद्धया कलापासितया अरीन् हत्वा त्वं बान्धवान् आ समन्तात् पासि रक्षसि। कलापश्च असिश्च कलापासी सुशोभनौ कलापासी यस्य स सकलापासि तस्य भावस्तत्ता तया। कलापः इषुधिः। असिः खड्गः। कलापो भूषणे बर्हे तूणीरे संहतेऽपि चेत्यमरः ॥॥२६॥

---

१. विद्यवाती-वेगबलापासितया तया असितया वेण्या युता भैमी ... इति ललाप इति वाक्यस्याग्रेऽपि अन्वयः।

२. विद्यावती-कलापो भूषणे बर्हे तूणीरे संहतेऽपि चेत्यमरः। अत्र खलु कलापेन सहितः असिः कलापासिः तेन सहितः सकलापासिः। तस्य भावः सकलापासिता तया कलापासितया इत्यर्थो युक्तः कलापशब्दस्य आयुधेऽरूढेः। रूढित्वमस्ति चेत् व्याख्या युज्यत एव।

**दीपिका**—वेगबलेति- भैमी दमयन्ती ललाप विललाप । किम्भूता भैमी ? वेगबलापासितया उत्तालगतिवशात् व्यस्तया विकीर्णया वेण्या केशपरम्परया युता युक्ता । किम्भूतया वेण्या ? असितया रुक्षवर्णया विलापमेवं वर्णयति हे नृप तया प्रसिद्धया सकलापासितया । कलापो निषङ्गः । असिनिषङ्गाभ्यां सह वर्तमानः सकलापासिः तस्य भावः तया । अरीन् शत्रून् हत्वा बान्धवान् बन्धुजनान् आपासि पालयसि । किलेति प्रसिद्धौ ॥२६ ॥

**सुबोधिनी**—वेगेति - वेगबलेन धावनबलेन अपासितया विस्तृतया अपगता असिता उपवेशनत्वम् अथवा असिता विद्यमानता यस्याः स तया त्रुटितया असितया श्यामलया वेण्या युता सहिता दमयन्ती ललाप विललाप । किं विललापेत्याह हे नृप ! हे राजन् । तया सकलापासितया कलापस्तूणीरः असिः खड्गः ताभ्यां सहितः सकलापासिः तस्य भावस्तत्ता तया करणेन । यद्वा वेगबलापसितया वेगं च बलं च आप्नोतीति वेगबलापः स चासिश्च वेगबलापासिर्यस्याः तस्य भावस्तत्ता तया दृढखड्गत्वेन । कथं भूतया ? सकलापासितया सकलानाम् अर्थात् शत्रूणाम् अपासितया अपहृतखड्गया अरीन् हत्वा बान्धवान् बन्धून् पासि रक्षसि । किलेति वार्ता । त्वयि खड्गधारिणि सति अन्येषां हस्तात् खड्गाः स्वयं पतन्तीति भावः । स त्वमेकाकिनीं मां वने त्यक्त्वा कथं गतोऽसि इति भावः । वार्तासम्भाव्ययोः किल । कलापो भूषणे बर्हे तूणीरे संहतेऽपि च । आपासीति पा रक्षणे इत्यस्य लटि ॥२६ ॥

अनुवाद—तेज गति से (इधर उधर दौड़ने के कारण) फैली हुई काले वर्ण की चोटी से युक्त भैमी ने 'हे राजन् ! म्यान से युक्त तलवार से शत्रुओं को मार कर तुम बन्धुओं की रक्षा करते हो,' (इस प्रकार) विलाप किया ॥२६ ॥

**स कथं मानवनानां न्यायविदाचरसि सेव्यमानवनानाम् ।**
**धृतसीमानवनानां दाराणां त्यागमनुपमाऽनवनानाम् ॥२८ ॥**

**अन्वयः**—हे अनुपम ! न्यायवित् सः (त्वं) मानवनानां सेव्यमानवनानां धृतसीमानवनानाम् अनवनानां दाराणां त्यागं कथम् आचरसि ? ॥२८ ॥

**अन्वयदीपिका**—स कथमिति-हे न्यायविद् नयज्ञ अनुपम ! स[1] त्वं दाराणां स्त्रीणां त्यागं कथम् आचरसि ? कथं करोषि ? । कथं भूतानां दाराणाम् ? मानवनानां मान एव वनं येषां ते तेषां गर्वगहनानामित्यर्थः । पुनः कथं भूतानाम् ? सेव्यमानवनानाम् । सेव्यमानं वनं येषां ते तेषाम् । प्राप्ताटवीनामित्यर्थः । पुन; कथं भूतानाम् ? धृतसीमानवनानां धृतं सीमानवनं[2] यैस्ते तेषां धृतसीमास्तुतीनामित्यर्थः । पुनः कथं भूतानाम् ? अनवनानां न अवनं (रक्षणं)[3] येषां ते तेषाम् ॥२८ ॥

---

१. विद्यावती-अत्र स इति तत्पदेन नलस्य पूर्वस्मिन् श्लोके वर्णितं गुणविशेषं स्मारयति । बान्धवरक्षणे तादृशस्त्वं दाराणां त्यागं कथमाचरसि ।

२. नवनं स्तुतिः ।

३. कोष्ठकान्तर्वर्ति सम्पादकस्य ।

**यमकबोधिनी—**स इति-हे अनुपम ! न उपमा यस्य तत्सम्बुद्धौ। हे सर्वोत्कृष्ट ! स बान्धवपालकस्त्वं दाराणां त्यागं कथमाचरसि ? आचरसीति कथमोयोगेऽत्र भूते लट्। आचरितवान्। किं लक्षणस्त्वम्? न्यायवित् नीतिज्ञः। किं लक्षणानां दाराणाम्? मानवनानां गर्वगहनानाम्। यद्वा मानः वनं जलमिव येषां ते तथा तेषाम् तेन बहुकालावस्थानाभावात् अनुस्वराभावात्। हे मानव हे नानान्यायवित् इति सम्बोधनद्वयम्। पुनः किं लक्षणानां दाराणाम्? नवनानां स्तुतीनां धृता सीमा येन स धृतसीमा धृतावधिः। त्वत्परस्य स्तवनीयस्याभावात्। सीमसीमे स्त्रियामुभे इत्यमरः। पुनः किं लक्षणानां दाराणाम्? अनवनानाम् अरक्षणानाम् ॥२८॥

**दीपिका—** स कथमिति - हे मानव ! हे अनुपम निरूपम नल ! हे नाना न्यायविद्! तदङ्गव्यवहारज्ञ ! स त्वं दाराणां स्त्रीणां त्यागं परित्यागं कथमाचरसि करोषि। यद्वा मानवनानां मानमहानानामिति दारविशेषणम्। न्यायविदित्येतावदेकं पदम्। किम्भूतानां दाराणाम्? सेव्यमानवनानां स्तुतीनां धृतसीमा मर्यादीभूता ॥२८॥

**सुबोधिनी—**प्रेमकरुणादिकमनुस्मरन्ती आह सेति— हे मानवनानान्यायवित्! मनुः प्रजापतिस्तत्प्रणीतो यो नाना बहुप्रकारो न्यायो धर्मशास्त्रं तद्वेत्तीति ज्ञातसकलधर्मशास्त्रमानुषव्यवहाराभिज्ञ ! हे अनुपम निरूपम। स त्वम् अनवनानाम् अवनं रक्षणं तद्रहितानां सेव्यमानमाश्रीयमाणं वनमरण्यं यैस्तादृशानां वनमध्यगतानां धृतसीमानवनानां धृतं सीमायाः कुलमर्यादायाः नवनं स्तवो यैस्तादृशानां दाराणां स्त्रीणां त्यागं कथमाचरसि ? करोषि। अदुष्टभार्यापरित्यागे दोषं कथं विचारयसि इति भावः। स कथं मानवनानामिति पाठे हे न्यायवित् ! एतस्मिन् कर्मणि धर्मोऽधर्मो वेति विचारपण्डित। किम्भूतानां दाराणाम्? मानवनानां मानानां वनं येषां मानगहनानामित्यर्थः ॥२८॥

**अनुवाद—**हे अनुपम न्यायवित् ! वह (पूर्व मे कहे गये गुणों से युक्त) तुम गर्वशालिनी, (धर्म पालन के लिये) वन का सेवन करने वली, कुलमर्यादा की सदैव स्तुति करने वाली रक्षाहीन स्त्रियों का त्याग क्यों कर रहे हो ॥२८॥

**परकृतमेतत्त्वेनः स्मरामि तन्न[1] स्मृतोऽसि मे तत्त्वेन।**
**दोषसमेतत्वेन प्रदूषये नात्र सम्भ्रमे तत्त्वेन ॥२९॥**

**अन्वयः—**हे इन ! एतत् तु एनः परकृतं स्मरामि। तत् मे तत्त्वेन (त्वं) न स्मृतः असि। तत् अत्र सम्भ्रमे दोषसमेतत्वेन त्वा न प्रदूषये ॥२९॥

**अन्वयदीपिका—**परकृतमिति- हे इन स्वामिन् ! हे राजन्। एतत् तु एनः त्यागकृतं दुःखं परकृतं कलिभवं स्मरामि जानामि न त्वत्कृतमित्यर्थः। तत् तस्मात् कारणात् मे मम तत्वेन

१. यन्नेति 'च' 'ञ' पुस्तकयोः पाठः।

त्यागकारणत्वेन त्वं न स्मृतोऽसि न ज्ञातोऽसि । तु पुनः राजन् ! अत्र सम्भ्रमे भये दोषसमेतत्वेन दोषयुक्तत्वेन त्वां न प्रदूषये न निन्दामि ॥२९ ॥

**यमकबोधिनी**—परकृतमिति-हे इन ! हे स्वामिन् । एतत्तु एनः पापं मम त्यागलक्षणं परकृतं स्मरामि न त्वत्कृतम् । तत् तस्मात् कारणात् तत्वेन एनस्त्वेन मया त्वं न स्मृतोऽसि किन्तु निरपराधतया स्मृतोऽसीत्यर्थः । तत् तस्माद् अत्र स्म्भ्रमे अस्मिन् विषये दोषसमेतत्वेन दोषमिलितत्वेन त्वा इति त्वां न दूषये न निन्दामि । तत्पदस्योभयात्रानुषङ्गः । सम्भ्रमः साध्वसेऽपि स्यादिति विश्वः ॥२९ ॥

**दीपिका**—परकृतमिति-हे इन ! हे स्वामिन् ! अहं तदेतदेनः दुःखं परकृतं कलिकृतं स्मरामि जानामि नान्यकृतमित्यर्थः । न तत् तस्मात् कारणात् त्वं तत्वेन त्यागकारणत्वेन मे मया न स्मृतोऽसि । न ध्यातोऽसि । पुनः अत्र सम्भ्रमे भये त्वा त्वां न दोषसमेततत्वेन दोषयुक्तत्वेन दूषये निन्दामि ॥२९ ॥

**सुबोधिनी**—परेति-हे इन ! स्वामिन् यत् यस्मादेतद् मत्परित्यागरूपम् एनः पापं परकृतं परेण कलिना कृतं स्मरामि जानामि । तु पुनः त्वं मे मया तत् तस्मात् तत्वेन सरुपत्वेन न याथार्थ्येन स्मृतोऽसि न ज्ञातोऽसि । अपि तु तत्त्वतो ज्ञातोऽसि । त्वं स्वबुद्धया नाचरसि । अत्र सम्भ्रमे दुःखे दोषसमेतत्वेन सदूषणत्वेन त्वा त्वां न दूषये न दूषयामि । कलिकृतेऽपराधे भावः । नञ् काक्वर्थे । समौ संवेगसम्भ्रमौ । दूंषये इति दोषो णावित्त्यूत्वे रूपम् ॥२९ ॥

**अनुवाद**—हे स्वामी ! यह जो (मेरा त्याग रूप) अपराध है । इसे मैं दूसरे (कलि) के द्वारा किया गया मानती हूं । इसलिये इसके कारण के रूप में तुम्हें नहीं सोचती । इस दुःख में दोषी के रूप में तुम्हारी निन्दा नहीं करती ॥२९ ॥

[1] **हृदयौका यस्ते न स्थीयेत तथैव पावकायस्तेन ।**
**यावत् कायस्ते न त्यज्येत स्वहृदि चाधिकायस्तेन ॥३० ॥**

**अन्वयः**—हे इन ! हे स्वहृदि अधिकायस्त ! यः ते हृदयौकाः तेन यावत् ते कायः न त्यजेत् (तावत्) तथैव पावकायः स्थीयेत ॥३० ॥

**अन्वयदीपिका**—हृदीति-हे इन ! स्वामिन् ! हे अधिकायस्त ! अधिका अयस्ता श्रमो यस्य सः तस्य सम्बोधनम् । हे अधिकश्रम ! कलिः त्वद्धृदयौकाः तेन कलिना यावत् तव कायः शरीरं न त्यज्येत न मुच्येत तावत् ते हृदि तथैव पावकायस्तेन स्थीयेत । ।३० ॥

**यमकबोधिनी**—हृदयौका इति-हे स्तेन ! प्रच्छन्नगमनकारितत्वात् हे चौर ! हे स्वहृदि अधिकायस्त ! अधिकम् आयस्तं खेदो यस्य स अधिकायस्तः निजहृदये कृतायासं मच्चिन्तया इत्यर्थः । हे इन ! स्वामिन् यावत् भवता मम कायः देहः त्यज्येत तावत् तेन कायेन न स्थीयेत । नैकावस्थानं क्रियते । तेन केन ? यः ते तव हृदयौकाः

---

१. हृदयौका यस्तेनः इति 'ग' 'घ' 'ञ' पुस्तकेषु पाठः ।

हृदयमेव ओको गृहम् यस्य स तथा। यथा दृष्टान्ते। एव निश्चये। कीदृशेन कायेन? उत्प्रेक्षते पाकायस्तेन अग्नितप्तं लौहं यथा न तिष्ठति किन्तु द्रवीभवति तथा पावके अग्नौ अयो लौहं तस्य भावः तत्ता पावकायस्ता विद्यते यस्य सः तेन पावकायस्तेन इति तृतीयैकवचनान्तं पदम् ॥३० ॥

**दीपिका**—हृदयौका इति-हे अधिकायस्त ! बहुतरायासकारिन् हे इन ! हे स्वामिन् ! यावत् ते तव कायः शरीरं न त्यज्येत कायान्न दूरीभवेत् तावत्तेन कलिनापि स्वहृदि निजमानसे पावकायस्तेनेव अहितदग्धेनेव तथा त्वयैव स्थीयेत। यथा त्वं नानादुःखाग्निदग्धस्तिष्ठसि तथा तेनापि स्थीयेत इत्यर्थः। तेन केन? यः ते हृदयौकाः हृदयस्थः ॥३० ॥

**सुबोधिनी**—हृदयेति-दमयन्ती आत्मानं प्रत्याह। हे स्व ! आत्मन् यावत्कालपर्यन्तं ते त्वया कायः न त्यज्येत न मुच्येत तावत् यस्ते हृदयौका हृदयमोक आश्रयो यस्य ते हृदयवासी नलः तेन नलेन हदि हृदयो अधिकायस्तेन अधिकम् आयस्तेन व्याकुलेन न स्थीयेत। अपि तु स्थातव्यमेव। किमिव? यथैव पावकायः पावकोऽग्नौ अयो लौहिमिव। हे आत्मन्। यावत् त्वम् इमं कायं न जहासि तावद् विरहानलप्रदीप्ते मद्हृदि नलः स्थास्यति यथाग्नौ लौहमेवम्। तस्य मत्प्रियस्य दुःखं भवतीति त्वं शीघ्रं कायं जहीहीति भावः। स्वो ज्ञातावात्मनि। स्थीयेतेति घुमास्थागापाजहातिसां हलीति दीर्घः। पिण्डं कालायसायसी। अयस्तेति आङ्पूर्वकात् यसु प्रयत्ने धातोः क्तः ॥३० ॥

**अनुवाद**—हे स्वामी ! अधिक दुःख से युक्त (नल) जो तुम्हारे हृदय मे घर किये हुये है। वह जब तक शरीर नहीं छोड़ देता (तब तक) तुम्हारे हृदय में तपे हुए लौह पिंड में आग के समान रहेगा ॥३० ॥

**यस्य पदे शं कमितः स्वजनोऽयं प्राप्य जनपदेशं कमितः।**
**अरिवृन्देऽशङ्क मितस्मित स त्वमुपागतोऽसि देशं कमितः ॥३१ ॥**

**अन्वयः**—हे कमितः अरिवन्देऽशङ्क ! मितस्मित ! यस्य पदे अयं स्वजनः शं प्राप्य अशङ्कम् इतः सः त्वम् इतः कं जनपदेशम् उपागतोऽसि ॥३१ ॥

**अन्वयदीपिका**—यस्येति- हे कमितः स्वामिन् ! हे अरिवृन्दे शत्रुसमूहे अशङ्क ! स त्वम् इतः अरण्यात् कं देशं स्थानान्तरम् उपागतोऽसि। सः कः? यस्य ते पदे राज्ये अयं स्वजनः शं सुखम् इतः। कं जनपदेशं राजानम् इतः प्राप्तः इत्यहं न वेद्मि ॥३१ ॥[1]

१. विद्यावती-कं जनपदेशं राजानम् इतः प्राप्तः इति व्याख्या न युज्यते पूर्वम् इत इति पदस्य अन्वयात् पुनरावृत्तेरथ च उपागतोऽसीति पदस्य तथात्वे वैयर्थ्यात्। अतः कं जनपदेशं जनपदस्य ईशं राजानम् उपागतोऽसीत्येव समीचीनम्। मितम् अल्पं स्मितं यस्य सः मितस्मितः तस्य सम्बोधनम्।

**यमकबोधिनी**—यस्येति-हे कमितः ! हे वाञ्छित ! हे अरिवृन्दे अशङ्क ! शत्रसमूहे शङ्कारहित ! हे मितस्मित ! स्तोकहास्य । त्वम् इतः स्थानात् कं देशं विषयम् उपागतोऽसि । सः कः ? यस्य पदे स्थाने अयं स्वजनः मल्लक्षणः शं सुखं प्राप्य कं जनपदेशं देशेश्वरम् इतः प्राप्तः अपितु न कमपीत्यर्थः । अन्यत्र सुखस्याभावात् । यः स्वपदे इति पाठे यो नलः स्वपदे निजस्थाने शं शिवम् इतः । हे कमितः ! यं जनपदेशं राजानं प्राप्य यो जनः कं सुखम् इतः प्राप्तः । इत इत्यस्योभयत्रानुषङ्गः । कं सुखे सलिले शीर्षे इत्यनेकार्थतिलकः ॥३१ ॥

**दीपिका**—यस्य पदे इति—पुनर्दमयन्ती विलपति । यः स्वजनः आत्मप्रजालोकः स्वपदे स्वस्य आत्मनस्तव पदे स्थानभूते जनपदेशे सुखं प्राप्य अशङ्कं निःशङ्कम् इतः स्थितः । सोऽयं कं जनपदेशं राजानम् इतः प्राप्तः । यद्वा हे कमितः ! हे नाथ ! यः स्वजनः । स्वपदे स्वराज्ये शं प्राप्य । वर्तमान इति शेषः । सोऽयं कं जनपदेशं राजानम् इतः । हे अरिवृन्दे अशङ्क शत्रुसमूहे निर्भय ! हे मितस्मित स्वल्पहास ! सः प्रसिद्धः त्वमपि इतो वा कं देशमुपगतोऽसि । एतद्द्वयमपि नाहं जाने ॥३१ ॥

**सुबोधिनी**—यस्येति—अयं स्वजनो बन्धुवर्गः यस्य पदे तव राज्ये यं त्वां जनपदेशं राष्ट्राधिपं प्राप्याधिगम्य शं कल्याणं कं सुखम् इतः प्राप्तवान् । हे कमितः ! कान्त अरिवृन्दे शत्रुसमूहे अशङ्क शङ्कारहित मितस्मित मितपरिहास स त्वम् इतो वनात् कं देशं कां भुवम् उपगतोऽसि गतवानसि । आदौ यं स्वपदेशमिति पाठे शोभनोऽपदिश्यत इति अपदिशो नाम । तादृशं शोभनाख्यं यं जनपदेशं प्राप्य जनः कं सुखम् अयः शुभावहविधिं प्राप्तः । यद्वा स्वपदे स्थाने स्थानान्तरम् । कथं भूतम्? अशम् अकल्याणमित्यर्थः । दमयन्ती विलपन्तीदमाह हे नल ! यं त्वां राज्याधिपं प्राप्यात्मीयलोकः सुखं प्राप्तवान् । स मां दुःखजलधौ मज्जतीमुपेक्ष्य अस्माद् वनात् कं देशं गतवान् । पदं व्यवसितत्राणस्थानलक्ष्म्यङ्घ्रिवस्तुषु । शं सुखे । कमु कान्तौ इत्यस्य क्ते । बन्धुस्वस्वजनाः समाः । स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने ।३१ ॥

**अनुवाद**—हे कान्त ! हे शत्रुसमूह में अङ्क ! मितस्मित ! जिस तुम्हारे राज्य में यह स्वजन कल्याण पाकर शंका रहित हुई थी, वह तुम यहां से किस देश को चले गये ॥३१ ॥

**यद्यशसाऽनुरू रोदः कुहरं यो द्वेष्टुरञ्जसा नुरूरोदः**
**अद्रेः सानु रुरोऽदः किमाप कमितेति च[१] साऽनुरुरोद ॥३२ ॥**

**अन्वयः**—यद्यशसा रोदः कुहरम् अनुरू, यः द्वेष्टुः नुः अञ्जसा उरोदः, रुरो ! (स मे) कमिता किम् अद्रेःअदः सानु आप इति च सा अनुरुरोद ॥३२ ॥

१. क. किमाप दयितो ममेति 'ङ' 'च' पुस्तकयो पाठः । ख. दयितो दुःखं किमापेति 'ग' 'घ' पुस्तकयोः पाठः ।ग कमिता ममेति 'ञ' पुस्तके पाठः ।

**अन्वयदीपिका**—यदिति-च पुन: सा दमयन्ती अनु पश्चात् इति रुरोद विललाप । इति किम्? हे रुरो ! कृष्णमृग ! स मम कमिता कान्तो नल: अद्रे: अद: सानु शिखरं किम् आप प्राप । स: क: ? यद्यशस: सकाशात् रोद:[१] कुहरम् अनुरु न ऊरू: इत्यनूरू: । पुन: स: क: ? य: नल: द्वेष्टु: नु: नरस्य अञ्जसा साकल्येन उरोद: उर: हृदयं द्यति खण्डयति इति उरोद: ॥३२ ॥

**यमकबोधिनी**—यद्यशसेति-सा दमयन्ती दु:खं यथा स्यात् तथा अनुरुरोद अनुरोदति स्म । हे अद्रे: सानु । हे गिरिशिखर ! हे पर्वताग्र ! हे रुरो ! स मे प्रिय: अद: सानु शिखरं प्रति किं दु:खम् आप । दयितं विशिनष्टि । यद्यशसा यत्कीर्त्या कृत्वा रोद: कुहरं द्यावाभूम्योरन्तरम् अनुरु न उरु: अनुरू: अविस्तीर्णम् स्वल्पम् । नलकीर्ते: रोद: कुहरातिव्यापित्वात् । पुन:यो नु: पुरुषस्य अञ्जसा सुखेन उरोद: उरं ददातीति उरोद: वक्षप्रद: । किं कर्तुम्? द्वेषम् अकर्तु य: प्रीत्या पुरुषान् मिलतीत्यर्थ: । उरसो दानं खण्डनं यस्येति तथा उरोद: उरो द्यति खण्डयति इति उरोद: ॥३२ ॥

**दीपिका**—यद्यशस इति-हे रुरो ! हे कृष्णमृग ! मम कमिता भर्ता अद्रे: पर्वतस्य अद: सानु किमाप प्राप इति सा दमयन्ती अनुरुरोद विललाप । यद्यशसा यत्कीर्त्या रोद: कुहरं द्यावापृथिव्योरन्तरम् अनुरु स्वल्पमित्यर्थ: । पुन: स: क: ? य: द्वेष्टु: द्वेषकर्तु: नु: पुंस:; अञ्जसा शीघ्रम् उरोद: हृदयखण्डक: ॥३२ ॥

**सुबोधिनी**—यदिति-हे रुरो ! चित्रमृग ! यद्यशसा यस्य कीर्त्या कुहरं द्यावाभूम्यन्तरम् एकोक्त्या रोद: शब्द: शान्त: । स्वर्गभूम्यो: कुहरं विवरम् अविपुलम् अल्पं कृतम् । तत्र न मातीति भाव: यश्च द्वेष्टु: द्वेषं कुर्वतो नु: पुरुषस्य अञ्जसा झटिति उरोद: उरो वक्ष: द्यति खण्डयति इति तादृक् । द्विषद्वक्षोविदारणशरवर्षीत्यर्थ: । स मम दयितो वल्लभ: नलोऽदोऽद्रे: सानु गिरे: समभूभागं किम् आप प्राप्तवान् । इत्युक्त्वा अनुरुरोद पश्चादनुरोदत् । वने दमयन्ती मृगं पृच्छति वने चरन्तम् । क्षीण: यत्कीर्त्या द्यावाभूमिपूरिते । यश्च द्विषद्वनदावानल: किं गिरिसानुं प्राप्तवान्? इत्युक्त्वा रुरोद । वड्रोरुविपुलं द्यावाभूमी च रोदसी । पूरुषा: पुरुषा: नर: । स्नु: प्रस्थ: सानुरस्त्रियाम् । उरोद इति उरो द्यतीति दोऽवखण्डने धातोरातोऽनुपसर्गे इति क: । कृष्णसाररुरुन्यङ्कुरङ्कुशं वररौहिषा: । आपेत्यापेर्लिटि । पश्चात् सादृश्ययोरनु रुरोदेति रुदिर् अश्रुविमोचने इत्यस्य लिटि ॥३२ ॥

**अनुवाद**—जिसके यश से स्वर्ग और पृथ्वी का अंतर छोटा है, जो शत्रु पुरुष के हृदय को शीघ्र ही फाड़ देता है, हे कृष्णमृग ! (वह मेरा) प्रिय क्या इस पर्वत चोटी में गया है । इस प्रकार (कहकर) वह बार बार रोई ॥३२ ॥

१. विद्यावती-रोद: स्यादपि रोदसीति विश्व: । द्यावाभूमीत्यर्थ: ।

**श्रय कलनामाऽऽनन्तेत्ययं जनः ददति चाङ्गना मानं ते ।**

**हार्देनाऽमानन्ते जनमेनमशोक कुरु सनामानं ते ॥३३ ॥**

**अन्वयः**—हे अशोक ! अङ्गनाः ते मानं ददति । अयं जनः च ते अन्ते हार्देन अमान् इति आनन्त । कलनाम् श्रय एनं जनं सनामानं कुरु ॥३३ ॥

**अन्वयदीपिका**—श्रयेति-अशोकं दृष्ट्वा आह हे अशोक ! त्वमेनं मल्लक्षणं जनं ते तव सनामानं समानं नाम यस्य तादृशम् अशोकं कुरु । च अपरम् अङ्गनाः ते तव मानं दधति । अन्ते समीपे अयं जनः हार्देन स्नेहेन अमान । मातीति मान न मान इत्यमान् । कलनां चित्तवृत्तिम् आनन्त आश्रय ॥३३ ॥

**यमकबोधिनी**—श्रयेति-हे अशोक वृक्ष ! नामेति प्रसिद्धौ त्वम् एनां मल्लक्षणं जनं ते तव सनामानं कुरु । समानं नाम यस्य सः तम् अर्थाच्छोकरहितं विधेहि । अयं जनो लोकः अनन्त हार्दप्रेम्णि सति इति हेतोः ते तुभ्यम् आनन्त नमस्कर्ता । इति किम् ? हे अशोक ! त्वं कलनां दयां श्रय । च पुनः अङ्गनाः कामिन्यः ते इति क्रियया यमभिप्रैति इति चतुर्थी । प्रेमाना प्रियता हार्दमित्यमरः । अथवा हार्देन प्रेम्णा मानं ददतीति योज्यम् । किं लक्षणं जनम् ? अमान् मानरहितम् । अन्यत्तथैव । परिमाणे च पूजायां मानोऽहङ्कारणेऽपि चेति कोषात् ॥३३ ॥

**दीपिका**—श्रयेति - अयं मल्लक्षणः जनः आनन्त प्रणतिमान् च पुनः अन्या अङ्गनाः ते तुभ्यं मानं सन्मानं दधति विभ्रन्ति । कलनां दयायुक्तां बुद्धिवृत्तिं श्रय । हे अशोक ! एनं मल्लक्षणं जनं ते तव सनामानं समानाभिधं कुरु । अशोकं कुर्वित्यर्थः । अङ्गनासु प्रत्युपकारमाचरेत्यर्थः । किम्भूतोऽयं जनः ? अन्ते समीपे हार्देन अमान । मातीति मान् न मान् इत्यस्मान् । अपरिमितश्रेय इत्यर्थः ॥३३ ॥

**सुबोधिनी**—श्रयेति-दमयन्त्यशोकमुपगम्याह हे अशोकवृक्ष । अयं जनो मल्लक्षणो जनः आनन्त प्रणमतीति । कलनां बुद्धिं पूजां वा आश्रय ग्रहाण अङ्गनाः स्त्रियश्च ते तव मानं पूजां दोहदं वा ददति ददते । स्त्रीस्पर्शात् तव पुष्पोत्पत्तिरिति भावः । नाम सम्भावनायाम् । अतोऽनन्ते हार्दे प्रेम्णि सति एनं जनं ते तव सनामानं स्वनामाख्यमशोकं शोकरहितं कुरु । हृदः कर्म हार्दम् । हायनान्तयुवादिभ्योऽण् इत्यण् । हे अशोक त्वां नौमि । मामपि शोकरहितां कुर्विति भावः ॥३३ ॥

**अनुवाद**—हे अशोक वृक्ष ! स्त्रियां तुम्हारी पूजा करती हैं यह जन (दमयन्ती) तुम्हे हृदय से मानती है अर्थात् प्रणाम करती है । अतः दया करो । इस जन को अपने समान नाम वाली (शोक रहित) कर दो ॥३३ ॥

**उच्चशिरोदारावालप्येति वने सुबन्धुरोदारा[१] वा ।**

**[२]गतिमकरोदाऽऽराऽवा रुक्षं सा मरुतलमथ सरोदारावा ॥३४ ॥**

---

१. अतिबन्धुरोदारेति 'ञ' पुस्तके पाठः ।

२. द्रुतिमकरोदिति 'ञ' पुस्तके ।

**अन्वयः**—सुबन्धुरा उदारा (सा) सरोदारावा उच्चशिरोदारौ वने इति आलप्य गतिम् अकरोत्। अथ अवाः रुक्षं मरुतलं आर ॥३४ ॥

**अन्वयदीपिका**—उच्चेति-सरोदारावा सरोदः आरावो यस्याः सा दमयन्ती उच्चशिरोदारौ उच्चानि शिरांसि एषां तादृशा दारवो देवदारवो यस्मिन् तादृशे वने इति पूर्वोक्तप्रकारेण आलप्य गतिम् अकरोत्। अथानन्तरम् अवाः वारिरहितं रुक्षं मरुस्थलम् आर प्राप। कीदृशी सा? सुबन्धुरा उदारा दानशीला। वा शब्दश्चार्थे ॥३४ ॥

**यमकबोधिनी**—उच्चेति-अथानन्तरं दमयन्ती द्रुतं गमनम् अकरोत् चकार। वेत्यव्यं समुच्चये। पुनर्मरुतलमार प्राप। किं लक्षणम् मरुतलम्? अवाः न विद्यते वाः उदकं यत्र तत् तथा। किं कृत्वा? अचले उच्च शिरोदारौ उच्चानि च तानि शिरांसि च तेषां तादृशानि दारूणि यत्र तथा तस्मिन् उच्चाग्रकाष्ठे उच्चशिरोदारौ। शिरोऽग्रं शिखरं वा चेत्यमरः। किं लक्षणा सा दमयन्ती? सुवंशकरोद्वरा[1] सुबन्धुरोदारा सुन्दरा चासौ उदारा च सुबन्धुरोदारा। बन्धुरा सुन्दरे नम्रे इत्यमरः? पुनः किं लक्षणा सरोदारावा सह रोदेन वर्तमानः सरोदः सः आरावो यस्याः सा सरोदारावा ॥३४ ॥

**दीपिका**—उच्चशिर-इति सा दमयन्ती द्रुतिं गतिम् अकरोत्। च पुनः मरुस्थलम् आर प्राप। किं कृत्वा? वने अचले पर्वते इत्युक्तप्रकारेण आलप्य। किम्भूते अचले? उच्चशिरोदारौ उच्चानि शिरांसि येषां तादृशा एव दारवो यस्मिन्। किम्भूता सा? सुबन्धुरा परममनोहरा। पुनः किम्भूता सा? उदारा उद्भटचरिता। पुनः किम्भूता सा? सरोदारावा रोदनशब्दसहिता। किम्भूतं मरुतलम्? अवाः न विद्यते वाः जलं यस्मिन् तत्। पुनः किम्भूतं मरुतलम्? रुक्षं निष्ठुरप्रायम् ॥३४ ॥

**सुबोधिनी**—उच्चेति-सुबन्धुरा अत्यन्तसुन्दरी उदारा वा अवा गतिर्यस्यास्तादृशी दमयन्ती उच्चशिरोदारौ उच्चशिरसो दारवो देवदारुद्रुमा यस्मिंस्तादृशे वने इति पूर्वोक्तमालाप्याभाष्य विलप्य द्रुतिं वेगम् अकरोत्। गतिं वा। यद्वा उच्चशिरा उच्चाग्निर्वा उदारा वा उत् उद्धर्वम् आरावः शब्दो यस्याः सा उच्चस्वरा उच्चैः विलप्येति यावत्। यद्वा एवार्थो वा शब्दः। उदारा दक्षिणा। उदारो दातृमहतोर्दक्षिणेऽप्यभिधेयवत् इति मेदिनीकारः। अस्ति चादन्तोऽपि शिरशब्दः पिण्डं दद्याद् गयाशिरे इति दर्शनात् इत्यर्थः। अथ वेगकरणानन्तरं सरोदारावा रोदनशब्दसहिता रुदती रुक्षं शुष्कम् अवाः जलहीनं न विद्यते जलं यस्मिन् तादृशं मरुतलं मरुदेशम् आर गतवती। क्वचिदतिसुन्दरे वने विलप्य दमयन्ती मरुदेशं गतवती रुदतीति भावः। दारुशब्दस्य वृक्षे वृक्षत्वप्रवृत्तिनिमित्तत्वाद् भाषितपुंस्कत्वेन तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्येति पुवंद्भावात् घेरात्वादि।

---

१. नैतादृशः पाठोऽस्ति मूले।

वृक्षत्वप्रवृत्तिनिमित्तत्वे चास्य पुंस्त्वाश्रयणात्। भद्रदारुद्रुकिलिमं पीतदारु च दारु चेत्यमरः। वा गतिगन्धनयोरित्यस्यावेति। वा समुच्चये एवार्थे इति हैमः। ऋ गतावित्यस्य आरेति ॥३४॥

**अनुवाद**—वह सुन्दरी दमयंती बड़े बड़े देवदारुओं से युक्त वन में पूर्वोक्त प्रकार से रो रोकर दौड़ी और जलरहित सूखे मरुस्थल मे पहुंची ॥३४॥

**मृगकुलमारव्याधिप्रचुरं विभ्रद्वनं[१] समारव्याधि।**
**वीथ्या मारव्याऽधिष्ठितभुजगं भीमजेयमार व्याधि ॥३५॥**

**अन्वयः**—समारव्याधि इयं भीमजा मारव्या वीथ्या आरव्याधिप्रचुरम् अधिष्ठितभुजगं मृगकुलं विभ्रद् व्याधि वनम् आर ॥३५॥

**अन्वयदीपिका**—मृगेति-इयं भीमजा मारव्या मरोरियं मारवी तया वीथ्या मारवेण प्रचुरं बहुलं मृगकुलं विभ्रद् वनम् आर प्राप। कीदृशी भीमजा? समारव्याधि कामव्याधि-सहिता[२]। कीदृशं वनम्? आरव्याधि आ समन्तात् रवेः सूर्यात् आधिः पीडा यत्र तत् पुनः किं विधम्? अधिष्ठितभुजगम्। पुनः किं विधम्? व्याधि विविधाः आधयो यस्मिन् तत् ॥३५॥

**यमकबोधिनी**—मृगकुलमिति-च पुनः इयं दमयन्ती भीमजा मारव्या वीथ्या कृत्वा वनम् आर प्राप। अरण्यं प्रापेत्यर्थः। मरोरियं मारवी तया। किं लक्षणं वनम्? मृगकुलमारवि मृगाणां कुलानि मृतानि मारयन्तीति वा। मृगकुलं माराः ते वयः पक्षिणो यत्र तत् मृगकुलमारवि। कीदृशी सा? आधिप्रचुरा आधिना प्रचुरा। पुनः किं लक्षणं वनम्? भानुमत् सूर्यमत्। पुनः किं लक्षणा भीमजा? समारव्याधि। पुनः कीदृशं वनम्? अधिष्ठितभुजगम् भुजङ्गैरधिष्ठितम्। भुजङ्गा यत्र तत्। पुनः कीदृशं वनम्? व्याधिः आ सर्वतो व्याधिर्व्यसनं यत्र तत् व्याधिः ॥३५॥

**दीपिका**—मृगकुलमिति-इयं भीमजा दमयन्ती मारव्या वीथ्या मरुसम्बन्धिन्या वीथ्या वनं विपिनम् आर प्राप। किम्भूतं वनम्? मृगाणां कुः भूमिः तां स्वसघनछायाभिः लाति रक्षतीति तत्। पुनः किम्भूतं वनम्? भीमं भयानकम्। पुनः किम्भूतं वनम्? अधिष्ठितभुजगमाश्रितोरगम्। पुनः किम्भूतं वनम्? व्याधि व्याधाः विद्यन्ते यस्मिन् तत्। किम्भूतेयमार? व्याधिप्रचुरा आ समन्तात् रवेः सूर्यस्य आधिप्रचुरा पीडा बहुला सूर्यकिरणसन्तप्ता इत्यर्थः। पुनः किम्भूतेयम्? समारव्याधि? सकामव्यथा ॥३५॥

---

१. भानुमदिति 'ग' पुस्तके पाठः

२. विद्यावती-समारव्याधि इति पदस्य दमयन्त्या विशेषणत्वेन कामव्याधि सहितेति व्याख्या नेहौचित्यं भजते विपत्तौ तथात्ववासम्भवात्। अतो नेदं दमयन्त्या विशेषणमपितु मृगकुलमित्यस्य। तथात्वे समारव्याधि मृगकुलं विभ्रद् वनम् आर इत्यन्वयः।

**सुबोधिनी**—मृगेति-इयं भीमजा दमयन्ती मारव्या मरोरियं मारवी तया वीथ्या मार्गेण समारव्याधि: मारस्य कामस्य व्याधि: मारव्याधि: तत्सहितम् । मारवि सशब्दम् । यद्वा आरवि आरा: इतस्ततो जङ्गमा वय: पक्षिणो यत्र तत् । आधिप्रचुरं मानसीव्यथाबहुलम् । मृगकुलं विभ्रद् धारयद्वनम् आर गतवती । कीदृशं वनम् ? व्याधि व्याधो लुब्धकस्तत्सहितम् । अधिष्ठितभुजगम् अधिष्ठिता: भुजगा: सर्पा: यस्मिन् तत् । समारव्याधिरिति सविसर्गपाठे दमयन्तीविशेषणम् पुंस्याधिर्मानसी व्यथा । स्त्री रुक् रुजा चोपतापरोगव्याधिगदामया: । आरेति । ऋ गतावित्यस्य लिटि । वीथ्यालिरवलि: पङ्क्ति: । श्रेणीलेखास्तु राजय: वीथी पदव्यपीत्यमर: ॥३५ ॥[१]

अनुवाद—पति के द्वारा किये गये अपने परित्याग रूपी विघ्न के दु:ख से वह दु:खी दमयंती मरुस्थल की गलियों से होती हुई सूर्य (के आतप) से उत्पन्न पीड़ा से पीड़ित सर्पों के अधिष्ठान और मृगसमूह को व्याधि देनेवाले वन में पहुंची ॥३५ ॥

**[२] सास्त्रवनासारा सावेगमना भीमनन्दना[३] साऽरासा ।**

**सुनयननासाऽऽराऽसावजगरमग्रासि चाऽमुनाऽसारा सा ॥३६ ॥**

**अन्वय:**—सास्त्रवनासारा सावेगमना: सुनयननासा अरासा सा भीमनन्दना अजगरम् आर । अमुना च असौ असारा अग्रासि ॥३६ ॥

**अन्वयदीपिका**—सेति -सा भीमनन्दना तत्र वने अजगरम् आर प्राप । च पुन: अमुना अजगरेण असौ अग्रासि । कथं भूता सा ? सास्त्रवनासारा अस्त्रवनस्य अश्रुजलस्य सारस्तत् सहिता । पुन: किं विधा ? सावेगमना सोद्वेगा इत्यर्थ: । पुन: किं विधा ? सुनयन-नासा । (पुन: किं विधा ? असारा । असौ अजगरमुपगता सा दमन्ती[४]) ॥३६ ॥

**यमकबोधिनी**—सेति -सा भीमनन्दिनी दमयन्ती अजगरं वाहसम् आर प्राप । किं लक्षणा सा ? साश्रुवनासारा अश्रुणो वनं जलं तस्य आसार: तेन सह वर्तमाना ।

---

१. विद्यावती-पद्ये प्रयुक्तस्य समारव्याधिरिति पदस्य सकामव्याधि: सा दमयन्तीत्येवार्थो विहित: सर्वत्र, तन्न प्रसङ्गविरोधात् । एतादृक्त्वे नहि कामपीडाया वर्णनावसर: ।अतो मारस्य विघ्नस्य व्याधि: इति मारव्याधिस्तेन सहिता समारव्याधि:। यद्वा मार एव तत्परित्यागरूपविघ्न एव व्याधिरिति मारव्याधिस्तेन सहिता । मारोऽनङ्गे मृतौ विघ्ने इति हैम: । एवमेव श्लोके विभ्रदिति पदस्यापि न सार्थकत्वम् । शोभाया भयानुत्पत्ते: तस्याश्चेहाप्रसङ्गात् ।

२. साश्र इति क ग घ ङ पुस्तकेषु ।

३. भीमनन्दनी इति ग पुस्तके ।

४. क. कोष्ठकान्त:पाति वाक्यं सम्पादकस्य । ख. विद्यावती-क्रमेऽस्मिन् नैकानि पदान्यव्याख्यातानि टीकाकृता लेखकप्रमादात् वाऽनुल्लिखितानि । सुनयननासा नयनं च नासा च नयननासं शोभनं नयननासं यस्या: सा सुनयननासा । अरासा रास: क्रीडा तद् रहिता । असारा साररहिता दुर्बला इत्यर्थ:। इत्येतादृशी सा अजगरमुपगता दमयन्ती तेन बलशालिना अजगरेण अग्रासि ग्रासीकृतेत्यर्थ: ।

अश्रुजलधारापातसहिता । पुनः किं लक्षणा सा ? सावेगमना सावेगं ससम्भ्रमं दुःखं वा मनो यस्याः सा तथा । पुनः किं लक्षणा सा ? सारासा आरसनम् आरासस्तेन शब्देन सह वर्तमाना सारासा । पुनः किं लक्षणा ? सुनयननासा नयनं च नासा च तेषां समाहारो नयननासं सुष्ठु शोभनं नयननासं यस्याः सा । शोभननेत्रनासिका । च पुनः असौ दमयन्ती अमुना अजगरेण अग्रासि ग्रस्ता । किं लक्षणा सा ? सारा श्रेष्ठा ॥३६ ॥

**दीपिका**—साश्रुवनेति-सा असौ भीमनन्दिनी अजगरं नागविशेषम् आर प्राप । च पुनः अमुना अग्रासि ग्रस्ता । किम्भूता ? सावेगमना सोद्वेगचित्ता । पुनः किम्भूता ? असारा अबला । पुनः किम्भूता सा ? साश्रुवनासारा अश्रुजलवेगवर्षेण सह वर्तमाना । पुनः किम्भूता सा ? सुनयननासा मनोहरनेत्रनासिका ॥३६ ॥

**सुबोधिनी**—सास्रेति—साश्रुवनासारा अश्रुवनम् अश्रुजलं तस्य सारो वेगवर्षणा तत्सहिता । सावेगमना आवेग उद्वेगः तत्सहितं मनो यस्याः तादृशी सारासा । आरसो रोदनरवस्तत्सहिता । यद्वा आसारा सा आसारः अस्थिरः आस उपवेशनं स्थितिर्वा यस्याः सा भावे घञ् । असौ भीमन्दना दमयन्ती अजगरं सर्पम् आर प्राप्तवती । अमुना चाजगरेण सारा श्रेष्ठा सा दमयन्ती अग्रासि ग्रस्ता । कीदृशी ? सुनयनासा ? नयनं च नासा च नयननासं शोभनं नयननासं यस्याःसा तादृशी सुनेत्रनासिकेति यावत् । दमयन्ती अजगरम् अद्राक्षीत् तेन चाजगरेण सुमुखी कवलिता इति भावः । वनं सलिलकानने । आसारो वेगवर्षणम् । नन्दिग्रहिपचादिभ्यो ल्युणिन्यच इति ल्यौ नन्दनेति । द्वन्द्वश्च प्राणितूर्यसेनाङ्गानामिति नयननासपित्येकवद्भावः । आरेति ऋगतावित्यस्य लिटि । अजगरे शयुर्वाहस इत्युभौ । ग्रसु ग्लसु अदने लुङि चिणि अग्रासीति । अश्रुनेत्राम्बुरोदं वास्रमश्रु च । सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु ॥३६ ॥

**अनुवाद**—बहते हुए आंसुओं से युक्त, दुःखी मन वाली, सुन्दर आंख और नासिका वाली, क्रीडा से रहित उस भीम पुत्री (दमयंती) को अजगर मिला और इसने उस दुर्बला को ग्रसित कर लिया ॥३६ ॥

**अथ शबरो हास्यन्तं स्वासूंस्तदसूंश्च रिपुतरोहाऽस्यन्तम् ।**

**[१]तमधिरुरोहाऽस्यन्तं न्यस्य तदास्येऽकरोत् स्वरो[२] हास्यन्तम् ॥३७ ॥**

**अन्वय**—अथ रिपुतरोहा हासी स्वरः शबरः स्वासून् हास्यन्तं तदसून् च अस्यन्तं तम् अधिरुरोह । तदास्ये अस्यन्तं च न्यस्य अन्तं अकरोत् ॥३७ ॥

---

१. समधिरूरोहेति च पुस्तके पाठः ।

२. खरो हास्यन्तम् इति 'ञ' पुस्तके पाठः ।

**अन्वयदीपिका**—अथेति -दमयन्तीग्रसनानन्तरं शबरः कश्चिद् भिल्लः तम् (अधिरुरोह)[१] आरूरोह । च पुनः तदास्ये तन्मुखे अस्यन्तं खड्गग्रं न्यस्य अन्तं नाशम् अकरोत् अकृत । कथं भूतं तम् ? तदसून् दमयन्तीप्राणान् अस्यन्तं क्षिपन्तम् । पुनः किं विधम् ? स्वासून्हास्यन्तं त्यजन्तम् । कथं भूतः शबरः ? रिपुतरोहा रिपोः तरः वेगः तत् हन्तीति तथा । पुनः कथं भूतः ? स्वरः स्वरतीति स्वरः स्वर शब्दे अस्य धातोः प्रयोगः । पुनः कथं भूतः शबरः ? हासी हास्यवान् सहास इत्यर्थः ॥३७ ॥

**यमकबोधिनी**—अथेति अथानन्तरं शबरः कश्चिद् भिल्लः तम् अजगरम् अधिरुरोह आरोहति स्म । किं करिष्यन्तम् ? स्वासून् निजप्राणान् हास्यन्तं त्यक्ष्यन्तम् ओहाक् त्यागे इति धातोः रूपम् । च पुनस्तदसून् तस्याः दमयन्त्याः असून् प्राणान् हा इति खेदे स्यन्तं नाशयन्तम् । षोऽन्तकर्मणि इति धातो रूपम् । किं लक्षणः शबरः ? रिपुतरोहा रिपूणां तरो वेगस्तत् हन्तीति रिपुतरोहा शत्रुवेगघाती । तत्रार्थे तदसून् अस्यन्तं क्षिपन्तम् । असु क्षेपणे इति धातोः रूपम् । च पुनः परः किरातः तदास्ये अजगरमुखे अस्यन्तं खड्गप्रान्तं न्यस्य निक्षिप्य अन्तम् अजगरनाशम् अकरोत् करोति स्म । चकारस्यानुषङ्गः । पुनः किम्भूतः शबरः ? हासी हासयुक्तः ॥३६ ॥

**दीपिका**—अथ शबर इति-अथानन्तरं कश्चित् शबरो भिल्लः तम् अजगरम् अधिरुरोह चरणेन आक्रामति स्म । च पुनः तदास्ये अस्यन्तं खड्गाग्रं न्यस्य स्थापयित्वा अन्तं नाशम् अकरोत् चकार । किम्भूतं तम् ? स्वासून् निजप्राणान् हास्यन्तं त्यक्ष्यन्तम् । पुनः किम्भूतः शबरः ? रिपुतरोहा शत्रुवेगहन्ता । पुनः किम्भूतः ? हासी हासो यस्यास्तीति हासी । यद्वा स्वरोहासीत्येकं पदम् । स्वस्य शब्दस्य ऊहस्तर्कः तेन आसः शस्त्रक्षेपणं यस्यासौ स्वरोहासी शब्दवेधक इत्यर्थः ॥३६ ॥

**सुबोधिनी**—अथेति-अथाजगरग्रसनानन्तरं रिपुतरोहा रिपूणां तरो बलं हन्तीति रिपुतरोहा शत्रुबलघातकः शबरः किरातः स्वासून् स्वप्राणान् हास्यन्तं जिघांसन्तं तदसून् तस्या दमयन्त्याः असून् प्राणान् स्यन्तं विनाशयन्तम् अजगरं समधिरुरोह रूढवान् । तं हास्यं हासयोग्यम् अकरोत् अकार्षीत् । किं कृत्वा ? तदास्ये तस्याजगरस्यास्ये मुखे अस्यन्तं खड्गाग्रं न्यस्य निक्षिप्य । शबरः किम्भूतः ? [२]खरस्तीक्ष्णस्वभावः शबरो दमयन्तीप्राणान्विनाशयिष्यन्तं तमजगरं खड्गाग्रभिन्नमुखममारयदित्यर्थः रिपुतरोहेति ब्रह्मभ्रूणवृत्रेषु क्विबिति सूत्रेण ब्रह्मादिष्वेव हन्तेः प्रयोगाच्चिन्त्यमिदम् । यद्वा शबरः कथं भूतः ? रिपुतरः हा इति कृत्वा । हा विषादे च शोके च

---

१. अधिरुरोहेति सम्पादकस्य । विद्यावती-इह 'रिपुतरोहा' इत्यन्वयदीपिकाद्यनुसारमस्माभिः एकपदत्वेन पठितम् । किन्तु न तथा साधु तथात्वे ब्रह्मभ्रूणवृत्रेषु क्विप् (पा सू.३—२—८७) इत्यनेन हन्तेः क्विबनुपपत्तेः । अतः रिपुतरो हाऽस्यन्तम् इत्येव पाठोऽङ्गीकरणीयः । रिपुतरः सः हा इति शब्दं कृत्वा तमधिरुरोह इत्यर्थः । अन्यत्र रिपुतरोहा इति रूपेण व्याख्यातं चिन्त्यम् ।

२. खर इति पाठो नास्ति मूले ।

कुत्सादुःखार्थयोरपीति मेदिनी। हास्यन्तमिति आहोक् त्यागेऽतो लृटः शद्वेति। पुंसि भूम्न्यसवः प्राणाः। तरसो बलरंहसी। षोऽन्तः कर्मणीत्यस्य स्यन्तमिति। समधिरूरोहेति लिटि। हास्यमिति तदर्हतीति यः ॥३७॥

**अनुवाद**—तत्पश्चात् शत्रुओं के वेग को नष्ट कर दने वाला हासयुक्त तथा स्वर करने वाला वह भील अपने प्राणों को त्याग रहे तथा दमयन्ती के प्राणों को नष्ट कर रहे उस अजगर पर चढ़ गया और उसके मुख में तलवार के अग्रभाग को रख कर मार डाला ॥३७॥

**तां पुनरेकामयतः कृशां किरातः स्मरातिरेकामयतः।**
**कान्तारेऽकामयत स्त्रियं न काङ्क्षेदुपह्वरे कामयतः ॥३८॥**

**अन्वयः**—पुनः (सः) किरातः कान्तारे अयतः कृशां तां स्मरातिरेकामयतः अकामयत। अयतः उपह्वरे कां स्त्रियं न काङ्क्षेत् ॥३८॥

**अन्वयदीपिका**—तामिति—पुनः किरातः भिल्लः कान्तारे तां दमयन्तीं स्मरातिरेकामयतः स्मरस्य अतिरेकः आधिक्यं स एव आमयो व्याधिस्तस्माद् हेतोः अकामयत। स्त्रीत्वेन इयेष। कथं भूताम्? अयतः भाग्यतः कृशां दुर्बलां भाग्याहितामित्यर्थः। अयतः अजितेन्द्रियः पुमान् उपह्वरे एकान्ते कां स्त्रियं न काङ्क्षेत् न इच्छेत् ॥३८॥

**यमकबोधिनी**—तामिति-किरातो भिल्लः कान्तारे महारण्ये तां दमयन्तीम् अकामयत कामयते स्म।पुनरित्यस्य पूर्वश्लोकेन सम्बन्धः। कस्मात्? स्मरातिरेकामयतः स्मरः कामः तस्यातिरेकः आधिक्यं तदेव आमयो रोगस्तस्मात्। किं लक्षणां ताम्? एकाम् एकाकिनीम्। पुनः किं लक्षणाम्? अयतः कृशां शुभावहविधेः गमनाद्वा दुर्बलाम्। अयतः अजितेन्द्रियः अदान्तपुमान् उपह्वरे एकान्ते निकटे वा कां स्त्रियं न काङ्क्षेत्। अपितु सर्वामप्यभिलषेत्। किं पुनस्तादृशीम्। कामयतः कामबद्धः कः स्त्रियं न काङ्क्षेदिति वा। महारण्ये दुर्गपथे कान्तारः पुन्पुंसके इत्यमरः। रहोऽन्तिकमुपह्वरे इति च ॥३८॥

**दीपिका**—तां पुनरिति-पुनः किरातः शबरः कान्तारे वने एकाम् एकाकिनीं तां दमयन्तीं स्मरातिरेकामयतः स्मरातिरेक एव कामाधिक्यमेव आमयो रोगः तस्मात् स्त्रियं निजगृहिणीम् अकामयत इयेष।अयतः अजितेन्द्रियः पुमान् उपह्वरे एकान्ते कां न काङ्क्षेदपितु सर्वां स्त्रियं वाञ्छेदित्यर्थः। किम्भूतां ताम्? अयतः दैवात् कृशां दुर्बलाम् ॥३८॥

**सुबोधिनी**—तामिति-तां दमयन्तीमेकामेकाकिनीं सहायरहितां दुर्बलामित्यर्थः अयतः सुभदैवात् कृशां तनुं दैववशात्। स्मरातिरेकामयतः स्मरस्य कन्दर्पस्य अतिरेकः आधिक्यं स एव आमयो व्याधिस्तस्मात् कन्दर्पाधिक्यव्याधेर्हेतोः किरातः कान्तारे महावने अकामयत अचीकमत। स्त्रीत्वेनेति शेषः। त्वं मम भार्या भवेति कामनामकरोदिति भावः। अत्र हेतुमाह कामयतः कामेन यतः संयतः कामातुरः

उपह्वरे रहसि स्त्रियं न काङ्क्षेन्नेच्छेत् । काक्वर्थे नञ् । अपितु काङ्क्षेदेव । उपह्वरं रहसि सन्निधाविति चन्द्रः ॥३८ ॥

**अनुवाद**—फिर (उस) किरात ने भाग्य से दुर्बल उस (दमयंती) को कामाधिक्य के कारण (अपनी)स्त्री की तरह व्यवहार में लाना चाहा । अजितेन्द्रिय एकान्त में किस स्त्री को नहीं चाहता ॥३८ ॥

**[१] धृतवनमह्यन्तेन त्रातासि मया ननु त्वमह्यन्तेन ।**

**मानिनि मह्यन्तेन प्रसीद शरणागताः क्व मह्यन्ते न ॥३९ ॥**

**अन्वयः—** हे मानिनि ! धृतवनमह्यन्तेन मया त्वम् अह्यन्तेन त्रातासि । तेन मह्यं प्रसीद । ननु शरणागताः क्व न मह्यन्ते ? ॥३९ ॥

**अन्वयदीपिका**—धृतेति-हे मानिनि ! धृतवनमह्यन्तेन धृतः वनमह्या वनभूमेः अन्तो येन तेन । तथा अह्यन्तेन अहेः सर्पस्य अन्तः अह्यन्तः तेन मया त्वं त्रातासि रक्षितासि । तेन हेतुना त्वं मह्यं प्रसीद प्रसन्ना भव । रतिं देहीत्यर्थः ।नु अवधारणे । शरणागताः क्व कस्मिन् देशे न मह्यन्ते ? न पूज्यन्ते अपितु सर्वत्र पूज्यन्ते ॥३९ ॥

**यमकबोधिनी**—अभिलाषप्रकारमाह धृतेति-हे मानिनि । त्वं ते उपकारेण मह्यं प्रसीद प्रसन्ना भव । नन्वित्यनुनये । यतः अह्यन्तेन सर्पनाशेन त्वं मया त्रातासि रक्षितासि । किं लक्षणेन मया ? धृतवनमह्यन्तेन स्वीकृतविपिनभूमिप्रान्तेन धृतवनमह्याः वनभूमेः अन्तः प्रान्तो येन सः तेन । शरणागताः शरणगामिनः पुरुषाः क्व न मह्यन्ते । कुत्र न पूज्यन्ते । अपितु सर्वत्र पूज्यन्ते । मह पूजायाम् । रक्षकत्वात् शरणगामित्वाच्च त्वयाऽहं स्वीकार्यः इति तात्पर्यम् ॥३९ ॥

**दीपिका**—धृतवनेति -शबरः किरातः ननु निश्चयेन हे मानिनि हे दमयन्ति । त्वं मया त्राताऽसि रक्षतासि तेन हेतुना मह्यं मल्लक्षणाय जनाय प्रसीद प्रसन्ना भव । शरणागताः शरणं प्राप्ताः पुरुषाः क्व न मह्यन्ते कुत्र न पूज्यन्ते । अपितु सर्वत्र । किम्भूतेन मया ? धृतवनमह्यन्तेन प्राप्तविपिनावनिमध्येन । पुनः किम्भूतेन मया ? अह्यन्तेन अजगरनाशकेन ॥३९ ॥

**सुबोधिनी**—धृतेति-शबरो भैमीमाह-ननु भोः मानिनि ! दमयन्ति ! धृतवनमह्यन्तेन धृतः श्रितो वनमह्यन्तो वनभूमिप्रान्तं येन तादृशेन अह्यन्तेन सर्पनाशकेन मया त्वं त्रातासि रक्षितासि । तेन हेतुना मह्यं प्रसीद प्रसन्ना भव । शरणायात्मत्राणाय आगताः प्राप्ताः जनाः क्व कुत्र न मह्यन्ते न पूज्यन्ते । हे दमयन्ति । अजगरं विनाश्य मया रक्षितासि । अथ शरणागताय मे प्रसीद । महयन्त इति मह पूजायामित्यस्य कर्मणि लिटि । शरणं गृहरक्षित्रोरित्यमरः । नन्वाक्षेपे परिप्रश्ने प्रयुक्तावधारणे । वाक्यारम्भेऽप्यनुनया-

१. भृतवनेति 'ञ' पुस्तके पाठः ।

मन्त्रणानुज्ञयोरपीति हैमः। अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। अवयवेऽपीति हैमः ॥३९ ॥

**अनुवाद**—हे मानिनि ! वनभूमि के प्रान्तों में विचरण करने वाले मैं ने अजगर का नाश करके तुम्हारी रक्षा की है। इसलिये मुझ पर प्रसन्न होओ। अरे ! शरणागत पुरुष का सम्मान कहाँ नहीं होता ॥३९ ॥

**[१] सुमुखनिशापे ते नः स्मर दासानिति [२] सता वशापेतेन।**

**दत्ते शापे तेन स्थितया सान्त्वे न मृगदृशा[३] पेते न ॥४० ॥**

**अन्वयः**—तेन सान्त्वे स्थितया मृगदृशा शापे दत्ते तेन सता वशापेतेन समुखनिशापे ! नः ते दासान् स्मर इति न पेते (इति) न ॥४० ॥

**अन्वयदीपिका**—सुमुखेति-सान्त्वे स्थितया मृगदृशा दमयन्त्या 'पत' इति शापे दत्ते सति सतीवशापेतेन सतीवशात् अपेतेन (प्रच्युतेन तेन) किरातेन हे सुमुखनिशापे शोभनः मुखनिशापो मुखचन्द्रः यस्याः सा तस्याः सम्बोधनम्। ते तव दासान् नः अस्मान् स्मर इति उक्त्वा न पेते इति न अपितु पेते मृतमित्यर्थः ॥४० ॥

**यमकबोधिनी**—सुमुखेति — मृगदृशा चञ्चलदृशा वा दमयन्त्या शापे दत्ते सति त्वं पतितो भव इति कथिते सति इत्यर्थः। तेन शबरेण न पेते ? किन्तु पेते पतितम्। न इति काकुः। कीदृश्या मृगदृशा ? सान्त्वे स्थितया सामनि स्थितया। त्वं मम पितृतुल्य इत्यादि सामपरयेत्यर्थः। ननु सामपरा दमयन्ती तेन बलात् किं कमिता। परवशत्वादित्याह किं लक्षणेन तेन ? इति सदैव सर्वदा वशापेतेन स्ववशात् अपेतेन अपगतेन कामपरवशेनेत्यर्थः सदैववशापेतेनेति वा। दैवस्यभाग्यस्य वशस्तेन सह वर्तमानः सदैववशः तेन अपेतः तेन। इतीति किम् ? हे समुखनिशापे सुमुखमेव निशापः चन्द्रो यस्याः तस्याः सम्बोधने। हे सुशोभनमुखचन्द्रे त्वं नोऽस्मान् ते दासान् भृत्यान् स्मर चिन्तयेति ॥४० ॥

**दीपिका**—सुमुखनिशापेति— सुमुखचन्द्रे भैमि नः अस्मान् ते तव दासान् स्मर जानीहि। इत्युक्त्वा तेन शबरेण न पेते इति न किन्तु पेते मृतमित्यर्थः। किम्भूतेन तेन ? दैव[४]वशापेतेन विधिवशात् युक्तेन। कस्मिन् सति ? सान्त्वे स्थितया तत्समाधाने वर्तमानया। मृगदृशा दमयन्त्या शापे दत्ते सति पत इति गालिप्रदाने सति ॥४० ॥

**सुबोधिनी**—सुमुखेति - सुमुखनिशापे सुशोभनं मुखं सुमुखं तदेव निशापः चन्द्रः इव यस्याः सा सुमुखनिशापा तस्याः सम्बोधनम्। हे शोभनमुखचन्द्रे तव नोऽस्मान् दासान्

---

१. सुमुखि इति 'च' पुस्तके पाठः।

२. प्रोच्य इति ङ. च पुस्तकयोः। सदैववशापेतेनेति ग घ पुस्तकयोः।

३. चलदृशा इति च 'ञ' पुस्तकयोः ।

४. मूले तु अनेनापि प्रोच्य वशापेतेन इति पाठो दत्तः किन्तु व्याख्यायां भाति ग घ पुस्तकाभ्यां साम्यम्।

स्मर जानीहि। इत्यनेन प्रकारेण प्रोच्य उक्त्वाऽसान्त्वेन क्रोधेन तया चलदृशा चञ्चलाक्ष्या शापे दत्ते वशापेतेन वसा मेदस्तयाऽपेतेन हीनेन सता मदनज्वलनदह्यमानमेदसा तेन शबरेण किन्न पेते? अपितु मूर्च्छितमेव। नञ् काक्वर्थः। क्रुद्धया दमयन्त्या शापे दत्ते शबरो मूर्च्छितोऽभूदिति भावः। सुमुखिविशापेतेनेति पाठे हे शोभनमुखि! ते तव नः अस्मान् दासान् स्मरेति विशापे शापाभावे शापपूर्वमित्यर्थः। प्रोच्य तेन न पतितमिति काकुः। ह्न्मेदस्तु वपा वसा। सामसान्त्वमुभे। पेते इति पततेः कर्मणि लिटि ॥४०॥

**अनुवाद**—उससे क्रुद्ध हुई मृगनयनी (दमयन्ती) के शाप देने पर वह सतीत्व के कारण प्रच्युत (किरात) हे सुन्दर मुख चन्द्र वाली हम तुम्हारे दासों का स्मरण करो (अर्थात् हम पर दया करो) ऐसा कहता हुआ क्या नहीं गिरा? ॥४०॥

**दग्धसरागाहितया दमयन्त्या विपिनभूः पराऽगाहि तया।**
**उच्चतरागाहितया दृष्ट्या घोरा च[1] कन्दरागाहितया ॥४१॥**

**अन्वयः**—उच्चतरागाहितया कन्दरागाहितया दृष्ट्या दग्धसरागाहितया तया दमयन्त्या परा घोरा च विपिनभूः अगाहि ॥४१॥

**अन्वयदीपिका**—दग्धेति— उच्चतरेषु अगेषु वृक्षेषु आहिता दत्ता तया। च पुनः कन्दरायुक्तेषु अगेषु पर्वतेषु आहिता तया दृष्ट्या कृत्वा दग्धसरागाहितया दग्धः सरागः सकामः अहितः शत्रुः किरातो यया तया दमयन्त्या परा घोरा भयङ्करा विपिनभूः वनभूमिः अगाहि अतिवाहितेत्यर्थः ॥४१॥

**यमकबोधिनी**—दग्धेति-तया दमयन्त्या विपिनभूः अगाहि गाह्यते स्म। किं लक्षणया तया? दग्धसरागाहितया दग्धः सरागः रागसहितः अहितः शत्रुः शबरो यया सा तया भस्मीकृतसस्नेहसपत्न्या। च पुनः तया दृष्टया कन्दरा अगाहि। किं लक्षणया दृष्ट्या? उच्चतरागाहितया उच्चतरश्चासौ अगश्च पवृतो वृक्षश्च उच्चतरागः तस्मिन् आहिता स्थापिता तया तथा। अथवा किं लक्षणा भूः? उच्चतरा। किंलक्षणा कन्दरा? अगाहितया घोरा अगस्य पर्वतस्य अहयः सर्पाः अगाहयस्तेषां भावः तत्ता तया भयङ्करा। शैलवृक्षौ नगावगावित्यमरः ॥४१॥

**दीपिका**—दग्धेति—च पुनः तया दमयन्त्या परा विपिनभूः वनभूमिः अगाहि अवगाहिता। किम्भूतया दृष्ट्या? दग्धसरागाहितया भस्मीकृतसकामामित्रया। किम्भूतया दृशा? उच्चतरागाहितया अत्युन्नतनगस्थापितया। किम्भूताभूः? कन्दरागाहितया दरीगतसर्पवत्वेन घोरा भयप्रदा ॥४१॥

**सुबोधिनी**—दग्धेति-दग्धसरागाहितया दग्धः सरागः सकामोऽहितश्शत्रुः शबरो यया सा तादृश्या तया दमयन्त्या अपरा अन्या विपिनभूः वनभूमिः अगाहि अवगाहिता।

---

१. घोराऽथ इति 'ञ' पुस्तके पाठः।

उच्चतरागाहितया उच्चतरा ये अगाः वृक्षाः तेष्वहितया आरोपितया दृष्ट्या च घोरा भयावहा कन्दरा दरी अगाहि। कन्दरागाहितयेत्येकं पदं वा। कन्दरायुक्ताद्रौ अहितया क्षिपन्त्येत्यर्थः। अत्र पक्षे घोरेति भूविशेषणम्। यद्वा परागाहितया पुष्पधूलिव्याप्तया वनभूः अगाहि विलोडितेत्यर्थः। दग्धशबरया तया भैम्या अन्याऽटवी अवगाहिता घोरा कन्दरा च दृष्टेति भावः। गाह अवगाहनेऽस्माल्लुङि चिणि ॥४१ ॥

**अनुवाद**—ऊंचे वृक्षों वाले गुफा युक्त पर्वतों में भटकती हुई, दृष्टि से कामी शत्रु (किरात) को जलाने वाली वह दमयंती अत्यधिक भयावनी दूसरी वन भूमि में पहुंची ॥४१ ॥

**पदवाऽपदवापदवापदवा रयतोऽद्रिवनं विललाप च सा।**

**तरसाऽन्तर सान्तरसान्तर सान्वयदुःख वृणीष्व सखे मरणम् ॥४२ ॥**

**अन्वयः**—पदवा सा रयतः अपदवापद् अवाः अद्रिवनम् अवापत्। हे सान्तरसान्तर! सान्वयदुःख अन्तर! सखे। तरसा मरणं वृणीष्व (इति) च विललाप ॥४२ ॥

**अन्वयदीपिका**—पदवेति — सा दमयन्ती रयतः वेगात् अद्रिवनम् अवापत् प्राप। च पुनः विललाप रुरोद। कथं भूता सा? पदवा पदाभ्यां चरणाभ्यां वाति गच्छति इति पदवा सा। कथं भूतं वनम्? अपदवापत् अपगता दवाग्नेः आपद् यस्मात्।पुनः किं विधम्? अवाः न वाः जलं यस्मिन् तत्। किं विललापेत्याह हे अन्तर! चित्त। हे सान्तरसान्तर अन्तेन नाशेन सह वर्तमानं सान्तं रसान्तरं भाग्यो यस्य तस्य सम्बोधनम्। पुनः सान्वयं सानुबन्धं निरन्तरं दुःखं यस्य तस्य सम्बोधनम्। हे सखे! मित्र! त्वं मरणं वृणीष्व ॥४२ ॥

**यमकबोधिनी**—पदवेति-सा दमयन्ती रयतो वेगात् अद्रिवनं पर्वतारण्यम् अवापत् प्राप। च पुनः विललाप विलपति स्म। किं लक्षणा सा? पदवापदवापत् पदयोर्वा निक्षेपण-स्थाने पदस्येव आपत् विपत्तिर्यस्याः सा तथा पदवापदवापत् इति वनविशेषणम्। पदवा अपदवापत् इति पदच्छेदो वा। किम्भूता सा? पदवा पदाभ्यां वाति गच्छति सा पदवा। वा गतिगन्धनयोरस्य धातोः प्रयोगः। किम्भूतं वनम्? अपदवापत् अपगता दवस्य दवाग्नेरापत् यस्मात् तत् तथोक्तम्। पुनः किम्भूतं वनम्? अवाः न विद्यते वाः उदकं यत्र तत् अवाः। विलापप्रकारमाह हे अन्तर! हे अन्तरात्मन् हे सान्तरसान्तर! सान्तानि सावसानानि रसान्तराणि अन्ये शृङ्गारादिरसा यस्य तस्य सम्बोधनम्। तथा पुनः हे सान्वयदुःख! सान्वयानि निरन्तराणि दुःखानि यस्य तस्य सम्बोधनम्। तथा पुनः हे सखे! त्वं तरसा वेगेन मरणं मृतिं वृणीष्व अङ्गीकुरु। ईदृशदुःखस्य दुस्सहत्वात् मरणमेव वरमिति भावः। छिद्रात्मीयविनावहिर-वसरमध्येऽन्तरात्मनि चेत्यमरः ॥४२ ॥

**दीपिका**—पदवेति — सा दमयन्ती अद्रिवनं गिरिविपिनं तरसा वेगेन अवापत् प्राप । च पुनः विललाप रुरोद । विलापमेव वर्णयति हे सान्तरसान्तर ! अन्तेन सह वर्तमानं सान्तम् अन्तरं यस्याः सा तस्य सम्बोधनम् । हे सान्तर नष्टभोगविशेष ! हे सान्वयदुःख ! निरन्तरदुःख ! हे अन्तर ! एवंविधचित्त ! सखे मित्र ! तरसा वेगेन शरणं रक्षितारं वृणीष्व भजस्व । किम्भूता सा ? पदवा पद्भ्यां चरणाभ्यां वाति गच्छतीति । किम्भूतमद्रिवनम् ? अपदवापत् अपगता दवापत् दवाग्निविपत् यस्मात् तत् । पुनः किम्भूतम् अद्रिवनम् । अवाः न विद्यते वाः जलं यस्मिन् ॥४२ ॥

**सुबोधिनी**—पदवेति— अयतः शुभदैवात् पदवा पदाभ्यां वातीति पदवा सा दमयन्ती अपदवापत् अपगतं दवाग्निजन्यं दुःखं यस्मात् तत् तादृशमद्रिवनं पर्वतवनमवापल्लेभे । रयतो वेगादवापदिति वा । कीदृशम् ? अवाः न विद्यते वार्जलं यस्मिन् तत् जलरहितम् । विललाप च पर्यरोदीच्च । हे सान्तरसान्तर ! सान्तं अन्तसहितं सान्तरं करुणातिरिक्तं रसो यस्मात् तादृश हे सान्वयदुःख ! अन्वयः सन्तानः तत्सहितं दुःखं यस्मिंस्तादृश सान्वयदुःख ! इति अन्तः करणदुःखसहित हे अन्तर ! आत्मन् सखे ! मित्र ! तरसा वेगेन मरणं वृणीष्व वरय । पदचारिणी दमयन्ती दवविपद्रहितं जलशून्यं गिरिवनगता विलापं चाकार्षीत् । हे आत्मन् सपरिवारदुःखाकुल ! मरणमिदानीं वरय । साम्प्रतं कियत् सहे । मम मरणं वरमिति भावः । अवापदिति अपेः लृदित्वादङ् । रपलपजल्पव्यक्तायां वाचि इत्यस्य लिटि ललापेति । अन्तरमवकाशावधि परिधानान्तर्द्धिभेदतादर्थ्ये छिद्रात्मीयविनावहिरवसर मध्येऽन्तरात्मनि चेत्यमरः ॥४२ ॥

**अनुवाद**—वेग से पैदल चलती हुई वह (दमयंती) दवाग्निजन्य कष्टों से रहित जलविहीन पर्वतवन में पहुंची और हे विनष्ट भाग्यवाले निरन्तर दुःखी चित्त मित्र तुम शीघ्र मृत्यु का वरण करो ऐसा रोई ॥४२ ॥

**वृक कोपपुरस्सरमाऽऽसर मा सरमा सरमा भवता ननु सा ।**

**किमृते [१]दयितादयतोदयतोदयतोऽदयतो भवतीह सुखम् ॥४३ ॥**

**अन्वयः**—हे वृक ! कोपपुरस्सरम् मा आसर । ननु सा सरमा भवता सरमा । हे अयतोदयत उदयतः अदयतः दयितात् ऋते इह किं सुखम् भवति ? ॥४३ ॥

**अन्वयदीपिका**—हे वृक ! अरण्येचर ! कोपपुरस्सरं सकोपं यथा स्यात् तथा त्वं मा इति माम् आसर आगच्छ मां भक्षयेत्यर्थः । ननु निश्चितं सा सरमा वृकी तव भार्या भवता त्वया सरमा रमया शोभया सह वर्तमाना सश्रीका । हे अयतोदयत ! अयः दैवेन तोदः व्यथनं तेन अशक्तः तत्सम्बुद्धौ । उदयतः उद्गतः नष्टः अयो भाग्यं यस्मात् तस्मात् दयितात् ऋते इह किं सुखं भवति ? न भवतीत्यर्थः ॥४३ ॥

---

१. रमणादिति 'ञ' पुस्तके पाठः ।

**यमकबोधिनी**—वृकेति—हे वृक ! हे व्याघ्र ! त्वं कोपपुरस्सरं यथा स्यात् तथा मा माम् आसर आगच्छ । ननु इत्यनुनये । सा भवत: सरमा कान्ता वृकीत्यर्थः । भवता त्वया कृत्वा सरमा सभर्तृका । अहं तु वियोगिनी मृततुल्या । त्वद्वधार्हेति भावः । हे तोदयत ! हे पीडोच्चेतः ! अतः कारणात् त्वम् अय गच्छ । दयिताद् वल्लभाद् ऋते विना इह भूमौ मम किं सुखमस्ति किन्तु नास्तीत्यर्थः । किं लक्षणात् ? अदयतः दयारहितात् । हे अयतोदयत ! अयस्य दैवस्य तोदः व्यथा अनेन गतः तस्य सम्बोधनम् । तथा दयिताद् भर्तुः ऋते मम इह किं सुखमस्ति । अन्यत्तथैव ॥४३ ॥

**दीपिका**—वृकेति— हे वृक ! वन्यशुनक ! कोपपुरस्सरं सक्रोधं यथा स्यात् तथा मा माम् आसर आगच्छ भक्षयेत्यर्थः । ननु निश्चितं भवतः सरमा अरण्यशुनी तव भार्या सरमा सलक्ष्मीका । हे अयतोदयत ! अपदैवेन तोदं व्यथनं येषां ते अयतोदाः तेषु यत् सावधानं दैवपीडितपीडकात् दयितः भर्तुः विना मम इह किं सुखम् अस्ति । न किमपीत्यर्थः । किम्भूतात् ? उदयतः उद्गतः नष्टः अयः शुभावहविधिर्यस्मात् । पुनः किम्भूतात् ? अदयतः निर्दयतः ॥४३ ॥

**सुबोधिनी**—वृकेति-वने गच्छन्ती कन्दरातो निःसृतं व्यात्तमुखं वृकं दृष्ट्वा आह - हे वृक ! तरक्षो ! कोपपुरस्सरं क्रोधपूर्वकं मा माम् आसर आगच्छ । मां भक्षयेत्यर्थः । मा सर इतो मा गच्छ । ननु भोः सा तव स्त्री वृकी भवता त्वया सह स्थीयतामिति भावः । यद्वा सा सरमा श्वापदत्वात् शुनी तव स्त्री त्वया सरमा भवत्विति शेषः । अतो मा सर अन्यत्र मा गम्यताम् । मामेव भक्षयेत्यर्थः । अयतोदयतोदयतः अयः शुभदैवं तस्य तोदः क्षेपस्तत्र यतो रत उदयोऽभ्युदयो वा यस्य तादृशात् अदयतः निष्करुणात् दयितात् स्वीयात् नलादृते विना इहावसरे मम किं सुखमस्ति स्वास्थ्यमस्ति । यत्तु हे अयतोदयतेति भिन्नं पदम् । अयो दैवं तेन या पीडा तया यतः बद्धः । दैवपीडित उदयत उदगच्छतः अपरं तथैवेति ध्येयम् । यद्वा हे वृक ! कोपपुरस्सरं मा सर स्वगृहात् मा गच्छ । आसर परावृत्य आगच्छ । सा तव स्त्री सरमा सलक्ष्मीका भवत्वित्यर्थः । तथा च क्रुद्धः सन् गृहात् मा गच्छेति भावः । दमयन्ती वृकमाह हे वृक ! त्वं माम् आसर नलादृते मम किं सुखम् । जीवितेन वा किं प्रयोजनम् । अतो मां भक्षयित्वा स्वस्त्रिया सहैव स्थीयताम् । मा विरहीभवेति तात्पर्यार्थः । तरक्षुस्तु मृगादनः वृकोऽपि । आसरेति सर्तेर्लिटि । मा शब्दोऽयन्नमाङ् । सरमा शुनी । प्रश्नावधारणानुज्ञामन्त्रणे ननु । पृथग्विनान्तरेणर्तेर्हिरुक् नाना च वर्जने ॥४३ ॥

**अनुवाद**—हे व्याघ्र ! क्रोधित होकर मेरी ओर आओ (मुझे खा लो बाहर मत जाओ) निश्चय ही तुम्हारी व्याघ्री तुमसे सनाथ है । भाग्य से पीड़ित भाग्य रहित उस निर्दय प्रिय (नल) के बिना मुझे यहां क्या सुख है ? ॥४३ ॥

**अयि राक्षस भक्षय मां क्षुधितो न वसाऽनवसान वसान वसाः ।**
**रूजमुज्झ जनेऽत्र [1]च हे करुणान्तर दान्तरदान्तरदाऽन्तरदाम् ।४४ ॥**

---

१. वहेः इति 'क' पुस्तके पाठः ।

**अन्वयः**—अयि दान्तरदान्तरद ! अनवसान ! वसाः वसान ! हे राक्षस ! (त्वं) क्षुधितो न वस मां भक्षय । अन्तरदां रुजम् उज्झ । अत्र जने करुणां च तर ॥४४ ॥

**अन्वयदीपिका**—अयीति- कश्चिद्राक्षसं दृष्ट्वा विललाप — हे अनवसान ! न अवसानं मरणमलक्ष्मीस्तु निगद्यतो इत्येकाक्षरः[१] ? हे वसाः वसान ! वसाभिः आच्छादयति वसानः तत्सम्बुद्धौ । हे राक्षस ! क्षुधितः त्वं मां भक्षय । न वस न तिष्ठ । भक्षणार्थं शीघ्रमेहि । हे दान्तरदान्तरद ! दान्तानाम् इमानि दान्तानि । यः रदान्तराणि ददातीति तत्सम्बुद्धौ । हे दान्तरदान्तरद ! अत्र मल्लक्षणे जने अन्तरदाम् अन्तरं मनः द्यति खण्डयति इति तां रुजमुज्झ मुञ्चेत्यर्थः । करुणां वहेः ।[२] त्वं तर । संसारमिति शेषः ॥४४ ॥

**यमकबोधिनी**—अयीति— अयीति कोमलामन्त्रणे । हे राक्षस ! हे अनव ! न नवः अनवः तस्य सम्बोधनम् । हे पुरातन ! हे सानव ! सानौ भवः सानवः तस्य सम्बोधनम् । तथा त्वं मां भक्षय अद्धि ।न वस वासं मा कृथाः । उत्तिष्ठेत्यर्थः । किं लक्षणस्त्वम् ? क्षुधितः क्षुधावान् । परः सा प्रसिद्धा वसा शरीरधातुविशेषो न इदानीं मम शरीरे वसायाः शुष्कत्वात् । वसाः इति सविसर्गपाठे हे वसाः वसान ! मांसस्नेहात् वसानः । वस आच्छादने इत्यस्य साने रूपम् । हे वसालिप्त इत्यर्थः । हे अनवसान अन्तरहित इति व्याख्या । हे करुणान्तरदान्तरदान्तर ! शान्ताः रदान्तराः दशनविशेषाः यस्य सः तस्य सम्बोधनम् । करुणान्ते कृपावसरे दान्तरदान्तर शान्तदशनमध्य त्वम् अत्र मल्लक्षणे जने रुजम् उपतापम् उज्झ त्यज । पीडायाः दुस्सहत्वान्मरणमेव वरमिति भावः । किं लक्षणं रुजम् ? दान्तरदान्तो दन्तसम्बन्धी रदो विदारणं यत्र सा तथा ताम् । वहेः इति पाठे यतोऽहं वहे धारयामि रुजमित्यर्थः । अथवा हे दान्तरदान्तरदः तराः उत्कृष्टाः दान्ताः दमनशीलाः रदान्तराः तैः द्यति खण्डयति सः तस्य सम्बोधनम् । अहं रुजं वहे त्वमत्र मल्लक्षणे जने करुणाम् उज्झ । किम्भूतां रुजम् ? आन्तरं चित्तं द्यति खण्डयति इति आन्तरदा ताम् । अन्यत् तथैव ॥४४ ॥

**दीपिका**—अयीति— कस्यचिद् वसां रुधिरादिकं प्रपीय गच्छन्तं कमपि राक्षसं भैमी वक्ति । हे अनव ! वृद्ध राक्षस ! वस तिष्ठ मा गच्छ । हे अनवसान ! न विद्यते अवसानं मरणं यस्य एवं विधस्त्वं माम् अपि भक्षय । इयं वसा मच्छरीरवसा न त्वया पूर्वमुपभुक्ता तादृशी न किन्तु शरीरान्तर्गतत्वात् अतिस्निग्धा रुचिरा वेत्यर्थः । किम्भूतस्त्वम् ? क्षुधितः क्षुधायुक्त एव न तु तृप्तः । हे अदान्तरदान्तरद ! तीक्ष्णदंष्ट्रप्रद त्वम् अन्तर्दां हृदयच्छेदिरूजं पीडाम् उज्झ मुञ्च । अत्र मल्लक्षणे जने

१. अत्र खनि खानि इत्येतादृशः पाठः । तत्किमिति ज्ञेयं मनीषिभिः ।

२. विद्यावती-वहेः इत्यपि क्वचित् पाठः । अन्तरदां रुजमुज्झ । अन्तरं मनः द्यति खण्डयति इयं स्त्रीत्वेन अवध्येति मनसि कष्टोत्पादिकां पीडामुज्झित्वा तादृशीं रुजं त्यक्त्वा मां भुक्त्वा च मयि करुणां वहेः इति योजना । एवं कृत्वा संसारं तर संसारे कीर्तिमवाप्नुहि ।

करुणान्तः दयायुक्तान्तो मयि करुणां वहेः कुर्याः। मल्लक्षणेन तव तृप्तिरपि ॥४४ ॥

**सुबोधिनी**—अयीति— भैमी राक्षसं दृष्ट्वा आह अयि ! अहो राक्षस ! वसा मेदांसि वसान अच्छादय । अनवसान ! मरणहीन ! क्षुधितो बुभुक्षितस्त्वं न वस न तिष्ठ । मां भक्षय । अत्र जने मल्लक्षणे करुणान्तरदान्तरदान्तद ! करुणान्तरं करुणावकाशः तेन दान्तम् उपशान्तं रदान्तरं दन्तान्तरं ददातीति तादृक् करुणाहीनदान्तरप्रदापक रुजं पीडाम् उज्झ त्यज । अहमन्तः हृदयम् अदां दत्तवती । यद्वा करुणां तर मद्विषये दयां त्यजेत्यर्थः । हे दान्तरदान्तरदान्तरद ! दान्तः समर्थः रदो दन्तः तस्यान्तरेण द्यति खण्डयति इति सः । हे राक्षस ! मयि स्त्री अवध्येति रूजं त्यक्त्वा मां भक्षय । तुभ्यमहं शरीरं दत्तवतीति भावः । अदामिति ददातेर्लुङि । यदपि वहेः करुणा--न्तरदान्तरदान्तरदान्तरदान्तरद इति पाठः । आन्तरं चित्तं द्यति खण्डयति तां रुजं त्यज । त्वमत्र जने करुणां वहेः । हे रदान्तरदान्तरप्रद ! दान्तं संसारान्तं तदर्थः ॥४४ ॥

**अनुवाद**—हे तीक्ष्णदांतों का मध्य देने वाले, मरणरहित, वसा से आच्छादित राक्षस ! (तुम) भूखे मत रहो मुझे खा लो । अपने मन को व्यथित करने वाली व्यथा को छोड़ो (और) इस जन (दमयन्ती) पर दया करो । ॥४४ ॥

**[1]करमाकर माकरमाकरमाकलय[2] व्यसनं मम पाहि हरे ।**

**दरतो दरतोदरतोदरतो विरुतैर्मरुतां सुकर ! त्वमपि ॥४५ ॥**

**अन्वयः**—हे [3]करमाकर ! हे हरे ! मम व्यसनं माकरम् अपि आकरम् आकलय । हे सुकर ! विरुतैः मरुतां दरतोदरतोदरतः दरतः पाहि ॥४५ ॥

**अन्वयदीपिका**—करमेति — करमाकर ! कस्य ब्रह्मणः रमां लक्ष्मीं लोकाधिपत्यं करोतीति तस्य सम्बुद्धौ । हे हरे ! मम व्यसनं दुःखं माकरम् आकरं समुद्रतुल्यमित्यर्थः । आकलय जानीहि । विरुतैः शब्दैः मरुतां देवानां दरतोदरतोदरतः दरस्य तोदो दरतोदः तस्मिन् दरतोदे रतम् उदरम् अन्तरं यस्य तस्माद् दरतः शेषात् शोभनौ करौ यस्य तादृशस्त्वं पाहि रक्ष ॥४५ ॥

**यमकबोधिनी**—करेति— हे हरे ! हे सिंह ! हे करमाकर ! करयोः मा शोभा तस्याः आकरो निलयस्तस्य सम्बोधने । हस्तशोभानिलय ! तथा वा कस्य ब्रह्मणो रमा जगत्कर्तृत्वलक्षणं करोतीति करमाकरस्तस्य सम्बोधनम् । हे करमाकर ! त्वं मम व्यसनं विपदि भ्रंशं वा आकलय विचारय । किं लक्षणं व्यसनम् ? आकरमाकरं कं

---

१. क रमाकर इति 'छ' 'ञ' पुस्तकयोः पाठः ।

२. आकलये इति 'ञ' पुस्तके ।

३. विद्यावती— क्वचित् क रमाकर इति पाठः । तत्र हे क ! हे रमाकर ! इति अन्वयः ।

सुखं च रमा लक्ष्मीश्च करमे। करमे करोतीति करमाकरं तत्। न करमाकरम् अकरमाकरं दुःखदारिद्र्यजनकमिति भावः। अतः कारणात् हे सुखकर ! शोभन-हस्तस्त्वं मरुतां विरुतैः दरतोदरतो मा इति मां पाहि रक्ष। दरस्य भयस्य भावो दरता कम्पादिः तस्य उदरतो मध्यात् उदरतोदरतः अदरम् अनीषितं प्रचुरं तोदः पीडा तस्मिन् रतः ॥४५ ॥

**दीपिका**—करमेति— कस्य आधिपत्यप्रद ! हे विष्णो ! मम व्यसनं दुःखं माकरं मकरस्यायं माकरं तम् आकरं समुद्रम् आकलय जानीहि इत्यर्थः। दरतः भयतः पाहि रक्ष। हे दरतः सुकर ! पाञ्चजन्यशोभनकर ! त्वं विरुतैः निजगर्जितैः महतानामपि देवा-नामपि दरतोदरतः दरस्य भयस्य तोदे नाशे रतः युक्तोऽसि ॥४५ ॥

**सुबोधिनी**—करमेति— हे रमाकर ! लक्ष्मीप्रद ! क ! ब्रह्मन् मम व्यसनं विपदं माकरम् आकरं माकराणामयं माकरस्तादृशमाकरं खनिम् आकलय। मम शोकं समुद्रं जानीहि। मरुतां देवानां सुकर अकृच्छकर हे हरे कृष्णनामोच्चारणेन हरति पातकानीति हरिः। तस्य सम्बोधनम्। त्वमपि अदरतोदरतोदरतः अदरोऽनल्पो यस्तोदो दुःखं तत्र इतम् उदरमभ्यन्तरं यस्य तादृशात् दरतो भयात् विरुतैराश्वासवचनैः पाहि रक्ष। यद्वा शं सुखं रमा लक्ष्मीस्तयोराकरः उत्पत्तिभूमिः स चासौ माकरः शोभाकरश्च तत्सम्बो-धनम्। माकरं मकरसम्बन्धि समुद्रसदृशं मा लक्ष्मीः तस्याः आकरः उत्पत्तिस्थानं समुद्रमिवेवार्थः। हे ब्रह्मन् ! मम शोकः समुद्र इव प्रवृद्धः। देव भयापहारिन् हे कृष्ण ! त्वमपीदृशे मामाश्वासनवाग्भिः रक्षेत्याहेति भावः। मारुते वेधसि ब्रध्ने पुंसि कः खनिः स्त्रियामाकरः स्यात्। एकत्र करोतीत्याकरः। ऋदोरप्। व्यसनं विपदि भ्रंशे दोषे कामजकोपने। पाहि पा रक्षणेऽस्य लिटि। सुकरोति ईषद्दुःसुषु कृच्छाकृच्छार्थेषु खल्। दरोऽस्त्रियां भये श्वभ्रे। एवं कस्य ब्रह्मणः कर लोकाधिपत्यकर हरे ! सुकर ! शोभनहस्त ! दरतोदरतोदरतो दरो भयं तस्य तोदो नाशः तत्र रतमुदरं यस्य तस्य दरतः शङ्खस्य मरुतां वा दरतो विरुतैर्मां पाहि रक्षेति ध्येयम् ॥४५ ॥

**अनुवाद**—हे ब्रह्मा के लोकस्वामित्वदायक प्रभो ! मेरी इस विपत्ति को मकरों से युक्त समुद्र समझो। शब्दों से देवों के भय की पीड़ा को दूर करने में मन लाने वाले हे शंखहस्त ! इस भय से मेरी रक्षा करो ॥४५ ॥

**त्वदरर्निषधेश समृद्धिमनारमया रमयाऽऽर मयाऽरमयाः[१]।**

**[२]व्यसनं त्वमुपैमि[३] कदा नु सभीशमना शमनाशमनाशमनाः ॥४६ ॥**

---

१. 'ग' 'घ' पुस्तकयोः निर्विसर्गपाठः।

२. विरहमिति 'ञ' पुस्तके पाठः।

३. उपैहि इति 'च' पुस्तके पाठः।

**अन्वयः**—हे निषधेश ! त्वदरिः अनारमया रमया समृद्धिम् आर । त्वं (च) मया अरं व्यसनम् अयाः । (अहं) सभीशमना अनाशमनाः अनाशं शं कदा नु उपैमि ? ॥४६ ॥

**अन्वयदीपिका**—त्वदिति — हे निषधेश ! त्वदरिः पुष्करः अनारमया अविनाशया रमया लक्ष्म्या कृत्वा समृद्धिम् आर प्राप त्वं मया सह अरम् अत्यर्थं व्यसनं दुःखम् अयाः प्राप्तोऽसि । हे राजन् ! सभीशमना भीः शमनं सुखाभावः च ताभ्यां सह वर्तमाना । पुनः अनाशमनाः न विद्यते आशायां जीवनपरायां मनो यस्याः अनाशमनाः अहम् अनाशं शं सुखं कदा उपैमि ? ॥४६ ॥

**यमकबोधिनी**—त्वदरिरिति — हे निषधेश ! नल ! निषधा नलपत्तनम् । त्वदरिः पुष्करः रमया लक्ष्म्या कृत्वा अरम् अत्यर्थं समृद्धिम् आर प्राप । त्वं मया सह व्यसनम् अय गच्छ । किं लक्षणया मया ? अनारमया आरमतीति आरमो भर्ता तद्रहितया । अथवा नराणां समूहो नारं तस्मिन् नरसमूहे मा शोभा यस्याः सा तथा । तया मानुषेषु शोभारहितयेत्यर्थः । नु वितर्के । अहं शमनाशं शमनस्य यमस्य आशं भोजनं कदा उपैमि उपैष्यामि । कदा यमो मां ग्रसिष्यति इत्यर्थः । किं लक्षणाऽहम् ? सभीशमना भीर्भयं च शमनं च उपशमं च ताभ्यां सह वर्तत इति । पुनः किं लक्षणा ? अनाशमनाः आशारहितं मनो यस्याः सा तथा । किं लक्षणं शम् ? अनाशं नाशरहितम् । अन्यत्तथैव । शमनो यमराट् यम इत्यमरः ॥४६ ॥

**दीपिका**—त्वदरिरिति — हे निषधेश ! नल ! त्वदरिः पुष्करः रमया लक्ष्म्या कृत्वा समृद्धिं सम्पदम् आर प्राप । त्वं मया अरम् अत्यर्थं व्यसनं दुःखम् अयाः प्राप्तोऽसि । किम्भूतया रमया ? अनारमया न विद्यते आरामो नाशो यस्याः तया । नु इति वितर्के । अहं कदा अनाशम् अविनाशिनम् सुखम् उपैमि प्राप्स्यामि । किम्भूताऽहम् ? सभीशमना भीर्भयं शमनं सुखाभावः ताभ्यां सह वर्तमाना । यद्वा भियः शमनेन भीतिशान्त्या सह वर्तमाना सती निर्भया सती कदा अनाशमुपैमि इत्यन्वयः । किम्भूताऽहम् ? अनाशमना शं जीवनाशारहितं मनो यस्याः सा ॥४६ ॥

**सुबोधिनी**—त्वदरिरिति — हे निषधेश ! त्वदरिः पुष्करः अनारमया अनवसानया लक्ष्म्या रमया वा समृद्धिं हर्षम् आर प्राप्तवान् । त्वं मया सह अरं शीघ्रं व्यसनं विपत्तिम् अयाः गतवानसि । अनाशमनाः आशेच्छा तद्रहितं मनो यस्यास्तादृशी । यद्वा त्वदरिः कथं भूतः ? अनाशमनाः न विद्यते नाशं विनाशं मनो यस्य स तथेत्यर्थः । सभीशमना भीर्भयं तच्छमनं शान्तिस्तत्सहिता सान्तभीतिः । अनाशं नाशरहितं शं सुखं कदा उपैमि । कस्मिन् काले उपगच्छामि । नु पृच्छायाम् कदा सुखं लप्स्ये इति व्यलपत् । यातेर्लङि अयाः । उपैमीति इणः विभाषा । कदाकर्ह्योरिति भविष्यति लट् । नु पृच्छायां विकल्पे च ॥४६ ॥

**अनुवाद**—हे निषधेश ! तुम्हारे शत्रु (पुष्कर) ने अविनाशिनी लक्ष्मी से समृद्धि प्राप्त किया। तुम मेरे साथ अत्यधिक दु:ख पा रहे हो। (मैं) भय और कष्ट से युक्त और आशारहित मन वाली कभी नष्ट न होने वाले सुख को कब प्राप्त करूंगी ॥४६ ॥

**यमनायमना यमनाय मनागभिवीक्ष्य रतं द्रवतीह पर: ।**

**स रुषो[1] निषधक्षितिनाथ गलन्नवमानवमान वमाऽनवमा:[2] ॥४७ ॥**

**अन्वय:**—हे निषधक्षितिनाथ ! अनायमना: परं यं यमनाय मनाक् रतम् अभिवीक्ष्य द्रवति। गलन्नवमानवमान ! स: (त्वम्) इह अनवमा: रुष: वम ॥४७ ॥

**अन्वयदीपिका**—यमिति - हे निषधक्षितिनाथ ! अनाये अनर्थागमे मनो यस्य स: पर: शत्रु:यं त्वां यमनाय शत्रुनियमनाय मनागपि रतम् आसक्तं वीक्ष्य द्रवति पलायते इत्यर्थ:। हे गलन्नवमानवमान ! गच्छन्नूतनमनुष्याभिमान !त्वमिह शत्रौ अनवमा: अन्यूना: रुष: वम मुञ्च ॥४७ ॥

**यमकबोधिनी**—यमिति- हे निषधक्षितिनाथ ! हे निषधदेशभूमिप्रद ! हे गलन्नवमानवमान ! नवानां तरुणानां मानवानां मनुष्याणां मानो गर्व: गलन्नवमानवमानो यस्मात् स: तत्सम्बुद्धौ। रुष: क्रोधान् वम त्यज। वम उद्गिरणे। किं लक्षणा: रुष: ? अनवमा: अनिकृष्टा: अधिका इत्यर्थ:। स: क: ? पर: शत्रु: यमनाय निग्रहाय रतम् आसक्तं यं मनाक् ईषत् अभिवीक्ष्य दृष्ट्वा द्रवति पलायते। किं लक्षण: पर: ? अनायमना: न आयेषु लाभेषु मनश्चित्तं यस्य स तथा। लाभान् परित्यज्य पलायते इत्यर्थ: ॥४७ ॥

**दीपिका**—यमनेति — हे निषधक्षितिनाथ ! निषधभूपते ! हे गलन्नवमानवमान ! गलत् गच्छत् नवो नव्य: मानवानां मनुष्याणां मानोऽभिमानो यस्मिन् तस्य सम्बोधनम्। स त्वम् अनवमा: बहुकालात् रुष: क्रुद्ध: वम उद्गिर। स: क: ? यमनाय शत्रुनाशाय मनाक् ईषदपि रतं युक्तं यं नलं त्वाम् अभिवीक्ष्य दृष्ट्वा इह लोके अनायमना:। न आये अर्थागमे मनो यस्य एवं विध: सन् पर: शत्रु: द्रवति पलायते ॥४७ ॥

**सुबोधिनी**—यमनेति- अनायमना: अनीतिमना:। अनीति: नय एव नाय: अन्यायपर इत्यर्थ:। आयो धनागमस्तद्रहितमना: सन् पर: शत्रु: मनाक् ईषत् यमनाय जीवापहरणाय रतमासक्तं यं त्वां वीक्ष्य इह लोके पर: शत्रु: द्रवति दूरादेव पलायते। हे निषधेश ! निषधक्षितिनाथ ! नल ! गलन्नवमानवमान ! गलन् स्खलन् नवमानवास्तरुणास्तेषां मानो गर्वो यस्मिन् तादृक् स: त्वम् अनवमा: अधमा: अनवमा: श्रेष्ठा: रुष: क्रोधान् वम उद्गिर। हे नल ! यं त्वां कृतानीति: शत्रुर्हन्तुमुद्यतमीषदप्यालक्ष्य पलायते स त्वं पर: हृतसर्वस्व: ता: गिर: कथं नोद्गिरसि। वने वने किमटसीति। किञ्चिदीषन्-

---

१. निषधेश्वर तत्र इति 'ञ' पुस्तके पाठ:।

२. दीपिकायां (ङ पुस्तके) 'ञ' पुस्तके च अष्टचत्वारिंशत्तमोऽयम्।

मनागल्पे। द्रुतगताविस्य लटि द्रवतीति। रुट् क्रुद्धौ स्त्रियौ। टु वम उद्गिरणेऽस्माल्लोटि उद्गिरेति। निकृष्टप्रतिकृष्टार्थरिफयाप्यावमाधमाः ॥४७॥

**अनुवाद**—हे निषधक्षितिनाथ ! अनीति को सोचने वाला महान् शत्रु भी नियमन के लिये तुम्हें थोड़ा भी लगा देख कर भाग जाता है। हे चलते हुए नवयुवकों के अभिमान वह (तुम) महान् क्रोध का वमन करो ॥४७।

**नयमानयमाऽऽनयमान यमावस एत्य निवासममुं भवता।**

**भवनीयमपायमरीनुदयानयता नयता नयतानयता[१] ॥४८॥**

**अन्वयः**—हे नयमानयमाऽऽनयमान ! यम् आवसः (पुनः) अमुं निवासम् एत्य उदयान् अयता नयतांनयता भवता अरीन् अपायं नयता भवनीयम् ॥४८॥

**अन्वयदीपिका**—नयेति- यमोऽहिंसा आ सर्वतो नीतिः मानोऽभिमानः ते नयमानाः पोष्यमाणाः येन तस्य सम्बुद्धौ। त्वं यं निवासम् आवासः स्थितिमकार्षीः पुनः अमुं निवासम् एत्य उदयान् ऐश्वर्याणि अयता प्राप्तवता[२] भवता नलेन अरीन् शत्रून् अपायं नाशं नयता प्रापयता भवनीयं भवितव्यम् ॥४८॥

**यमकबोधिनी**—नयेति— हे अनय ! मत्त्यागात् नीतिरहित ! हे अशुभावहविधे ! इति वा यं निवासं स्थानम् एत्य प्राप्य त्वम् आवसः न्यवसः अमुं निवासमिति मां नय प्रापय। हे मानयमान ! मानयते इति मनयमानस्तस्य सम्बोधनं तथा। अथवा मा लक्ष्मीः तस्याः आनये आनयने मानोऽहङ्कारो यस्य तथा तत्सम्बोधनम्। भवता त्वया अरीन् शत्रून् अपायं नाशं नयता प्रापयता भवनीयं भवितव्यम्। किं लक्षणेन भवता? उदयान् अयता गच्छता। किं लक्षणान् अरीन्? अनयतानयतान् अनयस्य अनीतेस्तानं विस्तारस्तस्मिन् उद्यतास्तान् अनीतिविस्तारोद्यतान्।अथवा नयतानयतान् नीतिविस्तारोद्यतान् ॥४८॥

**दीपिका**—नयेति— हे नयमानयमान् अयमान! नयो नीतिः मानोऽभिमानः यमो हिंसादिलक्षणः अयमान अत्राप्नुवन् प्राप्नुवन् हे नल ! यं निवासं स्थानम् अवसः स्थितिं कार्यः अमुं निवासमेत्य भवता भवनीयम् भवितव्यम्। किम्भूतेन भवता? अरीन् शत्रून् अपायं नाशं नयता प्रापयता। किम्भूतान् अरीन्? अनयतानयतान् अनीतिविस्तारे आसक्तान् ॥४८॥

**सुबोधिनी**—नयेति— नयमानयमान् नयो नीतिर्मानोऽभिमानो यमो विश्रमो नियमो वा तान् अयमानः प्राप्नुवान् तस्य सम्बोधनम्। हे नयमानयमान् ! नीतिमभिमानं नियमं च धारयन् यं निवासं राष्ट्रमेत्य प्राप्य आवसः यस्मिन् राष्ट्रेऽतिष्ठः अमुं निवासम् अयता

---

१. 'ङ' 'ञ' पुस्तकयोः सप्तचत्वारिंशत्तमोऽयम्।

२. विद्यावती – अत्र नयतानयता इति पदमव्याख्यातमेवावशिष्यते। तदेवम् - नयस्य नीतेःतानःविस्तारः इति नयतानः तस्मै यतते इति नयतानयत् तेन नयतानयता भवता। नलस्य विशेषणमिदम्।

प्राप्तवता उदयान् उद्गतोऽज्ञानं येषां तादृशान् अनयतानयतान् अनयोऽन्यायस्तस्य तानो विस्तारस्तत्र यतान् अरीन् शत्रून् अपायं नाशं नयता प्रापयता भवता त्वया भवनीयं भवितव्यमिति। तदेव निजपुरं गच्छेति व्यलपदिति भावः। आवस इत्यस्याधारस्य निवासमित्यस्योपान्वध्याङ्वसः इति कर्मत्वम् ॥४८ ॥

**अनुवाद**—हे अहिंसा, नीति, अभिमान के पोषक ! जहां रहे हो फिर से उसी निवास को जाकर और ऐश्वर्यों को प्राप्त करते हुए नीति के विस्तार के लिये प्रयत्न करने वाले आपको शत्रुओं को विघ्न की ओर ले जाने वाला होना चाहिए ॥४८ ॥

**सनयासनयासनया स न याह्यसुहृद्घटया विपदं स्वपदम्।**

**हितदेहितदेहि तदेहि तदित्यलपद् बहुधा नरदेवसुता ॥४९ ॥**

**अन्वयः**—तदा सः (त्वं) सनयासनयासनया असुहृद्घटया विपदं न याहि। हितदेहितदेहि तत् स्वपदम् एहि इति नरदेवसुता बहुधा अलपत् ॥४९ ॥

**अन्वयदीपिका**—सनयेति-सा नरदेवसुता भैमी तदा तस्मिन् समये इति बहुधा बहुप्रकारम् अलपद् विलापं चक्रे। इति किम्? हे राजन्! स त्वं सनयासनयासनया नयस्य आसने नाशने यासनं प्रयत्नं तेन सह वर्तमानया असुहृद्घटया शत्रुसमूहेन विपदं न याहि न प्राप्नुहि किन्तु हितदेहितदेहि हितम् ईहितं येषां तादृशाः देहिनो जनाः यस्मिन् तत्स्वपदं स्वराज्यम् एहि ॥४९ ॥

**यमकबोधिनी**—सनयेति — नरदेवसुता भीमपुत्री इति बहुधा अलपत् विललाप। इति कथम्? हे ईहितद! वाञ्छितप्रद नल! स प्रसिद्धस्त्वम् असुहृद्घटया वारिनिवहेन विपदं न याहि न प्राप्नुहि। कया? हेतुभूतया आसनया स्थित्या एकत्रावस्थानेनेत्यर्थः। स्यादास्या त्वासना स्थितिरित्यमरः। किं लक्षणया असुहृद्घटया? सनयासनया नयो नीतिस्तस्य असनं क्षेपणं नयासनं तेन सह वर्तते इति तथा तया त्यक्तनीत्या इत्यर्थः। पुनः तत्प्रसिद्धं स्वपदं निजस्थानमेहि आगच्छ। किं लक्षणं स्वपदम्? हितदेहि हिताय देहिनः प्राणिनो यत्र तत्तथा। क्वचित्तु पूर्वार्द्धमन्यथा योजयन्ति? तथा हि-हीति निश्चितम् असुहृद्घटया कृत्वा या विपदा विपदत्वं सनय स्फोटय। किं लक्षणया असुहृद्घटया? सनयासनया सनीतिक्षपणया। किं लक्षणा भैमी? आसनया आसनं निजस्थानं याति गच्छति सा आसनया ॥४९ ॥

**दीपिका**—सनयेति— नरदेवसुता भैमी तदा बहुधाऽनेकप्रकारेण इति अलपत्। इतीति किम्? हे राजन् स त्वम् असुहृद्घटया भूतं स्वपदं हितदेहितदेहि हितं वाञ्छितम् ईहितं चेष्टितं येषां ते हिताः एवं विधाः देहिनः पुरुषाः यस्मिन्। किम्भूतया असुहृद्घटया? सनया सनया नयस्य नीतेः असनं निरासः यासनं प्रयत्नः तया सनया सनाभ्यां सहिता सनया। सनया नया नीतिपरित्यागयत्नयुक्तयेत्यर्थः ॥४९ ॥

**सुबोधिनी**—सनयेति-हे हितद नल! स त्वं सनयासनया नयो नीतिस्तस्या असनं त्यागस्तत्सहितया त्यक्तनीत्या असुहृद्घटया शत्रुकरिसमूहेन विपदं नाशं याहि मा गमः। ईहितदेहि ईहिता इष्टा उपकर्तारो देहिनो जना यस्मिन् तादृशं तत्स्वनगरमेहि आयाहि। इत्यनेन प्रकारेण सनया नीतिसहिता नरदेवसुता भीमभूपपुत्री बहुधा बहुप्रकारं व्यलपद्विललाप। यद्वा हितदेहितदेहीत्येकं पदम् हितदम् ईहितं चेष्टितं येषां ते तादृशा देहिनो यत्र तत्स्वपदं राज्यमेहि। हे नल! एवमेकाकी शत्रुहस्तं मा गच्छेः। शत्रव एकाकिनं दृष्टवाऽपकुर्युस्तस्मात् स्वकीयमेव नगरं गच्छेति नाना-शङ्काकुला भैमी तस्मिन् वने विललापेति भावः। करीणां घटना घटा। या प्रापणेऽस्य लोटि याहीति। पदं व्यवसितत्राणस्थानलक्ष्म्याङ्घ्रिवस्तुषु। एहीतीणो लोटि। अलपदिति लपव्यक्तायां वाचीत्यस्य लङि। बहुधा सङ्ख्यायाः विधार्थे धा। सप्तभिः कुलकम्॥४९॥

**अनुवाद**— वह तुम नीति के नाश में प्रयत्न शील शत्रुओं के समूह के कारण विपत्ति को मत जाओ। हित देने वाले उपाय को चाहने वाले लोगों से युक्त अपने उस पद को प्राप्त करो। इस तरह राजा (भीम) की पुत्री अनेक प्रकारों से रोई॥४९॥

**सा विधुरा धावन्तं रत्नौघं क्वापि निरपराधाऽवन्तम्।**

**सार्थं राधावन्तं प्रैक्षिष्टापच्च सुतनुराधावन्तम्॥५०॥**

**अन्वयः**—विधुरा निरपराधा सा सुतनुः क्वापि रत्नौघम् अवन्तं राधावन्तं धावन्तं सार्थं प्रैक्षिष्ट। आधौ अन्तं च आपत्॥५०॥

**अन्वयदीपिका**—सेति-विधुरा दुःखिता सा सुतनु दमयन्ती क्वापि वनप्रदेशे धावन्तं गच्छन्तं सार्थं जनसमूहं प्रैक्षिष्ट ददर्श। च पुनः आधौ मानसीव्यथायाम् अन्तं विरामम् आपत् प्राप। कथं भूता सा? निरपराधा निष्कपटा। कथं भूतं सार्थम्? रत्नौघं माणिक्यादिसमूहं अवन्तम्। राधावन्तं वाणिज्याद्यनेकसमृद्धिमन्तम्॥५०॥

**यमकबोधिनी**—सेति—सा दमयन्ती क्वापि वने सार्थं सङ्घं ददर्श। च पुनः आधौ मनोव्यथायाम् अन्तम् अवसानम् आपत् प्रापत्। चिन्तान्तं लेभे इत्यर्थः। बन्धनं व्यसनं चेतः पीडाधिष्ठानमापदम् इत्यमरः। किं लक्षणा सा? विधुरा विकला। किम्भूतं सार्थम्? धावन्तं शीघ्रं गच्छन्तम्। पुनः किं कुर्वन्तम्? रत्नौघं रत्नसमूहम् अवन्तं रक्षन्तम्। रत्नरक्षार्थं वनात् शीघ्रं गच्छन्तमित्यर्थः। पुनः किं लक्षणा सा? निरपराधा अपराधरहिता। किं लक्षणं सार्थम्? राधावन्तं सिद्धिमन्तं शोभावन्तं वा। राधसिद्धाविति धातोः रूपम्। पुनः किं लक्षणा सा? सुतनुः शोभन-शरीरा॥५०॥

**दीपिका**—सा विधुरेति—सा दमयन्ती क्वापि कुत्रापि प्रदेशे सार्थं जनसमूहं प्रैक्षिष्ट ददर्श। च पुनः आधौ चित्तव्यथायाम् अन्तं समाप्तिम् आप प्राप। किम्भूता सा? विधुरा

दुःखिता। पुनः किम्भूता सा? निरपराधा कैतवरहिता। किम्भूतम्? राधावन्तं समृद्धियुक्तम् ॥५०॥

**सुबोधिनी**—सेति— विधुरा विरहिता सुतनुः शोभनाङ्गी सा दमयन्ती निरपराधा अपराधरहिता क्वापि कस्मिन्नपि देशे रत्नौघं रत्नसमूहम् अवन्तं रक्षन्तं सरत्नसमूहं राधावन्तं राधा समृद्धिस्तत्सहितं धावन्तं गच्छन्तं सार्थं जनसमूहं प्रैक्षिष्ट दृष्टवती। आधौ मनःपीडायामन्तमवसानं च प्राप लेभे। वनेऽटन्ती सार्थमासाद्यमाना पीडां जहाविति भावः। धाव गतिशीघ्रयोरित्यस्य धावन्तम्। राध साधसंसिद्धावित्यस्य षिद्भिदादिभ्योऽङित्यङि राधेति। प्रैक्षिष्टेति ईक्षदर्शनाङ्कनयोरित्यस्य लङि। अपेर्लुङि आपदिति। सङ्घसार्थौ तु जन्तुभिः। पुंस्याधिर्मानसी व्यथा ॥५०॥

**अनुवाद**—दुःखी निष्कपट उस सुतनु (दमयंती) ने कहीं रत्नों की रक्षा करते हुए, समृद्धिशाली, जा रहे जनसमूह को देखा और अपनी विपत्ति का अन्त पाया ॥५०॥

**व्याकुलयेवाऽरितया विधेर्गतिरनेन सिद्धयेऽवारि तया।**

**अपि च ययेऽवारितया यथा शफर्या जलोच्चये[1] वारितया ॥५१॥**

**अन्वयः**—विधेः अरितया व्याकुलतया इव तया गतिः अवारि। अपि च अवारितया यथा वाः इतया शफर्या (यथा) जलोच्चये (तथा) सिद्धये यये ॥५१॥

**अन्वयदीपिका**—व्याकुलेति— विधेः दैवस्य अरितया शत्रुतया व्याकुलया इव तया दमयन्त्या अनेन सार्थेन सह गतिः गमनम् अवारि वृता। अथ च अवारितया केनाप्यनिषिद्धया सत्या जनौघे समूहे यये जग्मे। यथा वाः जलम् इतया प्राप्तया शफर्या मत्स्यविशेषेण जलोच्चये गम्यते ॥५१॥

**यमकबोधिनी**—व्याकुलयेति— तदा दमयन्त्या विधेर्दैवस्य गतिः उपायः अवारि वव्रे। कस्यै? सिद्धये सिद्धयर्थम्। अपि च पुनः यये अग्रे गम्यतेऽस्मादेवोपायानां सिद्धिर्भविष्यति इत्यर्थः। नान्यथेति विचार्याऽग्रे चलितमित्यर्थः। किं लक्षणया तया? अनेन सार्थेन अरितया शत्रुत्वेन वारितया निर्वारितया अस्या आगमनेन सार्थेऽनिष्टं समजनि इति निषिद्धया। अत एव व्याकुलतया इव व्यग्रया इव। यथा दृष्टान्ते शफर्या प्रोष्ठीवावारितयाऽजलत्वेन जलोच्चये जलसमूहे गम्यते तद्वत् ॥५१॥

**दीपिका**—व्याकुलयेति- अथानन्तरं तया दमयन्त्या सिद्धये कार्यसिद्धयर्थम् अनेन सार्थेन गतिर्गमनम् अवारि स्वीकृतम्। च पुनः केनाऽप्यवारितया निषिद्धया तया जलोच्चये जलसमूहे यये जग्मे। कयेव? वाः जलम् इतया प्राप्तया शफर्या यथा प्रोष्ठीव। यथा शब्दोऽत्र इवार्थे। किम्भूतया तया? विधेर्दैवस्य अरितया शत्रुतया व्याकुलयेव दुःखितयेव ॥५१॥

---

१. शिलोच्चये इति 'ज' पुस्तके पाठः।

**सुबोधिनी**—व्याकुलेति—विधेर्दैवस्य शत्रुत्वेन व्याकुलया इव। अत्रापि विधाता शत्रुर-भूदिति उद्भ्रान्तयेव तया दमयन्त्या सिद्धये नलान्वेषणरूपकार्यस्य भीमपुरप्राप्तये वा अनेन सार्थेन गतिर्गमनम् अवारि भेजे वृता वा। वारितया का त्वं कुत्र यासि इति निवारितयापि च ययै गतम्। कया यथा ? वारितया वाः जलमितया प्राप्तया शफर्या जलोच्चये जलवृद्धौ यथा। जनोच्चये इति पाठे जनसङ्घातया ययै इत्यर्थः। अवारितयेत्यकार प्रश्लेषेऽनिषिद्धया इत्यर्थः। अवाः जलरहितं निर्जलमितया शफर्येव अहम् भवत्सङ्घे समेषामीत्युक्त्वाऽनिषिद्धयापि भैम्या गतमिति भावः। भाग्यं स्त्री नियतिर्विधिः। वृञ् सम्भक्तावित्यस्य लुङि चिण्यवारीति। या प्रापणे इत्यस्य भावे लिटि। वार्वारि सलिलं जलमित्यमरः। अत्रेयं भारतवार्ता—तत्र दृष्ट्वा च तेषां मध्ये कश्चित् शुचिनामा वणिक् का त्वं कस्यासि क्व यासि इत्याह। ततस्तया भीतया स्ववृत्तान्तं कथितम्। कुत्रापि भवद्भिर्नलो दृष्ट इति पृष्टाः न वयं नलं विद्म इत्यूचुः। ततः क्व यासीत्युक्ताः सुबाहुनामानश्चेदिराजस्य देशे वाणिज्यार्थं यास्यामः इत्यूचुः। ततः तैः सार्द्धं सापि ययाविति ॥५१ ॥

**अनुवाद**—भाग्य की शत्रुता से (उस सार्थ के साथ) वह चली और किसी के द्वारा न रोकी गई, निर्जल स्थान से मछली जिस प्रकार अगाध जल में जाती है (उसी प्रकार) सिद्धि (नल को खोजने) के लिये चल पड़ी ॥५१ ॥

**प्रतिषिद्धान्यायस्य प्रापि सुबाहोश्च राजधान्यायस्य।**

**बहुधनधान्या यस्य प्रबभुर्वृन्दानि बहुविधान्यायस्य ॥५२ ॥**

**अन्वयः**—(तया) आयस्य, प्रतिषिद्धान्यायस्य, यस्य आयस्य बहुविधानि वृन्दानि प्रबभुः (तस्य) सुबाहोः बहुधनधान्या राजधानी प्रापि ॥५२ ॥

**अन्वयदीपिका**—प्रतीति— च पुनः तया दमयन्त्या आयस्य उद्यमं कृत्वा प्रतिषिद्धः अन्यायो ऽनीतिर्येन तस्य सुबाहोः राज्ञः बहुधानधान्या राजधानी प्रापि प्राप्ता। तस्य कस्य ? यस्य सुबाहोः आयस्य शुभफलस्य वृन्दानि बहुविधानि गजाश्वरथयानादीनि प्रबभुः ॥५२ ॥

**यमकबोधिनी**—प्रतिषिद्धेति— च पुनस्तया दमयन्त्या सुबाहोः सुबाहुनामराज्ञः राजधानी चेदिपुरी प्रापि। किं कृत्वा ? आयस्य आयासं कृत्वा। किं लक्षणस्य सुबाहोः ? प्रतिषिद्धान्यायस्य प्रतिषिद्धोऽन्यायोऽनीतिर्येन स तथा तस्य। किं लक्षणा राजधानी ? बहुधनधान्या बहुविधानि द्रव्याणि धनानि ब्रीहयश्च यस्याः सा तथा। यस्य सुबाहोः आयस्य लाभस्य बहुविधानि अनेकप्रकाराणि वृन्दानि प्रबभुः शुशुभिरे ॥५२ ॥

**दीपिका**— प्रतिषिद्धेति - च पुनः तया आयस्य उद्यमं कृत्वा सुबाहोः आयस्य शुभफलस्य वृन्दानि बहुविधानि नानाप्रकारकाणि। किम्भूतस्य सुबाहोः ? प्रतिषिद्धान्यायस्य

वारितानीतिः । किम्भूता राजधानी ? बहुधनधान्या बहुविधानि धनधान्यानि यस्याः सा अतिसमृद्धियुक्ता इत्यर्थः । कीदृशस्य सुबाहोः ? यस्य आयस्य बहुविधानि वृन्दानि प्रबभुः रेजुः । बहुविधानि नानाप्रकाराणि ॥५२ ।

**सुबोधिनी**—प्रतीति- आयस्य पदगमनेन आयासं कृत्वा प्रतिषिद्धान्यायस्य प्रतिषिद्धो निराकृतोऽनीतिर्येन तादृशस्य सुबाहो सुबाहुनाम्नो राज्ञः राजधानी नगरी प्रापि च प्राप्ता । कीदृशी बहुधनधान्या बहुतरं धनधान्यं यस्याःसा । यस्य सुबाहोः आयस्य धनागमस्य बहुविधानि नाना प्रकाराणि वृन्दानि समूहाः प्रबभुः रेजिरे । एवं सार्थेन सह व्रजन्त्या भैम्या आयासेन सुबाहुनगरी प्राप्तेति भावः । प्रापेत्यापेर्लुङि चिणि प्रबभुरिति ॥५२ ॥

**अनुवाद**—उस (दमयंती) ने उद्यम पूर्वक अन्याय को रोकने वाले जिसके सौभाग्य के समूह अनेक प्रकार से सुशोभित हो रहे थे (उस) सुबाहु की धनधान्य से परिपूर्ण राजधानी को प्राप्त किया ॥५२ ॥

**सञ्छन्ना मात्रा सानन्दं राज्ञो भृता[1] च नामाऽत्रासा ।**

**शोकेनाऽमाऽत्राऽसाववसद् धृतदेहयापनामात्रासा ॥५३ ॥**

**अन्वयः**—राज्ञो मात्रा सानन्दं भृता सञ्छन्ना अत्रासा धृतदेहयापनामात्रासा असौ शोकेन च अमा अत्र अवसत् ॥५३ ॥

**अन्वयदीपिका**—सञ्छन्नेति राज्ञो मात्रा सानन्दं यथा स्यात् तथा धृता असौ दमयन्ती शोकेन अमा सह अत्र पुर्याम् अवसत् । तत्र वासम् अकरोदित्यर्थः । कथं भूता दमयन्ती ? अत्रासा त्रासरहिता ॥५३ ॥[2]

**यमकबोधिनी**—सञ्छन्नेति - अथानन्तरं सा असौ दमयन्ती नाम प्रसिद्धौ तत्र अस्यां राजधान्यां शोकेन अमा सार्द्धं अवसत् उवास । राज्ञः सुबाहोर्मात्रा जनन्या सा दमयन्ती सानन्दं यथा स्यात् तथा सञ्छन्ना सती भृता पोषिता । पुनः किं लक्षणासौ ? अत्रासा त्रासरहिता त्रासो भयम् । पुनः किं लक्षणा सा ? भृतदेहयापनामात्रासा धृतशरीरनिर्वाहमात्रा भृतं देहयापनमात्रः आशो भोजनं यया सा धृतदेहयापनामात्रासा ॥५३ ॥

**दीपिका**—सञ्छन्नेति - असौ भैमी शोकेन वियोगक्लेशेन अमा सार्द्धम् अत्र अस्यां पुर्याम् अवसत् निवासं चक्रे । नामेति सम्भावनायाम् । किम्भूता सा ? सानन्दं सप्रमोदं यथा स्यात् तथा राज्ञः सुबाहोः मात्रा जनन्या सञ्छन्ना गोपिता भृता च पोषिता च । पुनः किम्भूता सा ? अत्रासा निर्भया । पुनः किम्भूता सा ? धृतदेहयापनामात्रासा धृता

१. धृता इति 'क' पुस्तके पाठः।

२. विद्यावती-धृतदेहयापनामात्रासेति नैव व्याख्यातमत्र। धृता देहयापनामात्रे देहस्य यापना रक्षणं तन्मात्रे आशा यया सा। सशयोरभेदः।

देहयापनामात्रे देहनिर्वाहमात्रे आशा यया । सशयोरभेदः । यद्वा धृतदेहयापनामात्रेति भिन्नं संशयो पदम् । सा असावित्यन्वयः ॥५३ ॥

**सुबोधिनी**—सञ्छन्नेति - असौ दमयन्ती सञ्छन्ना वपुर्मालिन्यात् दमयन्तीति ज्ञातुमशक्या राज्ञः सुबाहोः मात्रा सानन्दं यथा स्यात् एवं भृता नाम पोषिता । नाम सम्भावनायाम् । अत्र सुबाह्वन्तःपुरे अत्रासा त्रासरहिता धृतदेहयापनामात्रा धृतं देहयापना शरीर-स्थितिमात्रं यया सा तादृशी देहधारणार्थं भुङ्क्ते न तु सौख्यार्थमिति भावः । शोकेन अमा शोकसहिता सा भैमी अवसद् वासमकरोत् । यद्वा धृतदेहनिर्वाहमात्रे आशा ययेति सा धृतदेहयापनामात्राशेत्येकं पदम् । अत्र पक्षे यमके शसयोरभेदो न दोषाय । यमकश्लेषचित्रेषु रलयोर्डलयोर्नभित् । नानुस्वारविसर्गौ च चित्रभङ्गाय सम्मतौ इतिवत् असौ दमयन्ती सुबाहुमात्रा दमयन्तीत्यनभिज्ञाय सानन्दमपुषत् । सा च शरीररक्षामात्राहाराऽभूदिति भावः । अवसदिति वसेर्लङि । अत्रेयं भारतवार्ता सायाह्ने भैमी वणिग्भिः सार्द्धं सुबाहुनगरं प्राप्ता । अथ प्रासादस्था राजमाता तां दृष्टवा धात्रीद्वारा स्वसमीपमानीय का त्वमिति प्रोवाच । ततः दमयन्त्याः परिचारिकाऽहमिति भैम्याह । राजामातोवाच अत्र तिष्ठ । भैमी निर्बन्धं चकार पादसेवनमुच्छिष्टफेटनं न करिष्यामीति ॥५३ ॥

**अनुवाद**—राजमाता के द्वारा सानन्द स्वीकार की गई वह पहचान मे न आने वाली दमयंती देह की रक्षा मात्र में आशा रखती हुई शोकपूर्वक यहां रही ॥५३ ॥

**पदाऽपदा परिभ्रामन्नयेनयाऽऽपदाऽपदा ॥**

**वनावनावनाथवत् सजीवनावनाऽभवत्[1] ॥५४ ॥**

**अन्वयः**—या अपदा अयेन आपदा वनावनौ अनाथवत् पदा परिभ्रमम् आपत् (सा) सजी-वनावना अभवत् ॥५४ ॥

**अन्वयदीपिका**—अयेनेति-अपदा अस्थाना या भैमी वने स्थानं न तादृशी सती अयेन दैवेन आपदा विपत्त्या कृत्वा वनावनौ वनभूमौ पदा चरणेन परिभ्रमम् आपत् प्राप । सा भैमी अनाथवत् नाथः स्वामी तेन रहिता या स्त्री तद्वत्[2] ॥५४ ॥

**॥इति नृसिंहाश्रमविरचितायां नलोदयटीकायामन्वयदीपिकायां तृतीय उल्लासः ।।**

---

१. क. अयेन या पदापदा पदापदा परिभ्रमम् इति 'क' पुस्तके द्वितीयचरणस्य प्रथमचरणत्वेन पाठः ।'ग' पुस्तकेऽपि तथैव ।
ख. भयेन याऽऽपदापदा पदापदा परिभ्रमम् ।
अभूत् सजीवनावना वनावनावनाथवत् ॥ इति 'ञ' पुस्तके पाठः ।

२. विद्यावती-सजीवनावना जीवनस्य अवनं रक्षणं तेन सहिता अभवत् अभूत् । जीवनरक्षणसहिता सञ्जातेत्यर्थः ॥

**यमकबोधिनी**—अयेनेति[१]—सा दमयन्ती अनाथवत् भर्तृरहितावदभवत् । सा का ? या अयेन दैवेन अपदा अस्थाना । किं लक्षणा सा ? या सजीवनावना जीवनस्य अवनं रक्षणं तेन सह वर्तमाना । पुन: किं लक्षणा सा ? या वनावना वनं तोयम् अवनं रक्षणं यस्या: सा वनावना । सा का ? या आपदा विपत्त्या सह अभूत् । या वनावनौ अरण्यभूमौ पदा चरणेन परिभ्रमम् आप तथा सती । किं लक्षणा ? या अपदा भयवती । अपदा अस्थाना । पुन: किं लक्षणा ? नयेन नीत्या उपलक्षिता ॥५४ ॥

**इति रामऋटषिश्चक्रे महाकाव्ये नलोदये ।**

**आश्वासस्य तृतीयस्य टीकां यमकबोधिनीम् ॥**

**॥ इति श्रमद्रामऋटषिविरचितायां यमकबोधिन्यां श्रीरविदेवविरचितमहाकाव्यनलोदयटीकायां दमयन्तीविलापो नाम तृतीय आश्वास: ॥**

**दीपिका**—पदापदेति — सा भैमी नवीनया व्यग्रया आपदा विपदा चरणेन भ्रमं परिभ्रमं भ्रमणम् आपत् प्राप । वनावनौ विपिनभूमौ अनाथवत् मात्रा रहिता स्त्रीव च अभूत् बभूव । किम्भूता ? अपदा न विद्यते पदं स्थानं यस्या: सा । पुन: सजीवनावना जीवनस्य प्राणस्य अवनं रक्षणं यस्या: सा तथा ॥५४ ॥

**॥इति श्रीमदात्रेयगोविन्दभट्टविरचितायां नलोदयदीपिकायां तृतीय आश्वास: ॥**

**सुबोधिनी**—अपदेति — अपदा अत्राणा अस्थाना वा या दमयन्ती नयेन नीत्या कृत्वा अपदा विपत्त्या पदा चरणेन वनावनौ वनभूमौ अनाथत् परिभ्रमं पर्यटनमापल्लेभे । सा सजीवनावना जीवनं तस्यावनं रक्षणं प्रापेति भाव: । पादाङ्घ्रिश्चरणोऽस्त्रियाम् । आपदित्यापेर्लुङि । विपत्यां विपदापदौ । अभवदिति भवतेर्लङि ॥५४ ॥

**॥'इति श्रीनलोदयटीकायां सुबोधिन्यां तृतीय उच्छ्वास:' ॥**

**अनुवाद**—जो (दमयन्ती) भाग्य से प्राप्त विपत्ति के कारण वनभूमि में अनाथ की तरह पैदल भटकी (वह सुबाहु की नगरी पाकर) जीवन की रक्षा से युक्त हो गई ॥५४ ॥

---

१. 'घ' पुस्तके टीकायामस्यामपि पदापदा इत्येव प्रथमचरणतया पठितम् ॥

# चतुर्थ उल्लासः

**अथ तुङ्गोपायस्य श्रवणेन नलस्य सानुगोऽपायस्य।**

**वशगा गोपा यस्य स्वमनो भीमश्चिरं जुगोपाऽऽयस्य ॥१ ॥**

**अन्वयः**—अथ तुङ्गोपायस्य यस्य गोपाः वशगाः (तस्य) नलस्य अपायस्य श्रवणेन सानुगः भीमः चिरम् आयस्य स्वमनः जुगोप ॥१ ॥

**अन्वयदीपिका**—अथेति- अथानन्तरं भीमो नाम राजा तस्य नलस्य राज्ञः अपायस्य दुःखस्य श्रवणेन चिरम् आयस्य प्रयत्नं कृत्वा सानुगः सन् स्वमनः आत्मचित्तं जुगोप ररक्ष। दुःखशमनमकरोदित्यर्थः। तस्य कस्य? तुङ्गोपायस्य तुङ्गाः उच्चाः उपायाः सामादयो यस्य। भेदो दण्डः सामदानमित्युपायचतुष्टयमित्यमरः। तादृशस्य यस्य नलस्य गोपा गां पृथ्वीं पान्ति रक्षन्ति इति गोपाः राजानः वशगाः आसन् ॥१ ॥

**यमकबोधिनी**—अथेति — अथानन्तरं भीमो दमयन्तीपिता स्वमनो निजचित्तं चिरं जुगोप ररक्ष। किं कृत्वा? आयस्य आयासं कृत्वा। केन? नलस्य अपायस्य अपगमनस्य दोषस्य वा श्रवणेन। किं लक्षणस्य नलस्य? तुङ्गोपायस्य तुङ्गाः उच्चाः उपायाः सामदानादयः यस्य स तथा तस्य। किं लक्षणो भीमः? सानुगः सपरिवारः। यस्य गोपाः भूपाः भीमस्य नलस्य वा वशगाः वशं गताः ॥१ ॥

**दीपिका**—अथेति - अथानन्तरं सानुगः सपरिकरः भीमो राजा तस्य नलस्य अपायस्य दुःखस्य श्रवणेन आयस्य अतिश्रमं कृत्वा चिरं बहुकालं स्वमनः निजचेतः जुगोप ररक्ष। कथमपि दुःखशमनमकरोदित्यर्थः। किम्भूतस्य नलस्य? तुङ्गोपायस्य तुङ्गाः उच्चाः उपायाः सामदानादयो यस्य ॥१ ॥

**सुबोधिनी**—अथेति - अथानन्तरं तुङ्गोपायस्य तुङ्गः उच्चः उपायः सामादिर्यस्य तादृशस्य चास्य नलस्य अपायस्य अपक्रमणस्य दुःखस्य वा श्रवणेन सानुगः अनुगच्छन्तीति अनुगास्तैः सहितः सानुचरः चिरं बहुकालम् आयस्य प्रयासं कृत्वा नलान्वेषणाय भीमः स्वमनः स्वस्य मानसं जुगोप रक्षितवान्। यस्य भीमस्य गोपाः गां भूमिम् पान्तीति गोपाः राजानः ग्रामौघाधिकारिणो गोपजातीया वा वशगा आयत्ताः नलापगमनं श्रुत्वा तदन्वेषणार्थं बहुधा आयस्य शोकसहितं स्वहृत् कथञ्चित् अरक्षत्। गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि। ग्रामौघाधिकृते पुंसीति मेदिनीकारः। स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु इत्यमरश्च ॥१ ॥

**अनुवाद**—तत्पश्चात् महान् उपाय वाले, राजा गण जिसकी अधीनता स्वीकार करते थे, उस नल की विपत्ति को सुनकर अनुचरों सहित भीम चिरकाल तक प्रयत्न करने के बाद अपने मन को सम्हाल पाया ॥१ ॥

**निशि च दिवा चाऽर्यस्यक्षतस्य नलविचितये[1] ऽथवाऽऽचार्यस्य ।**

**भृशमेवाऽचार्यस्य द्विजोत्तमैः शिष्यकैरिवाऽऽचार्यस्य ॥२ ॥**

**अन्वयः**—अथ अस्य अर्यस्यक्षतस्य आर्यस्य वाचा द्विजोत्तमैः आचार्यस्य शिष्यकैः इव नलविचितये निशि च दिवा च भृशम् एव अचारि ॥२ ॥

**अन्वयदीपिका**—निशीति— च पुनः अस्य आर्यस्य स्वामिनो भीमस्य वाचा आज्ञया द्विजोत्तमैः शिष्यकैः ब्राह्मणोत्तमैः इव नलविचितये नलान्वेषणाय निशि च दिवा च दिवसे च भृशमेव अत्यर्थमेव अचारि । सर्वासु दिक्षु गतमित्यर्थः । कीदृशस्य अस्य ? अर्यस्यक्षतस्य अरीणामसिभिः अक्षतस्य शत्रुशस्त्राप्रहतस्येत्यर्थः । कस्य कैरिव ? आचार्यस्य आर्यस्य शिष्यकैरिव ॥२ ॥

**यमकबोधिनी**—निशीति—अथानन्तरं यस्य आर्यस्य स्वामिनो भीमस्य वाचा गिरा द्विजोत्तमैः ब्राह्मणश्रेष्ठैः निशि रात्रौ च दिवा दिने च भृशमेव अत्यर्थम् अचारि चेरे । सर्वासु दिक्षु गतमित्यर्थः । कस्यै ? नलविचितये नलान्वेषणाय । किं लक्षणस्य आर्यस्य ? अर्यस्यक्षतस्य अरीणां शत्रूणामसयः खड्गास्तैरक्षतस्य शत्रुखड्गाऽखण्डितस्य । कैरिव ? आचार्यस्य गुरोर्वाचा शिष्यकैरिव । यथा गुरोर्वाचा शिष्यकैर्गम्यते चल्यते तद्वत् ॥२ ॥

**दीपिका**—निशि च दिवा चेति — अथानन्तरं द्विजोत्तमैः विप्रमुख्यैः आर्यस्य स्वामिनः अस्य भीमस्य वाचा वचनेन नलविचितये नलान्वेषणार्थं भृशमेव निशि च रात्रौ च दिवा च दिवसे च अचारि गतमित्यर्थः । कस्य वाचा कैरिव ? आचार्यस्य गुरोः वाचा शिष्यकैरिव शिष्यैरिव । किम्भूतस्यास्य ? अर्यस्यक्षतस्य शत्रुखड्गानाहतस्य ॥२ ॥

**सुबोधिनी**—निशीति— अस्य भीमस्य वाचा वचनेन द्विजोत्तमैः ब्राह्मणश्रेष्ठैः नलविचिन्तये नलान्वेषणाय निशि रात्रौ दिवा च दिवसे च भृशमेव अत्यर्थमेव अचारि नानादेशसञ्चरणमकारि । कीदृशस्यास्य ? अर्यस्यक्षतस्य ? अरेः असयः तैः शत्रुखड्गैरताडितस्य । एवमार्यस्य श्रेष्ठस्य आर्यस्य गुरोर्वचसा शिष्यकैरिव स्वार्थे कः । शिष्या यथा गुरोराज्ञयाऽहर्निशं सञ्चिन्तयन्ति तथेत्यर्थः ॥२ ॥

**अनुवाद**—शत्रुओं के खड्गों से अनाहत इस स्वामी (भीम) की आज्ञा से ब्राह्मणों ने आचार्य की आज्ञा से शिष्य की भांति नल को खोजने के लिये समस्त दिशाओं में संचरण किया ॥२ ॥

---

१. विचिन्तये इति च पुस्तके पाठः ।

**अथ नयनेत्रा सादिप्रचुरा पूः केनचिज्जनेऽत्रासादि।**

**यत्र सुनेत्रा सा दिग्भ्रमेण[१] दुःखं गता वने त्रासादि ॥३ ॥**

**अन्वयः**—अथ अत्र जने केनचित् नयनेत्रा सादिप्रचुरा पूः असादि। यत्र वने सा सुनेत्रा दिग्भ्रमेण त्रासादि दुःखं गता (तिष्ठति) ॥३ ॥

**अन्वयदीपिका**—अथेति— अथानन्तरम् अत्र जने नलान्वेषणकारिद्विजसमूहे नयनेत्रा नयस्य नेता तेन नीति निपुणेनेत्यर्थः। केनचिद् द्विजेन सादिप्रचुरा सादिनः प्रचुराः यस्यां सा पूः सुबाहुनगरी असादि प्राप्ता। सा का? वने त्रासादि दुःखं गता प्राप्ता सा सुनेत्रा भैमी दिग्भ्रमेण दिक्षु भ्रमः दिग्भ्रमः तेन यत्र यस्यां पुरि तिष्ठतीति शेषः ॥३ ॥

**यमकबोधिनी**—अथेति— अथानन्तरम् अत्रास्मिन् जने ब्राह्मणलोके केनचिद् विप्रेण सा पूः सुबाहुनगरी असादि प्रापि। किं लक्षणा पूः? नयनेत्रा न्यायलोचना। अथवा नयो नीतिर्नेत्रं वस्त्रं यस्याः सा तथा। स्याज्जटांशुकयोर्नेत्रमित्यमरः। नेत्रं वस्त्रविशेषः। स्यान्नेत्रं चक्षुरुदाहृतं परिवर्तगुणो नेत्रं कस्तूरिकामृग इत्यनेकार्थत्वाच्च। ध्वनिमञ्जरी च। किं लक्षणेन? केनचित् नयनेत्रा नयस्य नेता तेन नीतिनिपुणेन। च पुनः किं लक्षणा पूः? सादिप्रचुरा अश्वबहुला। यत्र यस्यां नगर्यां सा प्रसिद्धा सुनेत्रा सुलोचना दमयन्ती वने अरण्ये दिग्भ्रमेण दिक्षुपादविक्षेपेण सति त्रासादि भयादि दुःखं यता गता वेति ॥३ ॥

**सुबोधिनी**—अथेति— अथानन्तरं अत्र जने विषये केनचिदनिर्वचनीयचतुरेण सुदेवनाम्ना द्विजेन नयनेत्रा नीतिनिपुणेन सादिप्रचुरा सादिनोऽश्ववराः प्रचुराः यस्यां सा पूः असादि प्राप्ता। सा का? यत्र पुरि सा सुनेत्रा भैमी वर्तत इति शेषः। कीदृशी सा? वने दिग्भ्रमेण दिग्भ्रान्त्या त्रासादि त्रासपूर्वकं दुःखं गता प्राप्ता। दिग्भ्रमेणेत्यत्र 'आदिक्रान्त्या' इति पाठे यत्र पुरि आदिक्रान्ताय प्रथमप्रवेशेन जने लोके त्रासादि भवति। यत्र पुरि वने दुःखं गता सा सुनेत्रा आसीदित्यर्थः ॥३ ॥

**अनुवाद**—तत्पश्चात् नल को खोजने वाले ब्राह्मणसमूह के निर्देशक किसी नीतिविज्ञ ने अत्यधिक घोड़ों से युक्त पुरी को प्राप्त किया। जहां वन में त्रासादि दुःखों से व्याकुल सुन्दर नेत्रों वाली वह दमयन्ती दिशाओं में भटकती हुई आ पहुंची थी ॥३ ॥

**सह दीनाऽऽयत तेन स्वगृहं[२] भैमी ययेऽमुनाऽऽयततेन।**

**स्वनयेनाऽयततेनप्राप्त्यै स्वासोऽश्च शोभनायतते न ॥४ ॥**

**अन्वयः**—तेन सह दीना भैमी आयत। आयततेन अमुना शोभनायतते च सा स्वगृहं यये। स्वनयेन इनप्राप्त्यै अयतत न स्वाऽसोः ॥४ ॥

---

१. दिक्क्रमेण इति 'ञ' पुस्तके।

२. स्वगृहे इति 'क' पुस्तके।

**अन्वयदीपिका**—सहेति— दीना भैमी आयततेन आयः क्षेत्रवस्त्वादिलाभः तेन ततः पूर्णः तेन द्विजेन सह आयत आगता। इनस्य स्वामिनः प्राप्त्यै लाभाय अयतत। स्वासोः स्वप्राणस्य रक्षणार्थं न अयतत। च पुनः शोभनायतते शोभनोऽयः भाग्यं यस्य तेन ततं पूर्णम् तस्मिन् अमुना द्विजेन सह स्वगृहे यये ॥४॥

**यमकबोधिनी**—सहेति- अमुना ब्राह्मणेन भैम्या दमयन्त्या सह स्वगृहं यये गम्यते स्म्। किं लक्षणेन अमुना ? आयततेन लाभविस्तृतेन सुबाहुना अत्यादरेण पूजितत्वात्। दीना दमयन्ती स्वनयेन निजनीत्या इनप्राप्त्यै स्वामिप्राप्त्यै अयतत यतते स्म। किं लक्षणेन स्वनयेन? आयततेन शुभावहविधिविस्तीर्णेन। पुनः किं लक्षणेन स्वनयेन? शोभनायततेन शोभना आयतता दीर्घता यस्य तथा तेन। च पुनः स्वासोः निजप्राणस्य प्राप्त्यै अयतत यत्नमकरोदित्यर्थः। नलागमनेनैव प्राणप्राप्तिः 'सह दीनाऽयततेन स्वगृहं भैम्या ययेऽमुनायततेन, स्वनयेनायततेन प्राप्त्यै स्वासोश्च शोभना यतते न' पदैः कृत्वाऽस्मिन् श्लोके भेदोऽस्ति। अथवा भैम्या तेन अमुना विप्रेण सह स्वगृहं यये। किं लक्षणेन तेन ? आयततेन लाभविस्तृतेन। दीना दमयन्ती इनप्राप्त्यै आयत अगच्छत्। स्वगृहमित्यस्यानुषङ्गः। अयतत प्रयत्नं वाकरोत्। स्वनयेन च पुनः स्वासोः निजप्राणस्य न यते न यतते। अर्थवशान्निजप्राणस्य प्राप्त्यै प्रयत्नं करोतीत्यर्थः। किं लक्षणा दमयन्ती ? शोभना। अथवा भैमी दमयन्ती तेन विप्रेण सह स्वगृहम् आयत आगता। अमुना विप्रेण भैम्या सह यये। तस्याः गृहमिति शेषः। अन्यत् तथैव ॥४॥

**दीपिका**—सह दीनेति— दीना दुःखिता भैमी तेन ब्राह्मणेन सह स्वगृहं निजगेहम् आयत आजगाम। अमुना द्विजेन भैम्या सह यये गतम्। तद्गृहमिति शेषः। च पुनः सा भैमी ततेन विस्तृतेन स्वनयेन आयत। तेन प्राप्त्यै आयो द्रव्यादिलाभः तेन तताः पूर्णाः आयताः तेषामिनः स्वामी नलः तस्य प्राप्त्यै यतते स्म प्रयत्नं करोति स्म। स्वासोः निजप्राणस्य शोभनाय रक्षणाय न यतते न यत्नं चकारेत्यर्थः ॥४॥

**सुबोधिनी**—सहेति-दीना दुःखिता भैमी तेन द्विजेन सह स्वगृहम् आयत गतवती। चेदिपुरीनिलयं ब्राह्मणं गृहीत्वा स्ववासस्थाने गतवती। आयततेन धनागमव्याप्तेन अमुना द्विजेन भैम्या यये भीमगृहम्प्रतीति शेषः। चेदिराजदत्तधनवता द्विजेन सह भैमी भीम गृहमगादिति भावः यद्वा नलान्वेषणाय भीमदत्तबहुधनवता विप्रेण भैम्या चेदिगृहं यये इत्यर्थः। शोभना सा भैमी स्वनयेन स्वनीत्या आयततेन प्राप्त्यै आयः शुभावहविधिस्तेन ततो व्याप्तो य इनः स्वामी नलस्तस्य प्राप्त्यै यतते स्म यत्नमकरोत्। स्वासोः स्वकीयप्राणस्य प्राप्त्यै न यतते स्म। अत्रेयं भारतवार्ता सुनन्दाऽन्तः पुरे समागतं सुदेवं ब्राह्मणं दृष्टवा दमयन्ती रुरोद। सुदेव उवाच-अहं तव भ्रातुःसखा सुदेवनामा भीमवचनात् त्वामन्वेष्टुमागतः। तव बान्धवास्त्वां विना मृता इव तिष्ठन्ति। ततो राजमातरं सर्ववृत्तान्तमकथयत्। सुबाहुमाता च नलपत्नीं दमयन्तीं ज्ञात्वा आलिङ्ग्य सान्त्वयामास। सुनन्दा तु निश्चयार्थं तस्याः गात्रमलं

दूरीकृत्य शिरसि अर्द्धचन्द्राकारं जरुडलाञ्छनं ददर्श। तच्चिह्नेन सुदृढं ज्ञात्वा मम भगिन्याः कन्या त्वमित्युक्त्वा राजमाताऽलङ्कृत्य सुदेवेन च सहिता दमयन्ती पितृगृहं प्रापयत्। तत्र सा पुत्रादिभिः सह युयोज। भीमश्च सुदेवाय पुनः पुनः प्रणामं कृत्वा बहुधनानि ददौ। ततो नलान्वेषणार्थं पुनः ब्राह्मणान् प्रेषयामास इति ॥४॥

**अनुवाद**—उसके साथ बेचारी दमयन्ती आ गई। लाभ आदि से पूर्ण इस (ब्राह्मण) के साथ वह सौभाग्य से पूर्ण अपने (पिता भीम के) घर गई। इसने अपनी नीति से स्वामी की प्राप्ति के लिये उपाय किया अपने प्राणों (की रक्षा) के लिये नहीं ॥४॥

युग्मकम्-

**वसनांशस्य स्तेन[१] क्वाऽसि ममाऽयं विधिर्यशस्यस्ते न।**
**छद्म विशस्यस्तेन स्वजनेन भृतेन भवसि शस्यस्तेन ॥५॥**
**स जनस्तेऽनागा दिक्क्रामीति जनेन तन्मतेनाऽगादि।**
**भर्तृकृते नागादिस्यदेन भुवि [२]वस्तूपसृतेनाऽगादि ॥६॥**

**अन्वयः**—तन्मतेन नागादिस्यदेन उपसृतेन जनेन इति वस्तु अगादि-वसनांशस्य स्तेन क्व असि? मम अयं विधिः यशस्यः न, स्वजनेन अस्तेन छद्म विशसि। भृतेन तेन शस्यः भवसि। ते स जनः अनागाः भर्तृकृते भुवि दिक्क्रामी इति ॥५-६॥

**अन्वयदीपिका**—वसनेतिं स इति युग्मकम्। तन्मतेन तस्याः भैम्याः मतेन जनेन ब्राह्मणेन इति अगादि उक्तम्। किम्? वसनांशस्य स्तेन चौर क्वासि क्व वर्तसे। अयं मम त्यागादिलक्षणो विधिः ते तव यशस्यो यशःप्रदो न। स्वजनेन मल्लक्षणेन अस्तेन त्यक्तेन हेतुना छद्म विशसि प्रविशसि। भृतेन पोषितेन तेन शस्यः प्रशस्यः भवसि। दिक्क्रामी तवावलोकनार्थं दिशः क्रामतीति दिक्क्रामी स जनः मल्लक्षणः अनागाः निरपराधः। कथं भूतेन जनेन? वस्तूपसृतेन आगतेन। पुनः कथं भूतेन? नागादिस्यदेन नागान् अत्तीति नागादी तद्वत् स्यदो गमनं यस्य तेन गरुडगतिना ॥५-६॥

**यमकबोधिनी**—वसनांशस्येति[३]— हे मम वसनांशस्य स्तेन! वसनस्य वस्त्रस्य अंशः खण्डः तस्य चौर! त्वं क्वासि। अयं मत्त्यागलक्षणो विधिस्ते तव यशस्यो न यशसे अर्हः यशस्याः। वस्त्रार्द्धहरणं मत्त्यागलक्षणश्च यशःकरोविधिर्न। त्वम् अस्तेन क्षिप्तेन त्यक्तेन स्वजनेन मल्लक्षणेन करणेन छद्म कपटं विशसि कपटवान् भवसीत्यर्थः। तेन स्वजनेन भृतेन पोषितेन शस्यःप्रसंशनीयः स्तुत्यो भवसि। कीर्तिं प्राप्स्यसि इत्यर्थः ॥५॥ स इति – तेन जनेन विप्रजनेन स जनो बाहुकसंज्ञो नलः इति

१. स्तेनः इति 'ञ' पुस्तके।
२. परिहृतेन इति 'ग' 'घ' 'च' 'छ' पुस्तकेषु। परिद्रुते इति 'ङ' पुस्तके।
३. नहि यमकबोधिन्यामनयोः (५-६) श्लोकयोः युग्मकत्वं निर्दिष्टम्।

पूर्वश्लोकोक्तप्रकारेण अगादि उक्तः । कीदृशेन तेन ? तन्मतेन तस्याः दमयन्त्याः मतस्तेन । किं लक्षणः सः ? अगादिक्रामी अगः पर्वत आदिर्यस्य स अगादिस्तं क्रमते इत्येवं शीलः अगादिक्रामी पर्वताद्युल्लङ्घी ।किं लक्षणेन जनेन ? विप्रलक्षणेन नागादिस्यदेन नाग आदिर्येषां तानि नागादीनि तेषां स्यदो वेगस्तेन। हस्तिवाजिप्रभृतिवेगेन परिहृतेन व्यतिरिक्तेन रहितेनेत्यर्थः। पद्भ्यामेव अटनशालिनेत्यर्थः । यत् भुवि पृथिव्याम् अगादिर्वस्तु भर्तृकृते स्वामिकृते । अगं स्थावरं वृक्षतृणादि अत्तुं शीलमस्येति तत्तथा । हस्तितुरगाद्यारूढा अटन्ति न हता इत्यर्थः । यतः इत्यध्याहार्यम् ।६ ॥

**दीपिका**—वसनांशस्येति स्वजनेति युग्मकम्— हे वसनांशस्य स्तेन वस्त्रखण्डस्य चौर ! क्वासि क्व तिष्ठसि । ममाऽयं त्यागरूपो विधिः ते यशस्यो न भवति । कीर्तिप्रदो नास्ति । अस्तेन त्यक्तेन स्वजनेन मल्लक्षणेन छद्म विशसि निन्दां प्राप्स्यसि। अप्रोषितेन स्वजनेन भृतेन पोषितेन हेतुना यशस्यो भवसि स्तुत्योऽसि । दिक्क्रामी तवावलोकनार्थं दिक्षु परिभ्रान्तः स्वजनः आत्मीयजनः अनागाः निरपराधी । वर्तते इति शेषः । तन्मतेन तस्याः दमयन्त्याः सम्मतेन गुप्ततया प्रेरितजनेन द्विजसमूहेन इति पद्यद्वयमगादि सर्वत्र कथितम् । किम्भूतेन जनेन ? भर्तृकृतेन नलान्वेषणार्थं भुवि अगादि पर्वतादिवस्तुपरिहृतेन अटता। पुनः किम्भूतेन जनेन ? नागादिस्यदेन नागान् अत्तीति नागदिर्गरुडः तद्वत्स्यदो गतिर्यस्य सः तेन ॥५-६ ॥

**सुबोधिनी**—नयमेवाह[१]- वसनेति वसनांशस्य वस्त्रखण्डस्य स्तेन चौर नल त्वं क्वासि ? मम दमयन्त्या अयं विधिः वनागमनादिस्ते यशस्यो न यशसे न। हे प्रिय ! अस्तेन त्यक्तेन स्वजनेन स्वबन्धुना कृत्वा छद्म कपटं विशसि प्राप्नोसि । भृतेन पालितेन तेन स्वजनेन शस्यः स्तुत्यो भवसि । स्वबन्धुपालनेन कीर्तेरुदयस्तत्तु त्वया कृतमिति भावः ॥५ ॥ सजनेति-अगादिक्रामी पर्वतादिक्रमणशीलः स जनः प्रैष्यजनः भर्तृकृते नलार्थे तन्मतेन भैम्या ज्ञप्तेन केनचिदन्तःपुरचारिणा जनेन इति पूर्वोक्तश्लोकोक्तिप्रकारेण अगादि उक्तः। तथा चास्य पूर्वोक्तश्लोकस्यार्थं ज्ञात्वोत्तरं यो ददाति तदागत्य कथयेत्युक्तः। ततस्तेन जनेन प्रेष्यलोकेन नागादिस्यदेन नागं सर्पमत्तीति नागादी गरुडस्तद्वत् स्यदो वेगो यस्य तेन-वस्तुपरिहृतेन नागरीयवस्तुत्यक्तवता छद्मचारिणा इत्यर्थः । भुवि भूमौ अगादि । पूर्वोक्तश्लोकस्य कोऽर्थ इति अवादि । स प्रेष्यलोको दमयन्त्यनुमतेन केनाप्यन्तः-पुरचारिणोक्तः एतदभिज्ञानेन नलस्येति दमयन्त्यैव ग्राहितसंज्ञः नलान्वेषणाय श्लोकार्थं पृच्छन् पर्यचरदिति भावः। रंहस्तरसी तुरयः स्यदः। शैलवृक्षौ नगावगवित्यमरः ॥६ ॥

---

१. अत्रापि नानयोर्युग्मकत्वमुक्तम् ।

**अनुवाद**—भैमी के अनुसार गरुड़ के समान गति से आये हुए व्यक्ति (अन्त: पुरचारी) ने यह बात कही - वस्त्रखंड के चौर ! तुम कहां हो ? मेरी यह विधि (मुझे त्याग कर चले जाना तुम्हें) यशदायक नहीं होगी । स्वजनों को त्यागने से छल में प्रवेश करोगे । उनके भरण से यश प्राप्त करोगे । तुम्हारे वे निरपराध लोग (दमयन्ती) अपने भर्ता (नल) के लिये पृथ्वी और दिशाओं को पार करने वाले हैं ॥५-६ ॥

**कोऽप्यूचे तनयायाः पदमेत्य नृपस्य[१] तेषु चेतनयायाः ।**

**भीर्मुञ्चेत न यायादर्तिस्त्वां दुस्सहा च चेतनया या ॥७ ॥**

**अन्वयः**—तेषु कोऽपि इतनयायाः नृपस्य तनयायाः पदमेत्य ऊचे — त्वां चेतनया या दुस्सहा भीः (सा) मुञ्चेत अर्तिश्च न यायात् ॥७ ॥

**अन्वयदीपिका**—कोऽपीति — तेषु नलान्वेषणाय प्रेषितेषु मध्ये कोऽपि इतनयायाः इतः प्राप्तः नयः नीतिः यया तस्याः प्राप्तशीलाया नृपस्य तनयायाः दमयन्त्याः पदं स्थानम् एत्य ऊचे जगदे । किमूचे इत्याह - हे दमयन्ति ! भीः भयं त्वां मुञ्चेत त्यजेत् । अर्तिः या चेतनया दुःप्रसहा सा त्वां न यायात् न प्राप्नुयात् ॥७ ॥

**यमकबोधिनी**—क इति-तेषु च विप्रेषु कोऽपि विप्र ऊचे । किं कृत्वा ? नृपस्य भीमस्य तनयाया दमयन्त्याः पदं स्थानम् एत्य आगत्य । किं लक्षणायाः दमयन्त्याः ? इतनयायाः प्राप्तनीतेः किमूचे तदाह हे भैमि ! भयं त्वां मुञ्चेत । सा अर्तिश्च त्वां न यायात् मा प्राप्नोतु । सा का ? या अर्तिश्चेतनया दुस्सहा बुद्धया न सोढुं शक्या इत्यर्थः । मतिर्मनीषा बुद्धिर्धी धिषणा ज्ञप्तिश्चेतना इति कोषान्तरात् । अर्तिः पीडा-धनुष्कोट्योरित्यमरः ॥७ ॥

**दीपिका**—कोऽप्यूचे इति— च पुनः तेषु नलावलोकनाय प्रेरितेषु कोऽपि द्विजः नृपस्य तनयायाः भैम्याः पदं स्थानमेत्य प्राप्य ऊचे अब्रवीत् । किम्भूतायास्तनयाया ? इतनयायाः प्राप्तनीतेः । किमब्रवीत् तत्राह हे भैमी भीर्भयं त्वां मुञ्चेत त्यजेत् च पुनः स अर्तिः पीडा न यायात् न प्राप्नुयात् । सा का ? या चेतनया अन्तः करणेन दुस्सहा सोढुम् अशक्या ॥७ ॥

**सुबोधिनी**—कोऽप्यूच इति—तेष्वन्वेकेषु मध्ये कोऽप्यन्वेषकजनः इतनयायाः इतः प्राप्तो ज्ञातो वा नयो यया तादृश्याः ज्ञातनीतेर्नृपस्य भीमस्य तनयायाः स्थानमेत्य ऊचे उक्तवान् । हे दमयन्ति । त्वां भीर्भयं मुञ्चेत त्यजेत् । आर्तिः पीडा च न यायान्न गच्छेत् । भयमर्तिश्च न भविष्यतीति भावः । या अर्तिः चेतनया बुद्धया दुस्सहा सोढुमशक्या । हे दमयन्ति । त्वां भयं पीडा च हास्यति । नलो मया लक्षित इति अवोचदिति भावः । पदं न्यवसितित्राणस्थानलक्ष्म्याङ्घ्रिवस्तुषु । भीतिर्भीसाध्वसं भयम् । मुच्लृ मोक्षणे इत्यस्यात्मनेपदे शे मुचादीनामिति मुमि मुञ्चेति रूपम् ।

१. नृपस्थ पदमेत्य इति 'ञ' पुस्तके पाठः

मतिर्मनीषा बुद्धिर्धी धिषणा ज्ञप्तिचेतनेति हेमचन्द्रः। आर्तिः पीडा धनुष्कोट्योरित्यमरः ॥७ ॥

**अनुवाद**—नल को खोजने के लिये भेजे गये ब्राह्मणों में से कोई नीति तत्वों को जानने वाली उस राजा (भीम) की पुत्री (दमयंती) के पास जाकर बोला तुम्हें भय छोड़ दे और चेतना से दुस्सह पीड़ा भी न आये ॥७ ॥

**निजधामेतं समयामृतुपर्णं[1] श्रावितोऽर्थमेतं स मया।**

**सचिवसमेतं समया गिरोत्तरं नाऽजनिष्ट मे तं समया ॥८ ॥**

**अन्वयः**—निजधाम इतं समया सचिवसमेतं च ऋतुपर्णं समयाम्। सः मया एतम् अर्थं श्रावितः। समया गिरा मे तम् उत्तरं न अजनिष्ट ॥८ ॥

**अन्वयदीपिका**—निजेति-निजधाम इतं प्राप्तम् अयोध्यायां स्थितमित्यर्थः। पुनः समनन्तरं सचिवसमेतम् ऋतुपर्णम् अहं समयां सङ्गतोऽस्मि। तदनन्तरं स ऋतुपर्णः मया एतम् अर्थं त्वदुक्तवचनं श्रावितः। तं समया तस्य समीपे समया समीचीनया गिरा मे मम उत्तरं न अजनिष्ट न जातमित्यर्थः ॥८ ॥

**यमकबोधिनी**—निजधामेति —अहम् ऋतुपर्णनामानं राजानं समयाम् अगच्छम्। किं लक्षणम् ऋतुपर्णम्? निजधाम स्वगृहम् इतं प्राप्तम्। स च ऋतुपर्णः मया तं त्वदुपदिष्टं वसनांशस्य स्तेनेत्यादि श्रावितः। पुनः किं लक्षणम् ऋतुपर्णम्? सचिवसमेतम्। मन्त्रियुक्तम्। परं तं राजानं समया इति कोऽर्थः तस्य समीपे समानया गिरा वाण्या मे मम उत्तरं न अजनिष्ट न जातम्। तस्य समीपे मम वाण्या सदृशमुत्तरं कोऽपि न दत्तवानित्यर्थः ॥८ ॥

**दीपिका**—निजधामेति- द्विजो वदति - अहम् ऋतुपर्णनामराजानं समयाम् अगच्छम्। मया स राजा तदर्थं श्रावितः श्रवणं कारितः। तं समया तस्य समीपे कोऽप्यमात्यादिलक्षणो जनः मम समया तुल्यया गिरा उत्तरं न अजनिष्ट प्रत्युत्तरं न दत्तवान्। किम्भूतं तम्? निजधाम निजस्थानम् अयोध्यामितं प्राप्तम्। पुनः किम्भूतम्? सचिवसमेतम् अमात्यसहितम् ॥८ ॥

**सुबोधिनी**—निजेति- हे दमयन्ति! निजधमेतं निजस्थानमयोध्या तत्रेतं तत्र स्थितम्। अयोध्याधीशम् ऋतुपर्णनामानं राजानं समयां समागतः। स च मया एनं वसनस्तेनेत्यादि रूपमर्थं वाच्यः सश्रीकया समया अनतिनिम्ना तया गिरा वाचा आश्रावितः। सचिवसमेतं मन्त्रिसमेतं तथा मेतं मां लक्ष्मीम् इतं प्राप्तम् ऋतुपर्णसमया मन्त्रिसहितस्य ऋतुपर्णस्य समीपे उत्तरं च नावाप्तमित्यर्थः। अभितः परितः समयेति द्वितीया। ऋतुपर्णमिति मन्त्रीसचिवोऽमात्यः। समयामिति यातेर्लङि।

१. ऋतपर्णमिति 'ञ' पुस्तके पाठः।

समयान्तिकमध्ययोरिति मेदिनीकारः। अजिनिष्टेति दीपजनेत्यादिना चिण् तद्विकल्पे रूपम् ॥।८ ॥

**अनुवाद**—अपने भवन में सचिवों के साथ बैठे ऋतुपर्ण के पास में गया और उसे यह अर्थ (वसनांशस्य स्तेन आदि पूर्वोक्त श्लोक) सुनाया किन्तु उससे कोई उत्तर नहीं मिला ॥८ ॥

**दीनानाऽऽयतनस्थो नानायतनक्षमोऽस्य[१] सौत्येऽधिकृतः।**

**नाऽऽनायतनयनकरो लीनानाऽऽयत नः[२] पथ्युवाचाथ रहः[३] ॥९ ॥**

**अन्वयः**—अस्य (ऋतुपर्णस्य) आयतनस्थः सौत्येऽधिकृतः नानायतनक्षमः अनायतनयनहस्तपादः नाः पथि लीनान् दीनान् नः आयत अथ रहः उवाच ॥९ ॥

**अन्वयदीपिका**—दीनेति—अस्य ऋतुपर्णस्य सौत्ये सूतस्य इदं सौत्यं तस्मिन् सौत्ये नियुक्तः आयतनस्थः ना पुरुषः नः अस्मान् आयत आजगाम। इदं वक्ष्यमाणं च उवाच। किम्भूतो ना? अनायतनयनकरः नयने च करौ चेति नयनकरं द्वन्द्वश्चेत्येकवद्‌भावः। न आयतं नयनकरं यस्य सः। कलिप्रवेशाद्विलक्षणानि अवयवानीत्यर्थः। कथं भूतान् नः? नगराद् बहिः पथि मार्गे निलीनान्। कथं भूतान्? दीनान् श्रमयुक्तान् ॥९ ॥

**यमकबोधिनी**—दीनेति—अथानन्तरम् असौ ना पुरुषः रहः रहसि एकान्ते पथि मार्गे नः अस्मान् आयत अगच्छत्। किं लक्षणो ना? नानायतनक्षमः अनेकप्रकारोद्यमसमर्थः। पुनः किं लक्षणो ना? अस्य ऋतुपर्णस्य सौत्ये सूतकर्मण्यधिकृतः दत्ताधिकारः। सारथीकृत इत्यर्थः। पुनः किं लक्षणान् नः? लीनान् प्रच्छन्नान्। किं लक्षणो ना? अनायतनयनहस्तपादः। न आयताः दीर्घा नयनहस्तपादा यस्य सः। अदीर्घनेत्रकरचरणः नलादन्यादृश इत्यर्थः ॥९ ॥

**दीपिका**—दीनेति—अस्य ऋतुपर्णस्य सौत्ये सारथिकर्मणि अधिकृतो नियुक्तः ना कश्चित् पुमान् नः अस्मान् यातः आजगाम। पुनः अवादीद् वक्ष्यमाणमुवाच। किम्भूतान् नः? दीनान् श्रमेण खिन्नान्। पुनः किम्भूतान्नः। पथि मार्गे लीनान् वर्तमानान्। किम्भूतो ना? आयतनस्थः नानाप्रयत्नसमर्थः। पुनः किम्भूतो ना? अनायतनयनहस्तपादः ह्रस्वनेत्रकरचरणः ॥९ ॥

**सुबोधिनी**—दीनेति—अथानन्तरमस्य ऋतुपर्णस्य आयतनं गृहं तत्र स्थितः सौत्ये सारथ्येऽधिकृतः अनायतनयनकरः न आयतो दीर्घः करो हस्तो यस्य तादृशः कुब्जो ना पुरुषः पथि लीनान् मार्गे लग्नान् गच्छतः नोऽस्मान् दीनान् दुःखितान् रहः विविक्ते

१. क्षमोऽयं इति 'च' पुस्तके पाठः।

२. आयतनोऽसौ इति 'ग' 'घ' पुस्तकयोः पाठः।

३. लीनानायत नः पथि नाऽनायतनयनहस्तपादोऽथ रहः इति 'ग' 'घ' 'ञ' पुस्तकेषु।

आयत अगतवान् इति उत्तरश्लोके वक्ष्यमाणम् उवाच अवादीत्। कीदृशः? नानायतनक्षमः नानाप्रयत्नसमर्थः त्वदुक्तं श्रवयित्वाऽप्राप्तोत्तरान् मार्गे गच्छतोऽस्मान् सङ्कुचितकरस्तत्सूतो रहसि एत्य इदमुवाचेति भावः। गुणवचनब्राह्मणादिभ्यः कर्मणि चेति ष्यनि। सौत्यः सूतस्त्वष्टरि सारथौ। आयत इति अय गतावित्यस्य लङि। मङ्गलानन्तरारम्भकात्स्न्र्येष्वथोऽथ। रहोऽन्तिकमुपह्वरे। यद्वा दीनानायतनस्थ इति नलविशेषणम् दीनश्चासौ अनायतनस्थः असम्यगायतनस्थश्चेति तादृशः ॥९ ॥

**अनुवाद**—ऋतुपर्ण के घर में स्थित, सूतकार्य में नियोजित अनेक उपायों को करने में सक्षम, सिकुड़े हुए हाँथ और आखों वाला पुरुष (निरुत्तर होकर) मार्गमें जा रहे थके हुए हम लोगों के पास आया और एकांत में बोला— ॥९ ॥

**दीनायाऽनायतया विवाससेऽस्मै विहीनयानाय तया।**

**न खलु धियाऽनायतया क्रोद्धव्यं[1] [2]धर्मनिश्चयानाऽऽयत या ॥१० ॥**

**अन्वयः**—तया या धर्मनिश्चयान् आयत। अनायतया धिया अनायतया विवाससे अस्मै विहीनयानाय दीनाय न खलु क्रोद्धव्यम् ॥१० ॥

**अन्वयदीपिका**—किमूचेत्याह दीनेति—खलु निश्चितं तया मत्स्वामिन्या भैम्या धिया बुद्धया अस्मै जनाय न क्रोद्धव्यं न क्रुधितव्यम्। तया कया? या भैमी कर्मनिश्चयान् कर्मविपाकान् आयत प्राप्ता। कथं भूताय? अस्मै दीनाय दुःखिताय। पुनः किं विधाय? अनायतया न आयः अनायः तस्य भावः तया विवाससे वस्त्रहीनाय। पुनः किं विधाय? विहीनयानाय। कीदृश्या तया? अनायतया नीतिदीर्घया ॥१० ॥

**यमकबोधिनी**—दीनायेति—खल्विति निश्चितम्। तया दमयन्त्या अस्मै उक्तनलाय न क्रोद्धव्यम् क्रुद्धया न भवितव्यम्। क्रुद्धयादियोगे चतुर्थी। किं लक्षणया तया? धिया अनायतया अदीर्घया। विशेषणैः क्रोधानर्हत्वं द्योतयति। किं लक्षणायास्मै? दीनाय दुःखिताय। किं लक्षणाय तस्मै? अनायतया अलाभतया विवाससे विगतं वासो वस्त्रं यस्य सः तस्मै वस्त्ररहिताय पुनः किं लक्षणाय? अस्मै विहीनयानाय विगतवाहनाय। तया कया? या दमयन्ती धर्मनिश्चयान् धर्मनिर्णयान् आयत अगच्छत् ॥१० ॥

**दीपिका**—दीनेति—तया भैम्या अनायतया स्वल्पया धिया अस्मै मल्लक्षणाय जनाय न क्रोद्धव्यम् कुपितव्यमित्यर्थः। खलु इति निश्चितम्। किम्भूतायास्मै? दीनाय दुःखिताय। पुनः किम्भूताय? अनायतया अलाभतया अपगतदैवतया वा.... कर्मविपाकान् आप प्रापत् ॥१० ॥

---

१. अस्मै विहीनयानाय तयेति 'क' पुस्तके द्वितीयपादस्य चतुर्थपादत्वेन पाठः।

२. कर्म इति 'क' पुस्तके पाठः।

**सुबोधिनी**—आगत्य किमुवाचेत्याह दीनेति— दीनाय दुःखिताय अनायतया आयो धनागमः। न आयो यस्यासौ अनायः तद्भावस्तत्ता तया धनागमरहितत्वेन विवाससे वस्त्रहीनाय तस्मै वसनस्तेनाय एवं विहीनं त्यक्तं यानं येन तादृशाय अनायतया अदीर्घया अविचारपूर्विकया बुद्ध्या तया दमयन्त्या न क्रोधव्यम्। क्रोधो न कर्तव्यः। खल्वनुनये। तया कया? धर्मनिश्चयान् या आयत गतवती। या धार्मिकी धनागमरहितत्वेन दीनाय वसनहीनाय च तया दमयन्त्या क्रोधो न करणीयः। दैववशादेतत् सर्वमभूदिति भावः। क्रुधद्रुहेति सम्प्रदानत्वाच्च ॥१० ॥

**अनुवाद**—उसे जिसने धर्म के विपरिणामों को प्राप्त किया है, को अविचार पूर्विका बुद्धि से दारिद्र्य के कारण किये गये वस्त्र राहित्य के लिये इस यान से रहित दीन के लिये क्रोध नहीं करना चाहिए ॥१० ॥

**कृतकर्माऽनेन त्वाऽगतोऽस्मि वचसेति तस्य मानेन त्वा ॥**

**वेदयमाने नत्वा विप्रे[१] च धनेषु दीयमानेनत्वा ॥११ ॥**

**अन्वयः**—तस्य अनेन वचसा मानेन तु कृतकर्मा त्वा आगतः अस्मि। च वेदयमाने विप्रे नत्वा धनेषु दीयमानेनत्वा (आसीत्) ॥११ ॥

**अन्वयदीपिका**—हे दमयन्ति! तस्य इति अनेन वचसा तु पुनः मानेन सन्तुष्टोऽहं कृतकर्मा सन् त्वा त्वाम् आगतोऽस्मि। च पुनः सा दमयन्ती विप्रे वेदयमाने सति नत्वा। विप्रायेति शेषः। धनेषु दीयमानेनत्वा दीयमामिनत्वं स्वाम्यं यया तादृशी आसीत् ॥११ ॥

**यमकबोधिनी**—कृतकर्मेति — हे भैमि! अहमिति पूर्वोक्तनलस्य उत्तरप्रदस्य पुरुषस्य वचसा त्वा इति त्वाम् आगतोऽस्मि। किं लक्षणोऽहम्? अनेन उत्तरप्रदेन पुंसा मानेन आदरेण कृत्वा कृतकर्मा कृतं कर्म मद्वचनोत्तरदानलक्षणं यस्य स तथा। च पुनः त्वं विप्रे मल्लक्षणे कार्यसाधके ब्राह्मणे धनेषु। दीयमानेनत्वा द्रव्येषु दीयमानम् इनत्वं प्रभुत्वं यया सा तथा। किं कृत्वा? नत्वा नमस्कृत्य। किम्भूते विप्रे? वेदयमाने त्वा इति त्वां ज्ञापयमाने ॥११ ॥

**दीपिका**—कृतेति- तु पुनः हे भैमी तस्य ऋतुपर्णस्य सारथ्ये वर्तमानस्य पुंसः इत्युक्तप्रकारेण अनेन मानेन सन्मानेन सन्तुष्टः सन् अहं त्वा त्वाम् आगतोऽस्मि प्राप्तोऽस्मि। किम्भूतोहम्? कृतकर्मा कृतं कार्यं कर्म येन सः। पुनः सा दमयन्ती वेदयमाने एवं निवेदयमाने विप्रे द्विजे नत्वा नमस्कृत्य धनेषु वित्तेषु दीयमानेनत्वा दीयमानम् इनत्वं यया सा एवं विधा आसीदित्यर्थः ॥११ ॥

**सुबोधिनी**—कृतेति- प्रेष्यद्विज आह दमयन्ति! मानेन प्रमाणेन सत्येन तस्य पुरुषस्य अनेन वचसा वचनेन कृतकर्मा कृतकार्योऽहं त्वा त्वां प्रत्यागतोऽस्मि। इति वेदयमाने

---

१. विप्रेति 'ञ' पुस्तके पाठः।

बोधयति द्विजे ब्राह्मणे नत्वा नमस्कृत्य धनेषु दीयमानेनत्वा दीयमानमिनत्वं स्वामित्वं यया तादृशी धनेषु दत्तस्वामित्वमासीत् इत्यर्थः। अहं तस्य पुरुषस्य वचसा कृतकृत्यस्त्वत्समीपमागत इति वदति विप्रेण नमस्कृत्य बहुधनस्वामित्वमकार्षीदित्यर्थः। इनःसूर्ये प्रभौ राज्ञि। अत्रेयं पुराणवार्ता। दमयन्ती च नाना स्तुतिं कृत्वा पर्णादनामानं ब्राह्मणम् ऋतुपर्णराजसारथिनिकटे श्लोकचतुष्टयं दत्वा प्रेषयामास। स च त्र गत्वा तस्मै श्लोकान् ददौ।

श्लोका यथा—

**क्व नु त्वं कैतवैश्छित्वा वस्त्रार्द्धं प्रस्थितो मम।**
**उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥१॥**
**सा वै यथा समादृष्टा तथास्ते त्वत्प्रतीक्षिणी।**
**दह्यमाना भृशं बाला वस्त्रार्द्धेनाभिसंवृता ॥२॥**
**अस्या रुदन्त्याः सततं तेन शोकेन पार्थिव।**
**प्रसादं कुरु वै वीर प्रीतिवाक्यं ददस्व च ॥३॥**
**मा कुरुष्व प्राणनाथ विफलं जीवनं मम॥**
**यदि तिष्ठन्न वक्तासि स्त्रीहत्या त्वामभिस्पृशेत् ॥४॥**

इति पर्णादब्राह्मणदत्तं च श्रुत्वा नलोवाच—

**क्व नु सा क्षुत्पिपासार्त्ता श्रान्ता शेते तपस्विनी।**
**स्मरन्ती तस्य मन्दस्य कं वासाद्योपतिष्ठते ॥१॥**

इति कथयित्वा श्लोकपञ्चकं प्रस्थापयामास।

**यथा वैधव्यमपि सम्प्राप्य गोपयन्ति कुलस्त्रियः।**
**आत्मानमात्मना सद्यो जितस्वर्गा न संशयः ॥२॥**
**रहिता भर्तृभिः सद्यो न क्रुद्ध्यन्ति कदाचन।**
**प्राणांश्चारित्रिकवचान् धारयन्ति कुलस्त्रियः ॥३॥**
**विषमस्थेन मूढेन परिभ्रष्टसुखेन च।**
**यत् सा तेन परित्यक्ता न तत्र क्रोद्धुमर्हसि ॥४॥**
**प्राणयात्रं परिप्रेक्षोः शकुनैर्हृतवाससः।**
**आधिभिर्हन्यमानस्य न श्यामा क्रोद्धुमर्हसि ॥५॥**

इति श्लोकपञ्चकं नीत्वा आगत्य दमयन्तीं श्रावयामास पर्णाद इति॥

**अनुवाद**—हे दमयन्ति ! उसके इस वचन के प्रमाण से कृतकार्य हो कर (मैं) तुम्हारे पास आया हूं । ऐसा बता रहे उस ब्राहमण को नमस्कार करके (दमयंतीने) उसे धनों में स्वामित्व दिया ॥११ ॥

**[१]तत्राऽपर्णाय ततः स्वनयाद् भैमी तपस्यपर्णाऽयतत ।**

**तुलितसुपर्णाय ततस्तस्याऽगमनाय [२]सर्तुपर्णाय ततः ॥१२ ॥**

**अन्वयः**—ततः सर्तुपर्णाय अपर्णाय तुलितसुपर्णाय ततः तस्य आगमनाय अपर्णा भैमी स्वनयात् तत्र ततः तपसि अयतत ॥१२ ॥

**अन्वयदीपिका**—तत्रेति-ततोऽनन्तरं सा भैमी ततः ऋतुपर्णपुरात्तस्य नलस्य आगमनाय अपर्णा[३] अयतत । स्वनयात् स्वनीतेश्च अयतत यत्नमकरोत् । कथं भूताय आगमनाय ? अपर्णाय अपगतम् ऋणम् अश्वहृदयमन्त्रोपदेशलक्षणं यस्मात् तस्मै । पुनः कथं भूताय ? तुलितसुपर्णाय तुलितो वेगेन सुपर्णो गरुडो येन तस्मै । कथं भूता सा ? मनसि चित्ते अपर्णा उमा तुल्या ॥१२ ॥

**यमकबोधिनी**—तत्रेति- ततोऽनन्तरं तत्र तस्मिन्नवसरे भैमी दमयन्ती तस्य नलस्य आगमनाय अयतत यतते स्म । कस्मात् ? नीतेः । किं लक्षणा भैमी ? अपर्णा ऋणरहिता दुःखानुभवेन भर्तुः प्राप्तानृण्या । किं लक्षणात् स्वनयात् ? आयतात् विस्तीर्णात् । किं लक्षणाय नलागमनाय ? सर्तुपर्णाय ऋतुपर्णसहिताय । पुनः किं लक्षणाय ? तुलितसुपर्णाय शीघ्रतया सदृशीकृतगरुडाय पुनः किं लक्षणा भैमी ? तपसि तपोऽतियोगे अपर्णा पार्वतीतुल्या ॥१२ ॥

**दीपिका**—तत्रापर्णायेति -ततस्तदनन्तरं भैमी ततःतस्मान्नगरात् स्वनयाद् विस्तीर्णात् कुण्डिनपुरं तस्य नलस्यागमनाय अयतत यत्नमकरोत् । किम्भूता भैमी ? तपसि तपोविधौ अपर्णाय अपगतश्च हृदयमन्त्रोपदेशलक्षणम् ऋणं यस्याः सा उमातुल्येत्यर्थ; । किम्भूताय आगमनाय ? तुलितसुपर्णाय तुलितो जितः सुपर्णो येन तत् तस्मै । पुनः किम्भूतायागमनाय ? सर्तुपर्णाय ऋतुपर्णेन सहिता ॥१२ ॥

**सुबोधिनी**—तत्रेति —तस्तदनन्तरं तत्र तस्मिन् काले ततोऽयोध्यायाः पञ्चम्यास्तसिल् । सर्तुपर्णाय ऋतुपर्णसहिताय तस्य नलस्यापर्णाय अपगतम् ऋणं यस्मिंस्तादृशाय नलप्रेरितहयानामेकदिवसे बहुयोजनाध्वलङ्घनादृणापगमः । तुलितः सुपर्णो गरुडो येन तादृशाय आगमनाय तपसि शरीरलक्षणे एक भुक्तोपवसादौ अपर्णा पार्वतीव भैमी दमयन्ती ततः स्वनयात् ततो विस्तृतो यः स्वनयः स्वनीतिस्तस्मादयतत यत्नं

---

१. अत्रापर्णेति 'ञ' पुस्तके पाठः ।

२. सर्तपर्णाय इति 'ञ' पुस्तके ।

३. विद्यावती - अपर्णा पर्णरहिता । नलप्राप्त्यर्थं भोजनादिकं सर्वं त्यक्त्वा सा प्रयत्नमकरोदिति विवक्षति ।

समास्थितः। तदनन्तरं दमयन्ती बहुविशालस्वनीतिरयोध्यातो नलस्य सर्तुपर्णस्यागमनाय यत्नं कृतवतीति भावः। स्यादृणं पर्युदञ्चनम्। ऋणमाधमर्ण्य-मिति निपातः। यती प्रयत्ने इत्यस्य लङि ॥१२॥

**अनुवाद**—ऐसा सुनते ही ऋण से रहित,वेग से गरुड़ की तुलना करने वाले ऋतुपर्ण के साथ वहां (अयोध्या) से उसके आगमन के लिये अपनी नीति से पत्तों तक को त्याग कर उस दमयंती ने प्रयास किया ॥।१२॥

**सा कृतसामाऽन्येन श्रावितवत्यमुमनन्यसामान्येन।**

**स्वं[1] रंहसा[2] मान्येन स्वयंवरं स्मरति नाञ्जसा मान्येनः ॥१३॥**

**अन्वयः**—सा कृतसामा अन्येन अनन्यसामान्येन मान्येन अमुं मानी अञ्जसा एनः न स्मरति (इति धिया) रंहसा स्वं स्वयंवरं श्रावितवती ॥१३॥

**अन्वयदीपिका**—सेति —सा दमयन्ती मान्येन अन्येन द्विजेन अमुम् ऋतुपर्णं तरसा शीघ्रं तं स्वयंवरं श्रावितवती आसीत्। कथं भूतेन द्विजेन? अनन्यसामान्येन आप्तजनेनेत्यर्थः। कथं भूता सा? कृतं साम यया। ननु पूर्वं परिणीता परिणयाय कथं प्रवृत्ता? तत्राह मानी दर्पवान् अञ्जसा एनः पापं न स्मरति। तस्मात् प्रवृत्ता इत्यर्थः ॥१३॥

**यमकबोधिनी**—सेति-सा दमयन्ती अमुम् ऋतुपर्णम् आत्मीयं स्वयंवरं श्रावितवती। किं लक्षणा सा? अन्येन ऋतुपर्णादितरेण उत्तरपदेन नललक्षणेन पुंसा कृतसामा लक्षणोपाया। किं लक्षणेन? अनन्यसामान्येन अन्यः सामान्यं सदृशं यस्य स तथा तेन। पुनः किं लक्षणेनान्येन? रंहसा एकान्तेन मान्येन पूज्येन। क्वचिन्मनसेति पाठः। ननु पुनः कथं स्वयंवर इति चेत् तत्राह? विप्रस्ततोऽञ्जसा सुखेन एनः पापं न स्मरति न चिन्तयति। किं लक्षणमेनः? अमानि अपरिमाणवत् अधिकमित्यर्थः ॥१३॥

**दीपिका**—सा कृतसामेति — सा भैमी अनेन केनचिन्मान्येन द्विजेन रंहसा एकान्तेन स्वात्मीयं स्वयंवरम् अमुम् ऋतुपर्णं श्रावितवती। श्रवणं कारितवतीआसीत्। किम्भूता सा? कृतसाम सान्त्वं वचनं यया सा। किम्भूतेनान्येन? अनन्यसामान्येन नान्यतुल्येन। ननु परिणीता परिणयाय कथं प्रवृत्ता? तत्राह - मानी दर्पवान् अञ्जसा शीघ्रम् एनः न स्मरति न जानाति ॥१३॥

**सुबोधिनी**—सा कृतेति—कृतसामा कृतं साम सान्त्वं यया तादृशी सा अनन्यसामान्येन अन्यासाधारणेन अन्येन अपरेण मान्येन पूज्येन विप्रेण अमुम् श्रावितवती। अशिश्रवत्। पूर्वपरिणीता परिणयान्तरं कर्तुं कथं प्रवृत्ता तत्राह - मानी अभिमानी

---

१. तरसा इति 'क' पुस्तके।

२. मनसा इति 'ञ' पुस्तके पाठः।

अञ्जसा झटिति एनः पापं न स्मरति। सा दमयन्ती अन्येन केनापि द्विजेन स्वं स्वयंवरमुपह्वरे ऋतुपर्णं श्रावितवती यतो मानी झटिति पापं न स्मरति। ऋतुपर्णः स्वयंवरं शीघ्रम् एष्यति तेन सह नलोऽप्यागमिष्यतीति भावः। स्राक्- झटित्यञ्जसाह्नायद्राङ्मङ्क्षुसपदि द्रुते। स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने इत्यमरः। अत्रेयं पुराणवार्ता सुदेवो यातु ऋतुपर्णं वदतु भैमी पुनः स्वयंवरं करिष्यति। स तु श्वो भावी। यदि द्रष्टुमिच्छा तदागच्छ। तच्छ्रुत्वा तन्माता तथाऽकरोत्। ऋतुपर्णोऽपि तच्छ्रुत्वा गमनं निश्चित्य नलेन परामृशत् ॥१३॥

**अनुवाद**—अपने उपायों के अनुसार उसने दूसरे अद्वितीय पूज्य (ब्राह्मण) के द्वारा इस (ऋतुपर्ण) को अपने स्वयंवर का आयोजन सुनवाया (क्योंकि) अभिमानी जल्दी पाप का स्मरण नहीं करते ॥१३॥

**[१] रहसि तदा सन्नाहस्थितः स्म स नलं युतो मुदा सन्नाह[२]।**

**श्रीस्तु मदासन्ना ह स्फुटं प्रयामो व्रजेद् व्युदासन्नाहः[३] ॥१४॥**

**अन्वयः**—तदा सन्नाहस्थितः स सन् मुदा रहसि नलमाहस्म- अहः व्युदासं न व्रजेत् स्फुटं प्रयामः (येन) श्रीस्तु मदासन्ना ह (भवेत्) ॥१४॥

**अन्वयदीपिका**—रहसीति—तदा सन्नाहस्थितः सन्नहनं सन्नाहः तस्मिन् उद्योगे स्थितः ऋतुपर्णो रहसि एकान्ते स्मरयुतः सन् नलम् आह। किमाह? दिनं व्युदासं नाशं न व्रजेत्। वयं स्फुटं प्रकटं प्रयामो व्रजामः। तदा श्रीः दमयन्ती मदासन्ना ह भवेत्। ह इति हर्षे ॥१४॥

**यमकबोधिनी**—रहसीति - स ऋतुपर्णस्तदा तस्मिन्नवसरे रहसि एकान्ते नलमाह स्म ऊचे। किं लक्षणः ?समुदा हर्षेण युतः। पुनः किं लक्षणः? सन् साधुः। पुनः किं लक्षणः सः? सन्नाहस्थितः सन्नहनं सन्नाहस्तस्मिन् स्थितः। गमनोचितवेगवानित्यर्थः। किमाह स्मेत्याह हे बाहुक! ह इति पादपूरणे। श्रीः लक्ष्मीस्तु सदा मदासन्ना सन्निकटा वर्तते। दमयन्तीस्वयंवरकारणात् वयं स्फुटं प्रकटं यथा भवति तथा प्रयामः गच्छामः। हि यतः उदासम् उदास्यते अत्रेति उदासं यथा स्यात् तथा। अहर्दिनं न व्रजेत् न गच्छेत्। उदासीनजनस्य चिन्तया दिननिर्यापनाभावात्। उदासमित्यहर्विशेषणम् वा ॥ व्युदासं वा पाठः व्युदासं नाशं न व्रजेत् ॥१४॥

**दीपिका**—रहसीति— तदा तस्मिन् समये ऋतुपर्णः रहसि एकान्ते नलमिति आह स्म अब्रवीत् - ह इति हर्षे। इति किम्? हे नल! तु पुनः यावत् अहः एतद् दिनं व्युदासं न व्रजेत् न गच्छेत् तथा प्रयामो गच्छामः। तदा स्फुटं प्रकटं स्त्री भैमी मदासन्ना भवेत्

---

१. तरसि इति 'ञ' पुस्तके पाठः।

२. स्मरयुतो नलं मुदा इति 'क' पुस्तके।

३. उदासमिति 'ग' 'घ' पुस्तकयोः।

निकटस्था भवेत् । मम हस्तगता स्यादित्यर्थः । किम्भूतः सः ? सन्नाहस्थितः सन्नहनं सन्नाहः उद्यमस्तत्र स्थितः । किं कुर्वन् ? मुदा सन्तोषेण युतः सन् युक्तः सन् । ।१४ ॥

**सुबोधिनी**—रहसीति-तदा सुदेवात् स्वयंवरवृत्तान्तकाले स सन्नाहस्थितः सन्नाहे कवचे स्थितः बद्धकवचः मुदा हर्षेण युतः रहसि एकान्ते नलमिति आह उवाच । इतीति किम् ? हे सन् ! पूज्य ! अहः दिनं व्युदासं नाशं न व्रजेत् न गच्छेत् । वयं दमयन्तीस्वयंवरे स्फुटं व्यक्तं प्रयामो गच्छामः । श्रीस्तु लक्ष्मीस्तु तद्रूपा वा मदासन्ना मदन्तिकगता भवेत् । ह सम्बोधने रहसीत्यत्र रंहसीति पाठे रंहसि चेद्धहसि चेत् तदा स्फुटं प्रयाम इत्यर्थः । क्वचित्तु द्वितीयचरणे स्मरयुतो नलं सन्नाह इति पाठस्तत्र स्मरयुतः सन् कामार्तः सन् मुदा हर्षेण नलम् आह इत्यर्थः । हे नल ! मां चेद् हरसि तदाऽद्य प्रयामो भीमपुरम् । दिवसो न नाशं व्रजेत् । अद्यैव मां नय दमयन्तीं वरितुं गन्तव्यमेवेति भावः । अस गतावित्यस्यानेकार्थत्वात् । हरसि हृञो लटि । व्रजेत् व्रजेर्लिङि । समीपे समयासन्नसन्निकृष्टं सनीडवत् ॥१४ ॥

**अनुवाद**—उस समय (स्वयंवर के लिये) सुसुज्जित ऋतुपर्ण सहर्ष नल से बोला — दिन न बीतने पाये, ऐसी तेजी से हम चलेंगे जिससे श्री (दमयंती) मेरे अधीन हो सके ॥१४ ॥

**सा वनिता बद्ध्वा नः स्वगुणैः कर्षति च के हृताः वध्वा न ।**

**[१]स महस्तावद्ध्वानः श्व इति योजनशतं मितावध्वा नः ॥१५ ॥**

**अन्वयः**—सा वनिता स्वगुणैः बद्ध्वा नः कर्षति । वध्वा के न हृताः ? स महः तावत् श्व इति ध्वानः । नः अध्वा च मितौ योजनशतम् ॥१५ ॥

**अन्वयदीपिका**—सा वनितेति — सा वनिता भैमी स्वगुणैः बद्ध्वा नः अस्मान् कर्षति । हे नल ! वध्वाः स्वयंवरः श्व एव भविष्यति । नः अस्माकम् अध्वा मार्गः मितौ माने इतः योजनशतं शतयोजनप्रमिते वर्तते ॥१५ ॥

**यमकबोधिनी**—सेति— सा वनिता दमयन्ती नोऽस्मान् कर्षति आकर्षति । किं कृत्वा ? स्वगुणैर्बद्ध्वा । स्त्रिया च के पुरुषा न हृता अपि तु सर्वेऽपि । यतः सम्मोहयन्ति, रमयन्ति, विडम्बयन्ति । स महस्तावध्वानः श्वः प्रभृति इति श्रूयमाणोऽस्तीत्यर्थः । स्तवसम्बन्धि स्तावः । स चासौ ध्वानः शब्दश्च महस्य उत्सवस्य स्तावध्वानः । अध्वानो मार्गश्च शतयोजनमितौ शतयोजनप्रमाणेनास्माकम् अध्वा मार्गोऽस्ति । स्वयंवरदिनं मार्गश्च दूरे इत्यर्थः ॥१५ ॥

**दीपिका**—सा वनितेति—हे नः नल ! सा वनिता दमयन्ती स्वगुणैः निजसौन्दर्यादिभिः नः अस्मान् कर्षति । ननु त्वं कथं तद्वशं यासीत्यात्मनाऽऽह । वध्वा स्त्रिया के न हृताः के न वशीकृताः । अपि तु सर्वे । स महः स महोत्सवः तावत् श्वः एव भविष्यति इति

---

१. श्वस्त्विति तावद्ध्वानः स महो योजनशतः इति 'ञ' पुस्तके ।

ध्वानोऽस्ति तदाप्तपुरुषोक्तिरस्ति । नः अध्वा मार्गः शतयोजनप्रमाणे । वर्तते इति शेषः ॥१५ ॥

**सुबोधिनी**—सेति-सा वनिता भैमी स्वगुणैरात्मगुणैर्बद्ध्वा सम्यक् नोऽस्मान् कर्षति आकर्षति । यमके बवयोरैक्यं न दोषाय । डलयोरलयोश्चैव शषयोर्ववयोस्तथा । वदन्त्येषां च सावर्ण्यमलङ्कारविदो जनाः इत्यालङ्कारिकवचनात् । च पुनर्वध्वा स्त्रिया के न हृताः अपितु सर्व एव हृता इति भावः । स महस्तावत् स्वयंवरोत्सवस्तावत् श्वः आगामिदिवसे । इत्यनेन प्रकारेण ध्वानः लोकध्वनिः । लोकवार्ताऽस्तीति यावत् । अस्माकम् अध्वा मार्गः योजनशतमितौ प्रमाणे वर्तते । हे बाहुक भैमीस्वयंवरः श्वो भवितेति लोकवार्ता । अस्माकं मार्गः योजनशतमितः । अतः शीघ्रं रथं सज्जीकुरु इति भावः । नारी सीमन्तिनी वधूः । बध बन्धने इत्यस्मात् बद्ध्वेति । कृष विलेखने इत्यस्माद्भौवादिकाल्लिटि कर्षतीति । मह उद्धव उत्सवः । अनागतेह्नि श्वः परश्वस्तु परे दिवि । अयनं वर्त्ममार्गाध्वपन्थान इत्यमरः ॥१५ ॥

**अनुवाद**—वह युवती (दमयंती) अपने गुणो से बांधकर हमें खींच रही है । वधुएं किसका चित्त हरण नहीं करती । वह उत्सव कल ही है ऐसा सुना जाता है और हमारा मार्ग सौ योजन है ॥१५ ॥

**तत् त्वरयाऽमा यामः [1]प्रणयेर्यदि माऽनितत्रियामायामः ।**

**नलजायामायामस्मृमत्वेत्यूचे[2] क्व युवधियामाऽऽयामः ॥१६ ॥**

**अन्वयः** —तत् त्वरया अमा यामः यदि अनितत्रियामायामः मा प्रणयेः नलजायामायाम् अस्मृत्वा इति ऊचे । युवधियाम् आयामः क्व ? ॥१६ ॥

**अन्वयदीपिका** —तदिति— स ऋतुपर्णः स्मित्वा नलमूचे । किमूचे ? यदि त्वं मा मां प्रणयी मयि स्नेहवान् तत्तर्हि अमा सह त्वरया वेगेन वयं यामो गच्छामः । कथं भूतस्त्वम् ? अनितत्रियामायामः न इतः त्रियामायाः रात्रेः आयामो विस्तारो येन सः । वयं नलजायां दमयन्तीम् आयामः प्राप्नुमः । ननु ऋतुपर्णः अज्ञानवान् किम् ? तत्राह युवधियां तरुणबुद्धीनाम् आयामो विचारः क्व ? न क्वापीत्यर्थः ॥१६ ॥

**यमकबोधिनी** —तदिति— तत् तस्माद् वयं त्वरया वेगेन अमा सह यामो गच्छामः । यदि त्वं मां प्रणयेः मां स्वयंवरं प्रापयेः । त्वत्प्रापणेन स्वयंवरगमनं नान्यथेति भावः । किं लक्षणस्त्वम् ? मानितत्रियामायामः मानितरात्रिप्रहरः । रात्रिचलनेन स्वयंवरप्राप्तिरिति भावः । सम्भावितरात्रिचतुर्थप्रहर इत्येके । ऋतुपर्ण इत्यूचे नलजायामायाम् अस्मृत्वा दमयन्तीकपटमचिन्तयित्वा । ननु तेन धिया विचारः

---

१. प्रणयी इति 'क' पुस्तके ।

२. स्मित्वेति 'क' पुस्तके ।

किमिति न कृतस्तत्राह - युवधियां तरुणबुद्धीनाम् उन्मत्तबुद्धीनाम् आयामो विचारः क्व ? न क्वापीत्यर्थः । युवानो हि बहुमानवन्तो भवन्ति ॥१६ ॥

**दीपिका**—तत्त्वरयेति- हे नल ! तत् तस्मात् कारणात् यदि त्वं मा मां प्रणयी मयि स्नेहवान् तर्हि त्वरया वेगेन अमा सार्द्धं यामः गच्छामः । किम्भूतस्त्वम् ? अनितोऽप्राप्तस्त्रियामायामः त्रियामायाः रात्रेः प्रथमप्रहरः । आयामो विस्तरो वा येन स चायं नलः । तां दमयन्तीम् आयामः प्राप्नुमः । स ऋतुपर्णः स्मित्वा हास्यं कृत्वा एवमुवाच युवधियां तरुणबुद्धीनाम् आयामः विस्तारः विचारः क्व ? न कुत्रापीत्यर्थः ॥१६ ॥

**सुबोधिनी**—तत्त्वरेति - हे सूत ! तत् तस्मात् अनितत्रियामायामः अनितोऽप्राप्तः त्रियामाया रात्रेर्यामः प्रहरो येन तादृक् त्वं त्वरया सम्भ्रमेण मा मां यदि प्रणयेर्नयसि तदा अमा समीपं सह वा यामो गच्छाम इति अनेन प्रकारेण नलजायामायां नलजायायाः दमयन्त्याः मायां व्याजम् अस्मृत्वा अविचिन्त्य ऊचे। यतो दुर्धियां दुष्टाः कामक्रोधवशाक्रान्ताश्च ता धियश्चेति तासां दुष्टबुद्धीनाम् आयामो दैर्घ्यविचारः क्व ? कुत्र ? अपि तु कत्रापि न । अथवा दुष्टाः धियो येषां ते तादृशानाम् आयामो विचारदैर्घ्यं क्व। क्वचित्तु दुर्धियामित्यत्र युवधियामिति पाठः । तत्र यूनामिति तरुणानां धियां बुद्धीनां क्व आयामो दैर्घ्यम्। अपि तु क्वापि नेत्यर्थः । रात्रि-प्रहरमध्ये यदि न यासि तदा भैमीत्युक्तवान् । दमयन्तीमायामजानान एवेति भावः । दैर्घ्यमायाम आनाहः । अस्मदो द्वयोश्चेत्येके बहुवचनम् । सम्भ्रमस्त्वरा । अमा सह समीपे चेत्यमरः । प्रणयेः इति णि धातोर्लिङि । मा त्वामौ द्वितीया इति मा-देशः ॥१६ ॥

**अनुवाद**—यदि तुम रात्रि होने से पूर्व वहां ले चलना चाहते हो तो शीघ्रता से चलो । दमयंती की माया को न समझने वाले (ऋतुपर्ण ने नल से) ऐसा कहा । तरुणबुद्धियों में विचार कहां ? ॥१६ ॥

**मां भजमाना श्वः स्यान्नूनमसौ तत्प्रचोद्यमानाश्वः स्याम्[१] ।**
**इति मतिमानाश्वस्यान्यायमनाशङ्क्य विकृतिमानाश्वस्याम्[२] ॥१७॥**

अन्वयः—(यदि) प्रचोद्यमानाश्वः स्यां तत् श्वः असौ (दमयन्ती) नूनं मां भजमाना स्यात् इति आश्वस्य मतिमान् अस्याम् अन्यायम् अनाशङ्क्य आशु विकृतिमान् (बभूव) ॥ १७ ॥

**अन्वयदीपिका**—मामिति - मतिमान् नल इति आश्वस्य विचार्य अस्यां दमयन्त्याम् अन्यायम् अनाशङ्क्य आशु शीघ्रं विकृतिमान्[३] रोमाञ्चितोऽभूत्। इति किम्? यद्यहं

---

१. प्रणोद्यमानाश्व इति 'ग' 'घ' पुस्तकयोः।

२. विकृतिस्थानाश्वस्यामिति घ पुस्तके पाठः।

३. विद्यावती-विकृतिमानित्यनेन न स्मार्यते बाहुकरूपनलाङ्गविकृतिरपितु भाविदमयन्ती

प्रचोद्यमानाश्वः स्यां तत् तर्हि असौ दमयन्ती नूनं तर्कयामि श्वः प्रातः मां भजमाना स्यात् ॥१७ ॥

**यमकबोधिनी**—मामिति-नूनं निश्चितम् असौ दमयन्ती श्वः परदिने मां भजमाना स्यात्। तत् तस्मादहं प्रणोद्यमानाश्वः स्यां भवेयम्। प्रणोद्यमानाः प्रेर्यमाणाः अश्वा यस्य स तथा। मतिमान् राजा इति अमुना प्रकारेण आशु शीघ्रम् अस्यां दमयन्त्यां विकृतिमान् विकारयुक्तो बभूवेति शेषः। किं कृत्वा? आश्वस्य निश्चित्य। पुनः किं कृत्वा। अन्यायम् अनीतिम् अनाशङ्क्य अविचार्य ॥१७ ॥

**दीपिका**—मां भजमानेति- नूनं निश्चयेनाऽसौ दमयन्ती श्वः प्रातः काले मां भजमाना स्यात् प्रसन्ना भवेत्। तस्मात् कारणादहं प्रचोद्यमानाश्वः स्याम् प्रेर्यमाणतुरगः स्याम् भवेयमिति विचार्य मतिमान् बुद्धिमान् नलः आश्वस्य आश्वासं प्राप्य अस्यां दमयन्त्याम् अन्यायम् अनीतिम् अनाशङ्क्य आशु शीघ्रं विकृतिमान् रोमाञ्चितो बभूव ॥१७ ॥

**सुबोधिनी**[१] — मामिति- आदिकुलकम्। तत् प्रचोद्यमानाश्वः तेन बाहुकेन प्रचोद्यमाना प्रेर्यमाणा अश्वा यस्य एतादृक् चेत् स्यां भवेयं तदासौ दमयन्ती च नूनं निश्चयेन मां भजमाना आश्रयन्ती स्यादिति मतिमानेवं बुद्धिसहितः स ऋतुपर्णः अस्यां दमयन्त्याम् अन्यायं परस्त्र्यभिलाषलक्षणमनाशङ्क्य आश्वस्य आश्वासं प्राप्य आशु शीघ्रं विकृतिमान् मनोविकारवानित्यूचे। इति पूर्वश्लोकेनान्वयः। यद्यसौ मां नयति तर्हि श्वः सा वृणीतेति परस्त्र्यभिलाषमबुध्वा विकारवान्नलं तथोवाचेति भावः। नूनं तर्केऽर्थनिश्चये। यदि वा मतिं नलः मनसि आश्वास्य स्वयंवरवार्तां श्रुत्वा उत्पन्नकोपं विचारेण शमयित्वा अस्यां दमयन्त्याम् अन्यायम् अनाशङ्क्य अमत्वा चेत् यदि प्रचोद्यमानाश्वः प्रातः काले मां भजमाना स्यादिति हेतोः आशु शीघ्रं विकृतिमान् रोमाञ्चितः स्याद् बभूवेत्यर्थः ॥१७ ॥

**अनुवाद**—यदि मैं शीघ्र ही घोड़ों को चला दूं तो निश्चय ही कल यह दमयन्ती मेरे आश्रित होगी। ऐसा विचार कर बुद्धिमान् नल उसमें अन्याय की शंका न करता हुआ रोमांचित (दमयंती के भावी मिलन के लिये उत्कंठित) हो उठा ॥१७ ॥

**अथ रथमाराऽवन्तं शस्त्राणि नलः शुभाश्वमारावन्तम्।**

**स जगामाऽऽरावन्तं नृपतिमारोप्य च गुरुतमारावं तम् ॥१८ ॥**

**अन्वयः**—अथ सः नलः शस्त्राणि अवन्तम्, शुभाश्वम् आरावन्तं गुरुतमारावं रथम् आर। अरौ अन्तं तं नृपतिम् च आरोप्य जगाम ॥१८ ॥

**अन्वयदीपिका**—अथेति- अथानन्तरं स नलः रथम्आर प्राप। तं नरेन्द्रम् ऋतुपर्णम् आरोप्य जगाम। कथं भूतं नरेन्द्रम्? अरौ शत्रौ अन्तम्। कथं भूतं रथम्? शस्त्राणि

---

सहवासकल्पनाजन्यमानसीविकृतिरित्यवधेयम्।

१. टीकायामस्यां १७-१८ श्लोकयोः युग्मकता स्वीकृता। 'ज' पुस्तकेऽपि तथैव।

अवन्तम् । पुनः कथं भूतम् ? शुभाश्वं शोभनतुरगम् । पुनः कथं भूतम् ? आरावन्तम् आराः सन्ति यस्मिन् तं प्रतोदसहितम् । पुनः किं विधम् ? गुरुतमारावं गुरुतम आरावो यस्य तं मेघतुल्यमित्यर्थः ॥१८ ॥

**यमकबोधिनी**— अथेति-अथानन्तरं नलः रथं स्यन्दनमार प्राप किं कुर्वन्तम् ? शस्त्राणि आयुधानि अवन्तं रक्षन्तम् । किं लक्षणं रथम् ? शुभाश्वं शोभनतुरङ्गम् । स नलः नरेन्द्रम् ऋतुपर्णं तं रथे आरोप्य जगाम अगच्छत् । किं लक्षणं नरेन्द्रम् ? अरौ वैरिणि अन्तं मृत्युम् । अन्तस्त्ववसिते मृत्यौ स्वरूपे निश्चियेऽन्तिके इति वैजयन्ती । पुनः किं लक्षणम् रथम् ? आरावन्तम् आरा चक्रधारा सा विद्यतेऽस्येति आरावान् तम् । आरा चक्रस्य धारायामरिचक्रे नपुंसके । चर्मप्रभेदना चारा इति कोषान्तरात् । पुनः किं लक्षणं रथम् ? गुरुतमारावम् गम्भीरशब्दम् ॥१८ ॥

**दीपिका**—अथ रथमिति - अथानन्तरं स नलः रथम् आर प्राप । च पुनः तं नृपतिम् आरोप्य उपवेश्य जगाम ययौ। किम्भूतं रथम् ? शुभाश्वम् उत्कृष्टतुरगम् । पुनः किम्भूतं रथम् ? आरावन्तं प्रतोदयुक्तम् । पुनः किम्भूतं रथम् ? गुरुतमारावन्तं परमोदारशब्दयुक्तम् । किम्भूतं नृपतिम् ? अरौ शत्रौ अन्तं अन्तकमित्यर्थः ॥१८ ॥

**सुबोधिनी**—अथेति- वचनानन्तरं नलः आरावन्तम् आ समन्तात् अरं शीघ्रगम् अवन्तम् । यद्वा अरनम् आरः शीघ्रगतिः । तम अवन्तम् । यद्वा अरं शीघ्रम् अवन्तं गच्छन्तम् । यद्वा अस्य विष्णोः अरं चक्रं तमिव अवन्तं गच्छन्तम् अतिशीघ्रगमित्यर्थः तम् । शस्त्राण्यायुधानि अवन्तं रक्षन्तम् । शुभाश्च शोभना अश्वा यस्मिंस्तादृशं गुरुतमः गरिष्ठतमः आरावो यस्य तादृशं रथम् आर गतवान् । च पुनः अरौ शत्रौ अन्तं नाशकं तं नरेन्द्रं ऋतुपर्णं रथम् आरोप्य जगाम भीमनगरं गतवान् । ऋतुपर्णवचनोत्तरम् ऋतुपर्णं रथम् आरोप्यारोह्य कुण्डिननगरमनयदिति भावः । जगामेति गमेर्लिटि । अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके । अरं शीघ्रे च चक्राङ्गे शीघ्रगे पुनरन्यवदिति मेदिनीकारः ॥१८ ॥

**अनुवाद**— तदनंतर वह नल शस्त्रों से युक्त, अच्छे घोड़ों वाले, उच्चस्वर करने वाले, आराओं (पहिये के मध्य लगी कील) से युक्त रथ को प्राप्त किया और शत्रुओं के विनाशक उस राजा (ऋतुपर्ण) को बैठा कर चला ॥१८ ॥

**स्वांसकृतावसनस्य क्षणदूरत्वेन सङ्गतावसनस्य ।**

**भूभर्ता वसनस्य व्यस्मयत[1] रथद्रुतेर्द्युतावसनस्य[2] ॥१९ ॥**

**अन्वयः**—स्वांसकृतावसनस्य द्युतेः असनस्य वसनस्य असनस्य क्षणदूरत्वेन सङ्गतौ भूभर्ता रथद्रुतेः व्यस्मयत ॥१९ ॥

---

१. रथद्रुतेरिति क ङ पुस्तकयोः पाठः।

२. धुताविति क च पुस्तकयोः पाठः।

**अन्वयदीपिका**—स्वांसेति-स्वांसकृतावसनस्य स्वांसयोः स्कन्धयोः कृतम् आवसनं स्थितिर्येन तस्य वसनस्य असनस्य भृंशस्येत्यर्थः । क्षणदूरत्वेन सङ्गतौ सत्यां भूभर्ता ऋतुपर्णः रथद्रुतेः रथवेगैः व्यस्मयत विस्मितोऽभूत् । कथं भूतस्य वसनस्य ? द्युतेः असनस्य रुद्रवृक्षपुष्पसदृशस्य पीतवर्णस्येत्यर्थः ॥१९ ॥

**यमकबोधिनी**—स्वामिति - भूभर्त्ता ऋतुपर्णःरथद्रुतेः स्यन्दनगमनात् व्यस्मयत विस्मयं प्राप । केन ? वसनस्य वस्त्रस्य क्षणदूरत्वेन क्षणाद्दूरत्वं क्षणदूरत्वं तेन । किं लक्षणस्य वसनस्य ? स्वांसकृतावसनस्य स्वस्य अंशस्तस्मिन् कृतम् आवसनं स्थितर्यस्य तत् तस्य निजस्कन्धकृतनिवासस्य उत्तरीयस्येत्यर्थः । कस्यां सत्याम् ? असनस्य क्षेपणस्य सङ्गतौ सत्याम् । सम्बन्धे सति उत्तरीयपातो जात इत्यर्थः । रथवेगेनोत्तरीयस्य क्षणाद्दूरपातेन राज्ञोविस्मयः । पुनः किं लक्षणस्य वसनसस्य ? द्युतौ कान्तौ असनस्य प्रियकस्य बन्धूककुसुमसदृशस्य ॥१९ ॥

**दीपिका**—स्वांसकृतेति-भूभर्ता ऋतुपर्णः रथद्रुतैः रथवेगैः व्यस्मयत आश्चर्ययुक्तोऽभूत् ।कस्यां सत्याम् ? वसनस्य वाससः असनस्य यत् तत् तस्य क्षणाद् दूरत्वेन क्षणमात्रदूरगतत्वेन सङ्गतौ प्राप्तौ सत्याम् । किम्भूतस्य ? स्वांसकृतावसनस्य कृतं निजांशयोणर्वसनं स्थानं येन तस्य । पुनः किम्भूतस्य वसनस्य ? द्युतौ कान्तौ असनस्य असनवृक्षपुष्पतुल्यस्य पीतवर्णस्येत्यर्थः ॥१९ ॥

**सुबोधिनी**— स्वांसेति- भूभर्ता ऋतुपर्णः स्वांशकृतावसनस्य स्वस्यांशे स्कन्धे कृतमावसनमाच्छादनं येन तादृशस्य वसनस्य रथद्रुतेः रथवेगादुत्पन्नस्य वायोः द्युतौ कम्पे सति असनस्य असनवृक्षस्य सङ्गतौ सङ्गमे क्षणाद्दूरत्वेन क्षणादेव बहुयोजनान्तरितत्वेन व्यस्मयत विस्मितो बभूव । रथप्रेरितरथवेगवशोद्भवमरुद्धूतोत्तरीयस्य क्षणदूरत्वादृतुपर्णोऽद्भुतायमानमना अभूदिति भावः । स्कन्धोभुजशिरोऽसोऽस्त्रीत्यमरः । अस्यतीत्यनो वायुः समीरपर्यायः । यद्वा स्वांसकृता वसनस्येत्यस्य स्वांसे स्कन्धे कृतम् अवसनम् अस्थितेर्येन तस्य रथवेगोद्भूतवायुनोड्डीयमानस्येत्यर्थः । अत्रेयं पुराणवार्ता स्वांसादुत्तरीये भ्रष्टे राजा बाहुकमुवाच । अश्वान् संयच्छ । उत्तरीयमानयतु । बाहुक उवाच बहुयोजनान्तरितं तदतो नानेतुं शक्यमिति ॥१९ ॥

**अनुवाद**—अपने कन्धे में धारण किये गये रुद्राक्ष के पुष्प के समान पीले (उत्तरीय) वस्त्र के गिर जाने के बाद क्षण में ही संगत होने से राजा रथ के वेग से विस्मित हुआ । ।१९ ॥

**फलगणनादक्षस्य व्यधित तदासोऽश्वनोदनादक्षस्य[१] ।**

**तपसि[२] च नादक्षस्य प्रहर्षणं हृदयबोधनादक्षस्य ॥२० ॥**

---

१. व्यधित स चास्याश्वचोदनादक्षस्य इति 'ञ' पुस्तके ।

२. नयतो इति 'क' 'ङ' पुस्तकयोः । यशसि इति 'ञ' पुस्तके

**अन्वयः**—सः अक्षस्य फलगणनात् अक्षस्य च हृदयबोधनात् तपसि नादक्षस्य तदा अश्वनोदनादक्षस्य अस्य प्रहर्षणं व्यधित ॥२० ॥

**अन्वयदीपिका**— फलेति- स ऋतुपर्णः अक्षस्य विभीतकस्य वृक्षविशेषस्य फलगणनात् च पुनः अक्षस्य द्यूतस्य पाशकस्य वा हृदये बोधनात् तस्य सकाशात् ज्ञायमानात्। अश्वनोदनादक्षस्य अश्वनोदनायां दक्षस्य अश्वप्रेरणे चतुरस्य अस्य नलस्य प्रहर्षणं व्यधित अकृत। कथं भूतस्यास्य ? नयतौ नीतौ नादक्षस्य न अदक्षस्य नीतिचतुरस्येत्यर्थः ॥२० ॥

**यमकबोधिनी**—फलेति- स ना ऋतुपर्णः अस्य नलस्य च प्रहर्षणं व्यधित प्रमोदं चकार। कस्माद्धेतोः ? अक्षस्य विभीतकस्य फलगणनात्। च पुनः अक्षस्य पाशकस्य हृदयबोधनात् अन्तरज्ञानात्। विभीतके पाशके च रावणस्यात्मजेऽपि च। तथा शकटयन्त्रे च स्यादक्षश्चानिन्द्रिये इति कोषान्तरात्। किं लक्षणस्यास्य ? अश्वनोदनादक्षस्य तुरगप्रेरणाचतुरस्य ॥२० ॥

**दीपिका**— फलगणनादिति- तदा स ऋतुपर्णः विभीतकस्य वृक्षस्य फलगणनात् फलपरिमाणकरणात् पुनः अक्षस्य पाशकस्य हृदयबोधनात् तत्त्वज्ञानात् अस्य नलस्य प्रहर्षणं तोषणं व्यधित अकृत। किम्भूतस्यास्य ? अश्वनोदनादक्षस्य अश्वो नोद्यते प्रेर्यतेऽनया सा अश्वनोदना अश्वहृदयमन्त्रपरम्परा तस्या दक्षस्य चतुरस्य। पुनः किम्भूतस्यास्य ? नीतौ नादक्षस्य नासमर्थस्येत्यर्थः ॥२० ॥

**सुबोधिनी**—फलेति - सः ना पुरुषः ऋतुपर्णः अक्षस्य द्यूतस्य हृदयबोधनाद् हृदयज्ञानाद् हेतोः अक्षस्य कलिद्रुमस्य फलगणनात् फलपरिसङ्ख्यानात् अश्वनोदनादक्षस्य अश्वानां नोदना वाहनं तत्र दक्षस्य चतुरस्य तपसि च तपोविषये दक्षस्य दक्षप्रजापतिसदृशस्य नलस्य प्रहर्षणम् आह्लादनं व्यधित चक्रे। यतोऽयं राजा फलगणनादक्षः। अतः पाशकगणनाकोविदोऽपि स्यात्। एतां विद्यां नीत्वा पुनर्जेष्यामीति कृत्वा नलस्य महान् हर्षोऽभूदिति भावः। स ऋतुपर्णो विभीतकफलस्येयत्ताकथनादश्वहृदयज्ञस्य नलस्य प्रहर्षणं मन आह्लादयाञ्चकारेति भावः। त्रिलिङ्गस्तु विभीतकः। अक्षस्तुषः कर्षफलोभूतावासः कलिद्रुमः। व्यधितेति धाञो लुङि स्थाघ्वोरिच्चेति ईत्वे। ह्रस्वादिति सिज्लोपे रूपम्। अत्रेयं पुराणवार्ता - ऋतुपर्णो विभीतकवृक्षं दृष्ट्वा बाहुकमुवाच ममात्र गणनाकौशल्यं पश्य। अस्मिन् वृक्षे पतितं पत्रमेकाधिकशतं फलं च तावदेव स्थितानि पत्राणि पञ्चकोट्यः फलानि द्वे सहस्रे। बाहुक उवाच वल्गुरश्मीन् संयच्छ। अहं राजगणितम् गणयिष्यामि। तदा नलस्तद्गणयित्वाऽऽह - अत्यद्भुतमिदम्। इमं मह्यं देहि। मत्तश्चाश्वहृदयविद्यां गृहाण इति परिवर्तितं तदाह ॥२० ॥

**अनुवाद**—उस (ऋतुपर्ण) ने विभीतक के फलों को गिन कर और द्यूत कला को सिखा कर नीति में चतुर और अश्वविद्या में प्रवीण उस (नल) को प्रसन्न किया ॥२० ॥

[1]बलजितदेवार्याभ्यां विद्याविनिमयोऽथ युगपदेवार्याभ्याम्[2]।
सम्मर्देऽवार्याभ्यां व्यधायि संस्पृश्य[3] सम्पदे वार्याभ्याम् ॥२१ ॥

**अन्वयः**—अथ बलजितदेवार्याभ्याम् आर्याभ्यां सम्मर्दे अवार्याभ्याम् आभ्यां वारि संस्पृश्य युगपद् एव सम्पदे विद्याविनिमयो व्यधायि ॥२१ ॥

**अन्वयदीपिका**—बलेति- अथ अनन्तरम् आभ्यां नलऋतुपर्णाभ्यां वारि उपस्पृश्य आचम्य सम्पदे अस्तित्ववृद्धये युगपदेव एकदैव विद्याविनिमयः अश्वहृदय-अक्षहृदयविद्ययोर्विनिमयः परिवहः व्यधायि अकारि । कथं भूताभ्याम् आभ्याम् ? बलजितदेवार्याभ्यां बलेन जितः सम्मर्दे सङ्ग्रामे अवार्याभ्याम् अवार्यौ ताभ्याम् । पुनः किं विधाभ्याम् ? आर्याभ्यां मानाभ्याम् ॥२१ ॥

**यमकबोधिनी**—बलेति- अथानन्तरम् आभ्याम् ऋतुपर्णवैरिसेनिभ्यां युगपदेव समकालमेव विद्यानियमः परस्परमक्षहृदयाश्वहृदयविद्याविनिमयलक्षणो नियमः निश्चयो व्यधायि कृतः । किं लक्षणाभ्यामाभ्याम् ? बलजितदेवार्याभ्यां बलेन जितो देवानां स्वामी इन्द्रो याभ्यां तौ तथा ताभ्याम् । स्यादार्यः स्वामीवैश्ययोरित्यमरः । कस्यै ? सम्पदे सम्पत्तये । किं कृत्वा ? वारि जलम् उपस्पृश्य स्पृष्ट्वा विद्याविनिमयः व्यधायि कृतः । पुनः किं लक्षणाभ्याम् आभ्याम् ? सम्मर्दे युद्धे अवार्याभ्याम् अनिवारणीयाभ्याम् । पुनः किं लक्षणाभ्याम् ? आर्याभ्यां श्रेष्ठाभ्याम् । आर्यश्रेष्ठस्तु मारिषः इत्यमरः ॥२१ ॥

**दीपिका**—बलजितेति - आभ्यां नल ऋतुपर्णाभ्यां युगपद् एकदैव वारि जलं संस्पृश्य आचम्य सम्पदे सम्पत्यै विद्याविनिमयः आत्मविद्याविनिमयः व्यधायि कृतः । स्वगुणादानेन परगुणादानं विनिमयः । किम्भूताभ्यामाभ्याम् ? बलिजितदेवार्याभ्याम् बलिभिः पूजाभिः जितो देवार्यः शिवो विष्णुर्वा याभ्याम् । पुनः किम्भूताभ्याम् आभ्याम् ? आर्याभ्यां पण्डिताभ्याम् । पुनः किम्भूताभ्याम् आभ्याम् ? सम्मर्दे सङ्ग्रामे अवार्याभ्याम् अनिवार्याभ्याम् ॥२१ ॥

**सुबोधिनी**—बलेति-अथ रथवेगफलगणनकौतुकदर्शनानन्तरं बलजितदेवार्याभ्यां बलेन सामर्थ्येन जितो देवार्यः देवस्वामी इन्द्रो याभ्यां तादृग्भ्यां नलर्तुपर्णाभ्याम् । सम्मर्दे रणेऽवार्याभ्यां निवारयितुमशक्याभ्याम् युगपदेव एकबारमेव वारि जलम् संस्पृश्य सम्पदे श्रिये विद्याविनियमो विद्यापरिवर्तनं व्यधायि विहितः । अथ नलर्तुपर्णौ रथादवतीर्य आचम्य विद्याग्रहणं परस्परं चक्रुरिति । व्यधायीति धाञो लुङि चिणीति आतो युक् चिण्कृतोरिति यकि सति रूपम् ॥२१ ॥

---

१. बलिजित इति 'ङ' पुस्तके पाठः ।
२. विद्यानियमोऽथ युगपदेवार्याभ्यामिति 'ग' 'घ' 'ज' पुस्तकेषु ।
३. उपस्पृश्य इति 'क' 'ग' 'घ' पुस्तकेषु पाठः ।

**अनुवाद**—शक्ति से इन्द्र को भी जीत सकने वाले अभिमानी और युद्ध में न रोके जा सकने वाले इन दोनों (ऋतुपर्ण और नल) ने आचमन करके वृद्धि के लिये एक साथ विद्याविनिमय किया ॥२१ ॥

**तदनु द्रुतमक्षमतस्वीकृत्या[१] स्वदहनेऽधिकतममक्षमतः ।**

**[२]कलिरुन्नतमक्षमतः स्फुटमेव [३]गतो नलस्तु न तमक्षमत ॥२२ ॥**

**अन्वयः**—तदनु द्रुतं कलिः अक्षमतस्वीकृत्या स्वदहने अधिकतमक्षमतः अतः स्फुटमेव उन्नतम् अक्षम् गतः । नलस्तु तं न अक्षमत ॥२२ ॥

**अन्वयदीपिका**— तदन्विति - तदनु तदनन्तरं द्रुतं शीघ्रं कलिः उन्नतम् उच्चैस्तरम् अक्षं विभीतकवृक्षम् अतः नलात् स्फुटमेव प्रत्यक्षमेव गतः प्राप्तः । नलस्तु तं कलिं नाक्षमत नासहत । कथंभूताद् अतः ? अक्षमतस्य अक्षहृदयविद्यायाः स्वीकृत्या स्वदहने कलिदहनेऽधिकतमं क्षमः समर्थः तस्मात् ॥२२ ॥

**यमकबोधिनी**—तदिति- कलिरतोऽस्मात् नलात् स्फुटमेव प्रकटमेव अक्षं विभीतकतरुं गतः प्राप्तः । किं लक्षणम् अक्षम् ? उन्नतम् उच्चम् । नलस्तु तं कलिं न अक्षमत न सेहे स्वद्रोहित्वात् । ननु तर्हि नलः कलिं किं न हतवान् तत्राह - किं लक्षणात् नलात् ? ऽधिकतमक्षमतः अधिकतया अतिशयेन अधिका क्षमा तितिक्षा यस्य यस्मिन् वा तथा तस्मात् । मर्षः क्षमा तितिक्षा च क्षान्तिरुक्ता सहिष्णुतेति हलायुधः । किं लक्षणं कलिम् ? स्वदहने आत्मदाहनिमित्तम् । अनुद्रुतम् अनुगतं सङ्कचलितमित्यर्थः । किं कृत्वा ? तद्दहनं स्वीकृत्य अङ्गीकृत्य । किं लक्षणः कलिः ? अक्षमतस्वीकृत्या इति पाठे पाशकविद्याङ्गीकारेण स्वदहने स्वदाहनिमित्तं द्रुतं चलितं कलिमिति अन्यत्तथैव । अक्षहृदयविद्याग्रहणमात्रेण कलिर्नलदेहं तत्याज निर्दिष्टं विभीतकतरुम् आश्रित इति तात्पर्यम् ॥२२ ॥

**दीपिका**—तदनुद्रुतमिति- तदनु तदनन्तरं कलिः अतः नलात् द्रुतं शीघ्रम् उन्नतम् उच्चम् अक्षं विभीतकवृक्षं स्फुटं प्रकटमेव गतः प्राप्तः । तु पुनः नलः कलिं नाक्षमत । किम्भूतादतः ? अक्षमतस्वीकृत्या पाशकविद्यास्वीकारेण स्वदाहे निजदाहेऽधिकतमक्षमतः परमसामर्थ्यात् । अधिगताक्षविद्यया कलिदहनसमर्थादित्यर्थः ॥२२ ॥

**सुबोधिनी**—तदिति-तदनु ततः पश्चात् स्फुटं प्रव्यक्तम् अस्वदहने कलिदहनेऽधिकतमक्षमतः अत्यन्तसमर्थात् । अतोऽस्मात् नलसकाशात् कलिः द्रुतमेव उन्नतं उच्चैस्तरम् अक्षं विभीतकवृक्षं श्रितः प्राप्तः । तु पुन नलः अतः ऋतुपर्णादक्षं स्वीकृत्य अक्षज्ञानं प्राप्य

---

१. अक्षमतः स्वीकृत्या इति 'च' पुस्तके पाठः

२. श्रित उन्नतमक्षमतः इति 'ञ' पुस्तके ।

३. कलिर्नलस्तु इति 'ञ' पुस्तके ।

तं कलि न विषेहे। ऋतुपर्णादक्षहृदयं प्राप्य कलिं यावद् भस्मसात्करोति तावन्नलाद्विनिर्गत्य विभीतकतरुमशिश्रियत्। नलस्तु तस्मै चुकोपेति भावः। पश्चात् सादृश्ययोरनु लघुक्षिप्रमरं द्रुतम्। अक्षमतेति क्षमूष सहनेऽस्माल्लङि ॥२२ ॥

**अनुवाद**—ऋतुपर्ण से अक्षविद्या सीख लेने के कारण अपने दहन में अत्यधिक समर्थ इस नल से निकल कर कलि प्रत्यक्ष ही ऊँचे विभीतक वृक्ष में चला गया। नल ने इसे क्षमा नहीं किया ॥२२ ॥

**पतितमलसमेतस्या भैम्या रुषि विद्धि माऽनलसमे[1] तस्याः।**

**[2] आर्त्यनलसमेतस्याश्रितस्य शरणप्रदो नल समेऽतः स्याः ॥२३ ॥**

**अन्वयः**—नल ! मा एतस्याः तस्याः भैम्याः अनलसमे रुषि पतितम् अलसं विद्धि। अतः सः आश्रितस्य आर्त्यनलसमेतस्य मे शरणप्रदः स्याः ॥२३ ॥

**अन्वयदीपिका**—पतितमिति - हे नल ! मा मां तस्या एतस्या भैम्या रुषि क्रोधरूपेऽनलसमे अग्नितुल्ये शापे पतितम् अलसं कार्याक्षमं विद्धि जानीहि। अतः कारणात् सः त्वम् आश्रितस्य शरणागतस्य अर्तिः पीडा तस्या अनलः अग्निः तेन समेतस्य मे मम शरणप्रदः स्याः भव इति कलिर्नलमुवाचेति शेषः ॥२३ ॥

**यमकबोधिनी**—पतितमिति — कलिः विभीतकवृक्षं प्राप्तः सन् नलम् इति उवाचेति शेषः। किमुवाचेत्याह - हे अनलसम् ! हे अग्नितुल्य ! हे नल ! इतः कारणात् स त्वं मे मम शरणप्रदो रक्षणदः स्याः भव। शरणं रक्षणं गृहे इति विश्वः। इतः कुतः ? यतः त्वं मा इति मां इति मा तस्या प्रसिद्धाया एतस्याः भैम्या रुषि सत्यां शापदत्तवत्यां सत्यां पतितं विद्धि जानीहि। यत इति अध्याहार्यम्। किं लक्षणं माम् ? अलसं लसतीति लसः न लसः अलसस्तं कान्तिरहितम्। लस दीप्तौ। किं लक्षणस्य मे ? आर्त्यनलसमेतस्य दुःखाग्निसंयुक्तस्य। पुनः किं लक्षणस्य मे ? आश्रितस्य तवाश्रयं प्राप्तस्य ॥२३ ॥

**दीपिका**—पतितमिति- आः इति कष्टे। हे अनलसम् अलसा उत्कृष्टा मा शोभा यस्य तस्य सम्बोधने हे नल ! स त्वम् एतस्या भैम्या रुषि क्रोधे मा मां पतितं विद्धि जानीहि। किम्भूतं माम् ? अलसं कार्याक्षमम्। अतः कारणात् मे मम शरणप्रदः स्याः आश्रयो भव। किम्भूतस्य मे ? इतस्य विभीतकवृक्षं प्राप्तस्य। शरीरान्निर्गतस्य वा। पुनः किम्भूतस्य मे ? आर्तिबलसमेतस्य पीडाधिक्ययुक्तस्य। पुनः किम्भूतस्य मे ? आश्रितस्य शरणागतस्य ॥२३ ॥

१. भैम्याश्शापे स्मरानलसमे इति 'ञ' पुस्तके पाठः। भैम्याः शापे इति च 'क' पुस्तके।

२. आर्तिबलसमेतस्येति 'ङ' पुस्तके पाठः। अपि दोषसमेतस्येति 'ञ' पुस्तके।

**सुबोधिनी**—पतितमिति - कलिर्नलमाह - हे नल ! एतस्यास्तव हृदये विद्यमानायास्तस्या भैम्या अनलसमेऽग्निसमेऽग्सिदृशे रुषि रोषे पतितमत एव अलसं दु:खिनं मां विद्धि जानीहि। आर्त्यनलसमेतस्य आ समन्तात् आर्ति: सैवानलस्तत्समेतस्य संयुक्तस्य। आर्तिबलसमेतस्येति पाठे आर्ते: पीडाया: बलेन आधिक्येन समतेस्येत्यर्थ: । मे मम आश्रितस्य आश्रयवत: अत: दमयन्ती क्रोधात् शरणप्रद: प्राणत्राणदाता स त्वं स्या: भव । आ: पीडायाम् दमयन्तीरोषाग्निना दह्यमानं प्रति किं रोषं करोषि। भैमीकोपज्वलितस्य मे शरणं भवेति भाव: । आस्तु स्यात् कोपपीडयो: । अर्ति: पीडाधनुष्कोट्योरित्यमर: ॥२३ ॥

**अनुवाद**— हे नल ! मुझे इस (तुम्हारे हृदय में विद्यमान) उस दमयन्ती के अग्नितुल्य क्रोध में पतित किंकर्तव्यविमूढ़ समझो । अत: वह तुम पीड़ा रूपी अग्नि में पतित तुम्हारी शरण में आये हुए मुझ (कलि) के शरण प्रद होओ ॥२३ ॥

**कलिमिति नानामायं नमन्तममुचन्महामना नामाऽयम् ।**

**कीर्तिधनानामाऽऽयं स दधाति हरन्ति रिपुजनानामा यम् ।२४ ॥**

**अन्वय:**— अयं महामना: नमन्तं नानामायं कलिम् अमुचत् नाम । रिपुजनानामा: यं हरन्ति स: कीर्तिधनानाम् आयं दधाति ॥२४ ॥

**अन्वयदीपिका**—कलिमिति- महामना: अयं नल: इत्यनेन प्रकारेण नमन्तं नानामायं नानाविधा माया: कपटं यस्य तथाविधं तं कलिम् अमुचत् । नामेति प्रसिद्धौ । ननु अपकारिणं नल: कथम् अमुचदित्याह - रिपुजनानामा: शत्रुजनानां प्रणामा: यं पुरुषं हरन्ति वशीकुर्वन्ति स: पुरुष: कीर्तिधनानां यशस्विनाम् आयम् उपचयं दधाति ॥२४ । ।

**यमकबोधिनी**—कलिमिति - नाम प्रसिद्धौ । अयं महामना: उदारचित्तो नल: कलिम् अमुचत् अत्याक्षीत् । किं कुर्वन्तमिति पूर्वोक्तप्रकारेण नमन्तं प्रह्वीभवन्तम् । किं लक्षणं कलिम्? नानामायम् अनेकप्रकारकपटयुक्तम् । यत: स नल: कीर्तिधनानां यशोधनानाम् आयं लाभं दधाति विभर्ति । कीर्त्युपादानपराणां न परपीडने प्रयोजनमिति भाव: । स: क: ? रिपुजना: शत्रुलोका: यं न हरन्ति न प्रहर्तुं समर्था: भवन्तीत्यर्थ: । किं लक्षणा: रिपुजना: ? अमा: अशोभा: अथवा रिपुजनानामानामा: नमस्कारा: रिपुजनानामा: शत्रुलोकप्रणामा: यं हरन्ति वशीकुर्वन्ति इत्यर्थ: ॥२४ ॥

**दीपिका**— कलिमिति - नामेति प्रसिद्धौ । महामना: उदारचित्त: अयं नल: इत्युक्त्वा । नतं नम्रं कलिम् अमुचत् तत्याज । किम्भूतं कलिम्? नानामायम् नानाकपटम् । ननु परापकारिणं कलिं नल: कथमत्यजत् ? तत्राह रिपुजनानामा: शत्रुजनानां नमस्कारा: यं पुमांसं हरन्ति वशीकुर्वन्ति स पुमान् कार्तिधनानां यशोधनानाम् आयं कीर्तिधनं दधति धत्ते। राजान: कीर्तिलाभाय प्रणमतां शत्रूणाम् अपि वश्या: भवन्तीत्यर्थ: ॥२४ ॥

**सुबोधिनी**—कलीति- इत्यनेन प्रकारेण नमन्तं प्रणमन्तं नानामायं नानाव्याजं कलिं महामना महाशयोऽयं नलोऽमुचत् त्यक्तवान् । नाम सम्भावनायाम् । यं पुरुषं रिपुजनानामाः शत्रुजननमस्काराः हरन्ति आकर्षन्ति स पुमान् कीर्तिधनानां यशोलक्षणद्रविणनामायं दधाति धारयति । एवं बहुधा नमस्कुर्वन्तं कलिं कारुणिकतयाऽत्यजत् । शत्रु-नमस्कृतयः यं वशयन्ति स यशोवान् भवतीति । मुच्लृमोक्षणे इत्यस्य लङि अमुचदिति । नाम प्रकाश्यसम्भाव्यक्रोधोपगमकुत्सने । अत्रेयं भारतवार्ता अक्षहृदयं गृहीतवतो नलस्य देहात् कर्कोटकनागविषं वमन् कलिः निस्सृतः । तं कलिं नलः शप्तुमुद्यतः । ततोऽतिभीतः कलिर्नलमुवाच । त्वं शरणं भवेः । मा शपस्व ये जनास्त्वां कीर्तयिष्यन्ति तेषां मत्तो न भयं भवेत् । अहममुं विभीतकवृक्षं प्रविशामि । ततः कारणात् नलस्तम् अक्षमत् । ततो विभीतकवृक्षं सम्प्रविवेश । ततः प्रभृति विभीतकवृक्षच्छायाऽपि न गृह्यते ॥२४ ॥

**अनुवाद**—इस महामना (नल) ने अनेक प्रकार से नमस्कार कर रहे कलि को छोड़ दिया । क्योंकि शत्रुओं के प्रणाम जिसे प्रभावित करते हैं वह यशस्वियों के धन (यश) को धारण करता है ॥२४ ॥

**अथ नुन्नाश्वस्तेन प्रास्थित राजा महात्मनाऽऽश्वस्तेन ।**

**सा ललना श्वस्ते न स्यादिति हसता विरोधिनाऽऽश्वस्तेन ॥२५ ॥**

**अन्वयः**—अथ राजा अस्तेन विरोधिना आश्वस्तेन सा ललना श्वः ते न स्यात् इति हसता महात्मना तेन आशु नुन्नाश्वः प्रास्थित ॥२५ ॥

**अन्वयदीपिका**—अथेति- अथानन्तरं राजा ऋतुपर्णः आशु शीघ्रं प्रास्थित । नलस्य अश्वविद्योपदेशस्थानात् निर्गतः । कथं भूतो राजा ? तेन नलेन नुन्नाश्वः प्रेरिताः अश्वाः यस्य सः । कथं भूतेन तेन ? हे राजन् ते तव सा ललना दमयन्ती श्वः परेद्युः न स्यात् इति हसता । पुनः कथं भूतेन ? आश्वस्तेन आ समन्ताद् विश्वस्तेन । विरोधिना अस्तेन मुक्तेन ॥२५ ॥

**यमकबोधिनी**— अथेति- अथानन्तरं राजा ऋतुपर्णः प्रास्थित प्रस्थानं चक्रे । किं लक्षणो राजा ? तेन नलेन नुन्नाश्वः प्रेरिततुरगः । किं लक्षणेन तेन ? विरोधिना वैरवता दमयन्त्याः साभिलाषत्वात् । पुनः किं लक्षणेन ? आश्वस्तेन व्यग्रेण अथवा आश्वस्तेन स्वस्थीभूतेन । कथम् ? सा ललना रामा दमयन्ती ते तव श्वः प्रभाते न स्यान्न भवेत् इति । पुनः किं लक्षणेन तेन ? ते न अत एव हसता हास्यं कुर्वता । पुनः किं लक्षणेन तेन ? महात्मना उदारचित्तेन । पुनः किं लक्षणेन ऋतुपर्णेन ? आशु शीघ्रं अस्तेन प्रेरितेन । अथवा हे आश्वस्तेन इति ऋतुपर्णसम्बोधनम् । आश्वम् अश्व-वृन्दस्तस्य स्तेनः चौरः । तदाहरणशीलत्वात् तस्य सम्बोधनम् । वृन्दे त्वाश्वमश्ववदित्यमरः ॥२५ ॥

**दीपिका**—अथेति- अथ तेन नलने नन्नाश्व: प्रेरिततुरग: राजा ऋतुपर्ण: प्रस्थित तत्स्थानाच्चचाल । किम्भूतेन ? विरोधिना ऋतुपर्णेन आशु शीघ्रम् अश्वान्नोदयेति तिरस्कृतेन । पुन: किम्भूतेन तेन ? सा ललना दमयन्ती श्व: प्रात: ते न भविता इति हसता हास्यं कुर्वता । पुन: किम्भूतेन ? महात्मना उदारमनसा । पुन: किम्भूतेन तेन ? आश्वस्तेन आश्वासं प्राप्तेन ॥२५ ॥

**सुबोधिनी**— अथेति- अथ कलिगमनानन्तरं विरोधिना कलिना आशु शीघ्रम् अस्तेन त्यक्तेन आश्वस्तेन विश्रान्तवता दु:खाद्वा आश्वस्तेन आश्वासं प्राप्तवता महात्मना महाप्रभावेण सा ललना भैमी श्व: आगामिदिने तव किं न स्यादपि तु स्यादेवेति व्याजेन सा तव स्त्री न स्यात् भविष्यतीति मनसि कृत्य हसता तेन नलेन नुन्नाश्व: प्रेरितहय: सा राजा ऋतुपर्ण: प्रास्थित प्रचचालेति यावत् । विद्योपदेशस्थानात् शेषमार्गमवगाहतेति भाव: । नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिता: समा: । समवप्रविभ्य: स्थ: इत्यात्मनेपदे । स्थाघ्वोरिच्चेति ईत्वे सिचो लोपे लङि रूपम् । प्रास्थितेति उपसर्गेण धात्वर्थो बलादन्यत्र नीयते इति स्थित्यर्थस्य प्रपूर्वत्वेनैतद् विरुद्धार्थत्वम् । ह्यो गतेऽनागतेऽह्नि श्व इत्यमर: ॥२५ ॥

**अनुवाद**—तब विरोधी कलि के द्वारा मुक्त, आश्वस्त 'कल दमयन्ती तुम्हारी नहीं होगी' ऐसा (सोच कर मन ही मन) हंस रहे उस महात्मा (नल) के द्वारा प्रेरित अश्वों वाला ऋतुपर्ण (पुन: आगे के लिये) चल पड़ा ॥२५ ॥

**सोऽयमनेना [1]यततामिष्ट इति नल: समं त्वनेनाऽऽयत ताम् ।**

**वहति दिनेऽनायततां पुरीं प्रियेणाश्रितां जनेनाऽऽयतताम् ॥२६ ॥**

**अन्वय:**—स: तु यततामिष्ट: अयम् अनेना: नल: इति दिने अनायततां वहति, अनेन समं तां प्रियेण जनेन आश्रिताम् आयततां पुरीम् आयत ॥२६ ॥

**अन्वयदीपिका**– स इति-यतन्तीति यतन्त: तेषामिष्ट अनेना: निष्पाप: सोऽयं नल: इति अनेन प्रकारेण दिने अनायततां ह्रस्वस्वतां वहति सायंकाले सतीत्यर्थ: । अनेन ऋतुपर्णेन समं ताम् पुरीम् आयत प्राप । कथं भूतां पुरीम् ? प्रियेण दमयन्तीलक्षणेन जनेन आश्रिताम् । पुन: किम्भूताम् ? आयतताम् ॥२६ ॥

**यमकबोधिनी**—स इति-स: नल: अनेन ऋतुपर्णेन समं सह तां पुरीं भीमनगरीम् आयत आजगाम । क्व सति ? दिने अनायततां न आयतता अनायतता ताम् अदैर्घ्ये वहति सति । किञ्चिद् दिने वर्तमाने इत्यर्थ: । सोऽयम् ऋतुपर्ण इष्टे आत्मनोऽभीष्टे यततां यत्नम् करोतु । किं लक्षणोऽयं नल: ? अनेना: अपवादरहित: दमयन्त्या दूत्वात् ? एनोऽपवादो दुरित इति कोषान्तरात् । किं लक्षणां पुरीम् ? प्रियेण जनेन

---

१. यततमिष्टेति 'ञ' पुस्तके ।

दमयन्तीलक्षणेन आश्रिताम्। पुनः किं लक्षणाम्? आयतताम् लाभ - विस्तृता-मित्यर्थः ॥२६ ॥

**दीपिका**—सोऽयमनेना इति - अनेन ऋतुपर्णेन समं सार्द्धं तां पुरीं भीमनगरीम् आयत आजगाम। इतीति किम्? सोऽयमिष्टे स्ववाञ्छितेऽर्थे मत्प्रियजने वा यततां यत्नं करोतु। किम्भूतोऽयम्? अनेनाः निरपराधः। तत्कपटाच्छलित इत्यर्थः। कस्मिन् सति? दिने दिवसे अनायतताम् अदैर्घ्यतो वहति प्राप्ते सति। किम्भूतां पुरीम्? प्रियेण जनेन दमयन्त्याख्येन आश्रितां युक्ताम्। पुनः किम्भूताम्? आयततां शुभदैवेन विस्तृताम् ॥२६ ॥

**सुबोधिनी**—सोऽयमनेनेति - अयं कलियुक्तोऽनेना निष्पापो नलः यततामिष्टः वल्लभः। यद्वा इष्टे भार्यादर्शने दमयन्ती दर्शने यततां यत्नं करोतु इति हेतोर्दिने दिवसेऽनायततामदीर्घतां वहति सति धारयति सति स नलोऽनेन ऋतुपर्णेन समं सह आयततां धनागमव्याप्तां प्रियेण जनेन दमयन्त्याश्रितां तां पुरीं कुण्डिनाख्याम् आयत आगच्छत् आगतवान्। कलिमुक्तो नलो भैमीं पश्यत्वितीव सकरुणे दिनेऽस्तं गच्छति सति ऋतुपर्णेन सह नलः कुण्डिनपुरं प्रविवेशेति भावः। आयतेत्ययगतावित्यस्य लङि। दैर्घ्यमायामः। वह प्रापणे इत्यस्य शतरि रूपम् वहतीति ॥२६ ॥

**अनुवाद**—यत्न करने वालों का इष्ट वह निष्पाप नल सूर्य अस्त होने से कुछ पहले इस (ऋतुपर्ण) के साथ अपने प्रियजन (दमयन्ती) के द्वारा आश्रित तथा लाभों से विस्तृत पुरी में पहुंच गया ॥२६ ॥

**[१]कर्तुं मानन्ते न श्रम इति नीतो भुवोऽयमाऽऽनन्तेनः[२]।**

**स्वं धामानन्तेन प्रेम्णा भीमेन जितविमानन्तेन ॥२७ ॥**

**अन्वयः**—तेन भीमेन अयम् आनन्ता भुवः इनः मानं कर्तुं ते न श्रमः इति अनन्तेन प्रेम्णा सः जितविमानं स्वं धाम नीतः ॥२७ ॥

**अन्वयदीपिका**—कर्तुमिति - हे इन स्वामिन्। अयं मल्लक्षणो जनस्ते तव आनन्ता त्वां नमस्कर्ता। मार्गभुवः मानं कर्तुं ते तव न श्रमः किन्तु श्रम एवेति ऋतुपर्णं प्रति उक्त्वा तेन भीमेन राज्ञा अनन्तेन प्रेम्णा स नलः जितं विमानं येन तादृशं स्वं धाम गृहं नीतः प्रापितः[३] ॥२७ ॥

---

१. 'ञ' पुस्तकेऽष्टविंशतितमोऽयम्।

२. 'क' पुस्तकेऽत्र निर्विसर्गः पाठः।

३. विद्यावती - भ्रान्तोऽत्राऽन्वयदीपिकाकारः। भीमेन राज्ञा न नलोऽपितु ऋतुपर्ण एव नीतो विश्रामार्थम्।अतो नात्र टीकाया अस्याः प्रामाण्यं तथात्वे कथया विरोधात् दीपिकाया अपि तथैवाप्रामाण्यम्।

**यमकबोधिनी**—कर्तुमिति -तेन भीमेन अयं भुवः इनः स्वामी भूपतिः ऋतुपर्णः इति स्वधाम आत्मीयं गृहं नीतः प्रापितः । केन ? आनन्तेन प्रेम्णा बहुलेन स्नेहेन । इति कथम् ? ते तव अनः श्रमः । हे राजन् ! तव शकटश्रमः इति । किं कर्तुम् ? मानं पूजां कर्तुं । पुनः किं लक्षणोऽयम् ? आनन्ता नमस्कर्ता भीमनमस्कारपर इत्यर्थ; । क्लीबेऽनः शकटोऽस्त्री स्यादित्यमरः । किं लक्षणं धाम जितं विमानं येन तत् तथा जितदेवयानं ततोऽप्यधिकसुखमित्यर्थः ॥२७ ॥

**दीपिका**—कर्तुमिति- तेन भीमेन इति ऋतुपर्णं प्रति उक्त्वा अनन्तेन प्रेम्णा अपरिमितस्नेहेन स नलः स्वधाम आत्मीयं गृहं नीतः प्रापिः । किं भूतं धाम ? जितविमानं जितं तिरस्कृतं स्वशोभया विमानं येन तत् । इतीति किम् ? हे इन ! हे स्वामिन्नयं मल्लक्षणः जनः आनन्ता प्रणतिमान् एव ते तव भुवः मानं सन्मानं कर्तुं परिश्रमापनयाय नाभूत् ॥२७ ॥

**सुबोधिनी**—कर्तुमिति - तेन भीमभूपेन ते तव श्रमो मार्गोद्भवपरिश्रमो नाभूदिति उक्त्वा स्वागतम् आभाष्य आनन्ताकृतिं नतिर्दर्शितनम्रत्वोऽयं भुवः भूमेः इनः प्रभुः ऋतुपर्णो मानं पूजां सम्मानं वा कर्तुं विधातुं जितविमानं जितानि विमानानि व्योमयानानि येन तादृशं स्वं स्वकीयं धाम गृहम् अनन्तेन बहुतरेण प्रेम्णा स्नेहेन आनीतः प्रापितः । तदनन्तरं कृतनतिः ऋतुपर्णस्तेन भीमेन विमानसुन्दरं स्वच्छसौधम् । पूजयितुमानिन्य इति भावः । इनः सूर्ये प्रभौ । प्रेम स्नेहः । व्योमयानं विमानोऽस्त्रीत्यमरः । धामरश्मौ गृहे देहे स्थाने जन्मप्रभावयोः । यद्वा तेन भीमेनायम् ऋतुपर्णः अर्थादस्य श्रमो मार्गोद्भवः श्रम इति हेतोः स्वधाम नीतः । कथं भूते ? मानन्तेन मायाः लक्ष्म्याः विनाशाभावो यस्य तेन स्थिरलक्ष्मीकेनेति यावत् ॥२७ ॥

**अनुवाद**—तब वह भीम पृथ्वी के स्वामी इस ऋतुपर्ण को सम्मान करने के लिये अति प्रेम से विमान की शोभा को जीतने वाले अपने घर ले गया ॥२७ ॥

**सज्जनतामहितस्य व्यग्रेतरलोकसूचितामहितस्य ।**

**स द्विषतामहितस्य द्रुतं पुरस्येक्षणात् ततान हि तस्य[१] ॥२८ ॥**

**अन्वयः**—स हि सज्जनतामहितस्य द्विषताम् अहितस्य तस्य व्यग्रतेरलोकसूचितामहितस्य पुरस्य ईक्षणात् द्रुतं ततान ॥२८ ॥

**विद्यावती**[२] — सज्जनतेति - सः ऋतुपर्णः पुरस्य कुण्डिननगरस्य ईक्षणात् दर्शनात् ततान अदूयत ग्लानिमन्वभवदित्यर्थः । कस्य पुरस्य ? सज्जनतामहितस्य सज्जनानां भावः सज्जनता तया सज्जनतया महितस्य साधुस्वभावात् पूजितस्य । पुनः कीदृशस्य ? द्विषतामहितस्य द्विषताम् अरीणाम् अहितस्य नाशकर्तुः

१. 'क' पुस्तके ऊनत्रिंशत्तमोऽयं श्लोकः ।

२. २८ एवं च ३०-४५ श्लोकेषु विद्यावती लिखिता सम्पादकेन अन्वयदीपिकाया अनुपलब्धेः ।

शत्रुविनाशकस्य राज्ञो भीमस्येत्यर्थः। कीदृशस्य पुरस्य? व्यग्रेतरलोक-सूचितामहितस्य व्याग्राद् इतरे परे व्यग्रेतरे व्यग्रतारहिता इति भावः। तादृशैः सूचिता विस्तारिता पिशुनिता वा आ समन्तात् सर्वासु दिक्षु वा महिता पूजागुणवत्ता यस्य तादृशस्य । द्रुतं शीघ्रम्। हि निश्चये ॥२८॥

**यमकबोधिनी**—सज्जनेति - हीति निश्चितम्। स ऋतुपर्णः तस्य भीमस्य पुरस्य नगरस्य ईक्षणाद् दर्शनाद् द्रुतं शीघ्रं ततान ग्लानो बभूव। किं लक्षणस्य पुरस्य भीमस्य वा? सज्जनतामहितस्य सती चासौ जनता च तया महितस्य प्रशस्तजन- समूहपूजितस्य। राजपक्षसौजन्यपूजितस्य। पुनः किम्भूतस्य? व्यग्रेतरलोक- सूचितामहितस्य महः उत्सवोऽस्मिन्नस्तीति महि न महि अमहि तस्य भावस्तत्ता तथा। व्यग्रेतरलोकैः सूचिता अमहिता यस्मिन् तत्तथा तस्य नलचिन्तापरत्वात्। पुनः किं लक्षणस्य? द्विषतां शत्रूणाम् अहितस्य नाशकस्य। राजपक्षेऽपि तथा ॥२८॥

**दीपिका**—सज्जनतामहितस्येति - हि निश्चितम्। ऋतुपर्णः तस्य पुरस्य ईक्षणात् दर्शनात् द्रुतं शीघ्रं ततान ग्लानिं प्रापत्। किम्भूतस्य पुरस्य? सज्जनतामहितस्य समीचीनजनसमूहैः पूजितस्य। पुनः किम्भूतस्य? स्निग्धेतरलोकैः रुक्षजनैः सूचिता कथिता अमहिता अनुत्सवता येन तस्य। पुनः किम्भूतस्य पुरस्य? द्विषतां शत्रूणाम् अहितस्य नाशकस्येत्यर्थः ॥२८॥

**सुबोधिनी**—सज्जनतेति- स ऋतुपर्णः सज्जनतामहितस्य साधुत्वेन पूजितस्य। यद्वा जनानां समूहो जनता। सती चासौ जनता चेति सज्जनता तया महितस्य पूजितस्येत्यर्थः। द्विषतां शत्रूणामहितस्यानिष्टस्य तस्य भीमस्य व्यग्रेतरलोकसूचितामहितस्य व्यग्रेतरे अव्यग्रा ये लोकास्तैः सूचिता प्रकाशिता आ समन्तात् महिता उत्सववत्ता यस्य तादृशस्य कुण्डिनस्येक्षणात् आलोकनात् द्रुतं शीघ्रं ततान ग्लानिं जगाम। हि निश्चये। भीमपुरसमृद्धिदर्शनात् तमितोऽभूदिति भावः। मह उद्धव उत्सवः। तमुग्लानावित्यस्य लिटि ततामेति। यद्वा स नलः ततान ग्लानिं प्राप स्वदैन्य-स्मरणादिति भावः। हि तस्य इष्टस्य श्वसुरस्य पुरस्य दर्शनादित्यर्थः ॥२८॥

**अनुवाद**—अपनी सज्जनता के कारण पूजित, शत्रुओं के विनाशक उस भीम के, शान्तलोकों के द्वारा तमाम फैलायी गयी उत्सवशालिता वाले कुंडिनपुर के दर्शन से वह ऋतुपर्ण शीघ्र ही ग्लानि को प्राप्त हुआ ॥२८॥

**प्रथिततमाया मायां शुचिरथ वसतावनुत्तमायामायाम्।**

**चारुतमायामाऽऽयान्नलः स्मरन् वासमसुसमाया मायाम् ॥२९॥**

**अन्वयः**—अथ शुचिः मायां प्रथिततमायाः असुसमायाः मायां स्मरन् नलः चारुतमायाम् अनुत्तमायामायां वसतौ वासम् आयात् ॥२९॥

**अन्वयदीपिका**—प्रथितेति-अथ अनन्तरं शुचिः पवित्रः नलः मायां शोभायाः विषये प्रथिततमायाः अतिप्रसिद्धतमायाः असुसमायाः प्राणसमायाः दमयन्त्याः मायां प्रकटं

पापं स्मरन् नल: चारुतमायाम् अतिशोभनायां वसतौ आयात् प्राप । कथं भूतायां वसतौ ? अनुत्तमायामायाम् । न विद्यते उत्तमो यस्मात् स अनुत्तम: अतिश्रेष्ठ: आयामो विस्तारो यस्या: तस्याम् ॥२९ ॥

**यमकबोधिनी**—प्रथितेति- अथ पुरेक्षणादनन्तरं नल: चारुतमायां रम्यरात्रौ असुसमाया: प्राणतुल्याया: दमयन्त्या: वसतौ गृहे वासं निवासम् आपत् प्राप । रात्रौ दमयन्तीगृहे वासम् अकरोत् इत्यर्थ: । तमा रात्रिरुषावासतेयी श्यामा तमिस्रा इति कोषान्तरात् । किं कुर्वन् ? मायां स्मरन् दमयन्त्या: कपटं चिन्तयन् । किं लक्षणाया: दमयन्त्या: मायां शोभायां प्रथिततमाया: विख्याताया: । किं लक्षणो नल: ? शुचि: पवित्र: । किं लक्षणायां वसतौ ? अनुत्तमायामायाम् न विद्यते उत्तमो यस्मात् स अनुत्तम: श्रेष्ठतर: आयामो विस्तारो यस्या: सा तथा तस्याम् उत्तमस्यादाहने । स्यादाहतमुदारे च । स्यादुदग्रे चानुदग्रवत् इति शब्दप्रभेद: ॥२९ ॥

**दीपिका**—प्राथिततमाया इति-अथानन्तरं शुचि: पवित्रो नल: असुसमाया: प्राणवल्लभाया: दमयन्त्या: मायां स्मरन् स्वमिलनार्थं स्वयंवरकपटं जानन् सन् वसतौ गृहे वासं निवासम् आयात् प्राप । किम्भूताया: ? मायां शोभायां प्रथिततमाया: विख्याताया: । किम्भूतायां वसतौ ? अनुत्तमायामायाम् अनुत्तम: श्रेष्ठतम: आयामो विस्तारो यस्या: सा तस्याम् । पुन: किम्भूतायां वसतौ चारुतमायाम् अत्यन्तमनोरमायाम् ॥२९ ॥

**सुबोधिनी**—प्रथितेति - अथानन्तरं शुचि: पवित्र: कर्कोटकवस्त्रपरिधानान्नल: मायां लक्ष्म्या शरीरशोभायां वा प्रथिततमाया: प्रसिद्धतमाया असुसमाया: प्राणसमाया: दमयन्त्या: मायां व्याजम् ऋतुपर्णाह्वानस्वागमनप्रयोजिकां स्मरन् विचारयन् अनुत्तमायामायाम् अनुत्तम: श्रेष्ठ आयामो दैर्घ्यं यस्यास्तादृश्यां चारुतमायामतिशयरुचिरायां वसतौ गृहे वासम् आयात् प्राप । नलो भीमोद्दिष्टर्तुपर्णनिवासं दमयन्त्या व्याजं स्मरन्नुत्तमां वसतिं गतवानिति भाव: । प्रतीते प्रतिख्यानवित्तविज्ञानविश्रुता: । वसतीरात्रिवेश्मनो: । सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् । दैर्घ्यमायाम: । आयादिति यातेर्लङि । यद्वा चारुतमाया: अत्यन्तसुन्दर्या: दमयन्त्या: वसतौ गृहे वासमायात् न प्राप किन्तु रथोपरि तस्थौ । अत्रेयं पुराणवार्ता - नलस्तावत् भीमगृहं न ययौ किन्तु रथोपरि तस्थौ । तच्छ्रुत्वा दमयन्ती प्रासादमारुह्य नलं समीक्ष्य हृष्टा बभूवेति तदेवाह ॥२९ ॥

**अनुवाद**—उस पवित्र (नल ने) शोभा के विषय में प्रसिद्ध और प्राणों के समान प्रिय दमयन्ती की माया (स्वयंवर आयोजन) का स्मरण करते हुए सुन्दर अतिश्रेष्ठ विस्तार वाले भवन में निवास किया ॥२९ ॥

**तं स्वनयानन्तरसान्निध्यगतमवेक्ष्य[1] नुन्नयानन्तरसा ।**

---

१. प्रेक्ष्य इति 'ञ' पुस्तके ।

**अभ्युदयानन्तरसावधित मुदा नैषधप्रियाऽनन्तरसा ॥३० ॥**

**अन्वयः**—तरसा नुन्नयानं स्वनयानन्तरसान्निध्यगतं तं (नलम्) अवेक्ष्य अनन्तरसा असौ नैषधप्रिया मुदा अन्तः अभ्युदयान् अधित ॥३० ॥

**विद्यावती**—तमिति- तरसा वेगेन नुन्नयानं प्रेरितरथं तं स्वप्रियं नलम् अवेक्ष्य ज्ञात्वा असौ इयं नैषधप्रिया दमयन्ती मुदा हर्षेण अन्तः मनसि अभ्युदयान् अधित प्राप्तवती। कीदृशं तम्? स्वनयानन्तरसान्निध्यगतं स्वस्य नयस्य नीतेः प्रयोगाद् अनन्तरं पश्चात् सान्निध्यगतं कुण्डिनपुरम् आगतम्। सा दमयन्ती नलप्राप्तये वृथैव स्वस्वयंवरायोजनं ब्राह्मणमुखेन ऋतुपर्णं शुश्राव वर्णितमिति पूर्वम् कविना। तस्या एव नीतेः प्रयोगात् परमिहागतमिति भावः। कीदृशी सा? अनन्तरसा न अन्तः अनन्तः तथाविधो रसोऽनुरागः यस्याः सा ॥३० ॥

**यमकबोधिनी**—तमिति - असौ नैषधप्रिया दमयन्ती अन्तर्मध्ये अभ्युदयान् कल्याणानि अधित धृतवती। किं कृत्वा? तं नलं प्रेक्ष्य। किं लक्षणं नलम्? स्वनयानन्तरसान्निध्यगतं निजनीत्यनन्तरं निकटं प्राप्तम्। अथवा पदद्वयम्। किं लक्षणान् अभ्युदयान्? स्वनयान् स्वेन आत्मना नयो नयनं येषां ते तथा तान्। किं लक्षणं तम्? अनन्तरसान्निध्यगतम् आत्मीयनिकटगतम्। बहिरवसर-मध्येऽन्तरात्मनि चेत्यमरः। पुनः किं लक्षणम्? तरसा वेगेन नुन्नयानं प्रेरितशकटम्। सर्वं स्याद्वाहनं यानं युग्यं पत्रं धारणमित्यमरः। किं लक्षणा-सा? अनन्तरसा अनन्तानुरागा। अनन्तहर्षारागोऽनुरागोऽनुरतिः इति हलायुधः रसो जलं रसो हर्षो रसः शृङ्गारपूर्वकः। रसः स्वाद्यं विनिर्यासः पारदोऽपि रसो विषमित्यनेकार्थध्वनिमञ्जरी ॥३८ ॥

**दीपिका**—तं स्वनयेनेति – नैषधप्रिया दमयन्ती तं नलं प्रेक्ष्य अन्तः अन्तःकरणे मुदा तोषेण अभ्युदयान् सुखानि अधित प्रापदित्यर्थः। किम्भूतं तम्? प्रेरिताश्वम्। किम्भूता? नैषधप्रिया? अनन्तरसा बहुतरकामरसा ॥३० ॥

**सुबोधिनी**—तमिति- स्वनयानन्तरसान्निध्यं स्वस्यात्मनो नयो नीतिः स्वयंवर घोषणस्य ऋतुपर्णश्रावणं तदनन्तरं तदुत्तरकालेऽविलम्बेन सान्निध्यं समीपं गतं तरसा वेगेन नुन्नयानं प्रेरितहयं तं नलमवेक्ष्यज्ञात्वा अनन्तरम् अनन्तो बहुलो रसः शृङ्गारः स्तम्भोऽनुरागो यस्यास्तादृश्यसौ दमयन्ती नैषधप्रिया नैषधो नलस्तस्य प्रिया अन्तर्मनसि अभ्युदयान् श्रेयांसि सुखानि वा मुदा हर्षेण अधित धृतवती। स्वनीत्युत्तरकालम् आगतं नलं दृष्टवा बहुलमानन्दम् अवापेति भावः। शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः। अधितेति धाञो लुङि सिचि ॥३० ॥

**अनुवाद**—अपनी नीति के प्रयोग के बाद शीघ्र रथ चला कर पास आये उस नल को जान कर अनंत प्रेम से युक्त उस दमयन्ती ने मन में अभ्युदयों को प्राप्त किया ॥३० ॥

**युग्मकम्**[१]—

> **तन्नुन्नाऽऽली केन स्थीयत इत्यत्र सुमुखनालीकेन ।**
> **किं हीनालीकेन स्वकमित्रा कृत्तरिपुजनालीकेन ॥३१ ॥**
>
> **तं साम्नाऽमा**[२] **नयतः परीक्ष्य बहुधा गुणाभिरामा न यतः ।**
>
> **स्वजनगिरा मानयतः**[३] **स्ववयस्या वसतिमपि परामानयत ॥३२ ॥**

**अन्वयः**—किं कृत्तरिपुजनालीकेन हीनालीकेन सुमुखनालीकेन स्वकमित्रा अत्र केन स्थीयते इति (ज्ञातुं) आली तन्नुन्ना ॥३१ ॥ यतः गुणाभिरामाः न, तं साम्ना अमा नयतः बहुधा परीक्ष्य मानयतः (इति हेतोः) स्वजनगिरा पराम् अपि स्ववयस्यावसतिम् आनयत ॥३२ ॥

**विद्यावती**—तन्नुन्नेति- तया दमयन्त्या आली सखी नुन्ना प्रेरिता। किमर्थम्? किं कृत्तरिपुजनालीकेन कृत्तानि छिन्नानि रिपुजनानां शत्रुजनानाम् आली पङ्क्तिः तस्याः कानि कं शिरोऽम्बुनोरित्यमरः' 'सुखशीर्षजलेषु कम्' इति च मेदिनी शिरांसि येन सः कृत्तरिपुजनालीकः तेन नलेन अत्र भवने केन सुखेन स्थीयते वा न वेति ज्ञातुम्। पुनः कीदृशेन? हीनालीकेन हीनं व्यक्तम् अलीकं येन सः। पुनः किं विधेन? सुमुखनालीकेन मुखमेव नालीकं कमलं मुखनालीकम्। शोभनं मुखनालीकं यस्य सः तेन। स्वकमित्रा 'कम्' धातोः णिङभावपक्षे तृचि इडागमे कमितृ इति रूपम्। णिङि तु कामयितृ। स्वस्य कमित्रा प्रियेणेत्यर्थः। दमयन्त्या केशिनी प्रेरितेति भारतेऽपि नलोपाख्याने वर्णितम्। अभूदिति शेषः ॥३१ ॥ तमिति- यतः यस्मात् अधिकाः गुणाभिरामाः न भवन्ति तं नलं, साम्ना 'साम सान्त्वप्रयोगे' इति धातोः कनिन् सामन् तेन अमा सह सान्त्वनावचनेन सहेत्यर्थः। किं कृत्वा? नयतः नयो नीतिः ततः बहुधा बहुप्रकारेण परीक्ष्य परीक्षणं कृत्वा नल एवायमिति मनसि निश्चीय, मानयतः उररीकुर्वतः इति हेतोः स्वजनगिरा स्वजनस्य दमयन्त्याः गिरा 'ब्राह्मी तु भारती भाषा गीर्वाग् वाणी सरस्वतीत्यमरः' वाण्या आज्ञया पराम् उत्कृष्टां स्ववयस्यावसतिं वयसा तुल्या वयस्या स्वस्याः वयस्यायाः दमयन्त्याः वसतिं निवासभवनम् आनयत आनीतवती। दमयन्त्या प्रेरिता सखी नलं तस्याः गृहम् आनीतवतीति भावः सा रामा इति पाठे तु सा दमयन्तीनुन्ना रामा केशिनीति योजना ॥३२ ॥

**यमकबोधिनी**—तन्नुन्नेति - साम्ना सान्त्ववाक्येन अमा सह तन्नुन्ना तया दमयन्त्या प्रेरिता आली सखी तं नलम् इत्यमुना प्रकारेण अमानयत मानयामासेति द्वयोरन्वयः। अपि पुनः आली स्ववयस्यायाः वसतिं गृहं दमयन्तीगृहम् आनयत आनीतवती। कया?

---

१. केवलं यमकबोधिन्यां दीपिकायां चानयोर्युग्मकत्वं स्वीकृतम्।

२. तं सा रामा इति 'ञ' पुस्तके।

३. स्वजनगिराऽमा इति 'ञ' पुस्तके।

स्वजनगिरा दमयन्तीवाण्या । अयमुभयत्र हेतुः । किं कृत्वा ? नयतो न्यायात् परीक्ष्य परीक्षणं कृत्वा ।ननु परीक्षणं किमर्थम् ? तत्राह-यतो नलात् अन्ये पुरुषाः गुणाभिरामाः गुणश्रेष्ठाः न अपितु सन्त्येव। अन्यपुरुषाणामपि गुणश्रेष्ठत्वभ्रान्त्या न्यायान्नलपरीक्षणम्। इति कथम् ? केन ! हे सुखस्वामिन् ! वा शिरः प्रभो ! स्वकमित्रा स्वामिना अत्र स्थले किं स्थीयते। किं लक्षणेन स्वकमित्रा ? सुमुखनालीकेन शोभनमुखपद्मेन । अथवा हे सुमुखनालीक ! हे इन ! हे स्वामिन् ! अत्र स्थले केन स्थीयते । न केनापि स्वकमित्रा स्वकामिना । किं पुनः अत्र स्थले स्थीयते ने केनापि स्वभर्त्रा न स्थीयते इति किं वाच्यम्? अतो वल्लभान्तिकमागम्यतामिति भावः । किं लक्षणेन स्वकमित्रा ? हीनालीकेन क्षीणानृतेन । पुनः किं लक्षणेन ? कृत्तरिपुजनालीकेन कृत्ता छिन्ना रिपुजनानामाली श्रेणी कपटं वा येन स तथा तेन। किं लक्षणां वसतिम्? पराम् उत्कृष्टामिति युग्मश्लोकार्थः ॥३१-३२ ॥

**दीपिका**—तन्नुनेति- तं साम्नेति युग्मम् । सा आली सखी साम्ना सामवचनोपन्यासेन कृत्वा नयतः नीति मार्गात् तं नलं बहुधानेकप्रकारेण परीक्ष्य विज्ञाय स्वजनगिरा दमयन्तीवचनेन आमानयत अपूजयत् ।अपि च पुनः परामुत्कृष्टां स्ववयस्या वसतिं दमयन्तीगृहभूमिम् आनयत प्रापयामास। तं कम्? यतः गुणाभिरामाः शीलसौन्दर्यगुणमनोहराः पुरुषाः पुमांसः न सन्तीत्यर्थः । किम्भूता आली ? अत्र इति वेदितुं ज्ञातुं तत्र तया दमयन्त्या प्रेरिता । किम्भूतेन स्वकमित्रा ? सुमुखनालीकेन शोभनमुखकमलेन । पुनः किम्भूतेन स्वकमित्रा ? हीनालीकेन क्षीणकपटेन । पुनः किम्भूतेन स्वकमित्रा ? कृत्तरिपुजनालीकेन नाशितशत्रुजनश्रेणिना ॥३१-३२ ॥

**सुबोधिनी**—तन्नुनेति- कृत्तरिपुजनालीकेन कृत्तानि छिन्नानि रिपुजनानाम् आली पङ्क्तिस्तस्याः कानि शिरांसि येन तथा सुमुखनालीकेन शोभनमुखपद्मेन हीनालीकेन हीनं त्यक्तम् अलीकं पापं येन तेन तथा स्वकमित्रा स्वकामुकेन नलेन किमत्र गृहे ऋतुपर्णवाससौधे केन सुखेन स्थीयते इति हेतोः दमयन्त्या प्रेरिता सा आली केशिनी स्ववयस्यावसतिं स्वसखी तस्याः निवासवेश्मानयतेत्युत्तरश्लोकेनान्वयः। ऋतुपर्णवासगृहे कथं नलस्तिष्ठतीति ज्ञातुं प्रेषिता सखी तं गृहमनयदितिभावः । छिन्नं छान्तं कृत्तं दिष्टं छितं वृक्णम् । आली सखी वयस्या च । कं शिरोऽम्बुनोः । स्थीयत इति घुमास्थागापाजहातिसां हलीत्वम् । नालीकं शरपद्मयोः । अलीकं त्वप्रियेऽनृते ॥३१ ॥ तमिति- भैमीप्रेरिता केशिनी तं नलं साम्ना अमा सान्त्वेन सहितं नयतः नीतितः बहुधा नाना प्रकारेण परीक्ष्य नल एवायमिति ज्ञात्वा स्ववयस्यायाः भैम्याः वसतिं भवनमपि परामुत्कृष्टां स्वजनगिरा दमयन्ती स्वजनानां वाक्येन आनयत आनीवती । तं कम्? यतः यस्मान्नलात् मानयतः लक्ष्मीः प्रापयतः अर्जयतः अन्ये केऽपि गुणाभिरामा गुणरमणीया न भवन्ति । यद्वा कीदृशो नलः ? मानयतः माने नयतः मानीत्यर्थः । पुरुषश्रेष्ठं नलं

निश्चित्य प्रेषित्ता। भैमी तद्भवनं निनायेतिभावः। बन्धुस्वस्वजनाः समाः। अनयतेति नीयो लङि। अत्र परीक्षायाः पुराणवार्ता - भैमी केशिनीमुवाच गच्छ रथान्तिके। बहुकनामा क एष अत्र मम आशङ्का भवति। तत्र गत्वा पर्णादवाक्यं श्रावय। सा गत्वा बाहुकमुवाच। त्वां दमयन्ती पृच्छति यूयं किमर्थमागताः। बाहुक उवाच - तस्याः स्वयंवरं श्रुत्वा अयोध्यातः एकाह्नेनैवागताः। पुनः केशिनी उवाच-कस्त्वम्। बाहुक उवाच वार्ष्णेयनामा नलासारथिरासीत्। नले राज्यात् भ्रष्टे ऋतुपर्णमाश्रितः। अहमप्यस्य सूतः। केशिन्युवाच - वार्ष्णेयनलवृत्तान्तवित् त्वम् वा। बाहुक उवाच नलं न कोऽपि जानाति। ततः पर्णादानीतश्लोकपञ्चकं श्रावितं तच्छ्रुत्वा तूष्णीमास, एतत्सर्वं भैम्यै कथायामास। भैमी पुनः तामुवाच - पुनर्याहि पाकार्थं जलाग्निं विना सामग्रीं देहि। केशिनी तथा कृत्वा नदलदत्तश्लोकमेकं गृहीत्वा आगता। श्लोको यथा -

**मम राज्यं प्रणष्टं यत् तन्नाहं कृतवान् स्वयम्।**

**कलिनैतत् कृतं भीरू यच्च त्वामहमत्यजम्॥**

स कलिरिदानीं मां विमुच्य गतः। तच्छ्रुत्वा भैमी सन्दिग्धा उवाच - पुनर्गत्वा तच्चेष्टामनुभव। सा तथा कृत्वा गत्वोवाच ईदृक् पुरुषो न क्वापि दृष्टो न श्रुतः यत्स्पर्शे स्वल्पं द्रव्यं प्रचुरंभवति। कदापि शिरो न नमति। दुष्करमप्यस्य सुकरं भवति। अपरं च तव पित्रा मांसं प्रेरितं तत्प्रक्षालनार्थं शून्यकुम्भः प्रेरितः। स कुम्भः तत्स्पर्शाद्वारिपूर्णो बभूव। तेन तृणे गृहीतेऽग्निर्जज्वाल। अग्निस्पृष्टो न दहति। तत्करमर्दितपुष्पं न म्लायति। ततः केशिनी इन्द्रसेनं तत्पुत्रम् इन्द्रसेनां कन्यां नीत्वा ययौ। बाहुकस्तौ दृष्ट्वा क्रोडे कृत्वा रुरोद। क्षणात् तौ त्यक्त्वा ममापि सुतावीदृशौ इति जुगोप सः। बाहुकेन पक्वव्यञ्जनं केशिनी द्वाराआनीयाऽऽस्वाद्य नलोऽयमिति ज्ञात्वा निश्चयमकरोत्। ततः केशिनीं प्रस्थाप्य नानास्तुतिं कारयित्वा गृहमानयामासेति भावः॥३२॥

**अनुवाद**— शत्रु समूहों का शिरोच्छेदक निष्पाप और सुन्दर मुख वाला मेरा प्रिय नल क्या यहां महल में सुख पूर्वक है ? यह जानने के लिये दमयंती ने सखी को भेजा॥३१॥ जिससे अधिक गुणाभिराम लोग नहीं है। उस (नलको) सान्त्वना वचनों और अनेक नीतियों से अच्छी तरह पहचान कर, (यह) इन सभी बातों को स्वीकार करता है इसलिये (उसे) दमयन्ती की आज्ञा से अतिसुन्दर अपनी सखी के भवन में ले गई॥३२॥

**तरसैवाऽसावास स्वां विकृतिमहेर्वहन्[१] सुवासा वासः।**

**स्थिरभावाऽसावास स्निग्धश्चारंस्त नृपतिवासावासः॥३३॥**

१. विकृतिमहेर्वसन् इति 'ञ' पुस्तके।

**अन्वयः**— असौ सुवासाः तरसा एव अहेः वासः वहन् स्वां विकृतिम् आस स्थिरभावा असौ च आस । स्निग्धः नृपतिवासावासः अरंस्त ॥३३ ॥

**विद्यावती**—तरसैवेति - असौ नलः अरंस्त रेमे । कीदृशोऽसौ ? सुवासाः शोभनं वासः वस्त्रं यस्य सः । तरसा शीघ्रम् । अहेः कर्कोटकाख्यस्य सर्पस्य । कर्कोटको दवाग्नौ पतितो विपद्ग्रस्तेन नलेन रक्षितः । स च प्रसन्नो भूत्वा वस्त्रयुग्मकं दत्तवान् अस्मै । आपत्तौ तं नलं न कोऽपि परिचिनोत्विति धिया च दंशितो नलस्तेन । तस्य शरीर उत्पादितं च विकृतित्वमिति वर्णितं कविना पूर्वम् । तदेव वास इह विकृतित्वनिरासाय धारितं नलेनेत्यवगन्तव्यम् । विकृतिं कुब्जत्वादिविकृतिं कर्कोटकेनोत्पादिताम् आस । असु क्षेपणे इति धातोः लिटि रूपम् तत्याजेत्यर्थः । वस्त्रयुग्मकेनानेन तद्विकृत्यादयो दोषाः अपास्ता इति विवक्षति । असौ दमयन्ती कीदृशी ? स्थिरभावा स्थिराः भावाः यस्याः सा तादृशी आस रराज शोभायुक्ता बभूव । किं विधो नलः ? नृपतिवासावासः नृपतेः भीमस्य वासे भवने आवासो निवासो यस्य सः । भीमगृहे वसन् इत्यर्थः । दमयन्त्या सहेति शेषः ॥३३ ॥

**यमकबोधिनी**— तरसेति-असौ नलः तरसेनैव वेगेनैव स्वविकृतिम् आस निजविकारं विरूपत्वं चिक्षेप । कि कुर्वन् ? अहेः कर्कोटकस्य वासो वस्त्रं वहन् धारयन् । किं लक्षणोऽसौ ? सुवासाः शोभनवस्त्रः वा वितर्के । सा दमयन्ती स्थिरभावा सती अरंस्त । स च नलः स्निग्धः सन् रेमे । किं लक्षणः सः ? नृपतिवासावासः नृपतिवासे भीमगृहे वासो यस्य स तथा ॥३३ ॥

**दीपिका**—तरसैवेति - असौ नलः तरसैव शीघ्रमेव स्वां विकृतिं निजां विवर्णताम् आस चिक्षेप । किं कुर्वन् ? अहेः कर्कोटकस्य वासः वस्त्रं वहन् दधत् । किम्भूतोऽसौ ? सुवासाः शोभनवस्त्रः । असौ दमयन्ती स्थिरभावा आस निश्चलचित्ता अभूत् । च पुनः स्निग्धः स्नेहवान् नलः तया दमयन्त्या अरंस्त रेमे । किम्भूतः सः ? नृपतिवासा-वासः नृपतिवासः आवासो यस्य सः ॥३३ ॥

**सुबोधिनी**—तरसैवेति- सुवासाः शोभनं वासो यस्य तादृगसौ नलः अहेः कर्कोटकवासो वस्त्रं वहन् परिदधन् स्वाकृतिविकारं कुब्जत्वं वैरुप्यलक्षणम् आस जहौ । सा दमयन्ती वा स्थिरस्वभावा निश्चलस्वाभिप्राया आस शुशुभे । नृपतिवासे भीमगृहे आवासो निवासो यस्य तादृक् भीमसौधगतः स्निग्धः स्नेहवान् अरंस्त रेमे । दमयन्त्या सहेति शेषः । वस्त्रमाच्छादनं वासः । आसेति असु क्षेपणे इत्यस्य लिटि रूपम् । द्वितीयम् अस् गतिदीप्त्यादावित्यस्य रूपम् । अरंस्तेति रमेर्लङि ॥३३ ॥

**अनुवाद**—सुन्दर वस्त्रों वाले उस नल ने शीघ्र ही सर्प के (कर्कोटक साँप द्वारा प्राप्त) वस्त्र को पहन कर अपनी विकृति (कुबड़े पन आदि दोषों) को दूर किया । स्थिर अभिप्राय वाली वह दमयन्ती सुशोभित हुई । स्नेहवान् (और) भीम के घर में आवास पाये हुए नल ने रमण किया ॥३३ ॥

**नृपधामनि शान्तेन व्यतीत्य भैमीसमागमनिशान्तेन।**

**द्विषतामनिशान्तेन श्वसुरो दृष्टः श्रितोत्तमनिशान्तेन ॥३४॥**

**अन्वयः**—तेन शान्तेन द्विषताम् अनिशान्तेन श्रितोत्तमनिशान्तेन भैमीसमागमनिशां व्यतीत्य नृपधामनि श्वसुरः दृष्टः ॥३४॥

**विद्यावती**—नृपेति- सः नलः रात्रौ दमयन्त्याः रमणं प्राप्य प्रातः श्वसुरं दमयन्त्याः पितरं भीमं दृष्टवान्। तेन नलेन कीदृशेन? शान्तेन। पुनः किं विधेन? श्रित्तोत्तमनिशान्तेन श्रितं प्राप्तम् उत्तमं निशान्तं भवनं येन। निशान्तवस्त्यसदनमित्यमरः। तेन नलेनेत्यर्थः। पुनः किं विधेन? द्विषताम् अनिशान्तेन द्विषताम् अरीणां शान्तः नितरां निशान्तः न निशान्तः अनिशान्तः तेन शत्रुनाशकेनेत्यर्थः। किं कृत्वा? भैमी समागमनिशां व्यतीत्य भैम्याः स्वप्रियायाः दमयन्त्याः समागमः सम्भोगः तस्य निशां रात्रिं व्यतीत्य समाप्य नृपधामनि नृपो राजा भीमः तस्य भवने श्वसुरः भैम्याः पिता दृष्टः विलोकितः ॥३४॥

**यमकबोधिनी**—नृपेति-तेन नलेन श्वसुरो भीमो दुष्टः। किं कृत्वा? नृपधामनि राजगृहे भैमीसमागमनिशां दमयन्तीसमागमरात्रिं व्यतीत्य अतिवाह्य प्रभाते इत्यर्थः। किं लक्षणेन तेन? शान्तेन शान्तिमता। पुनः किं लक्षणेन? द्विषतां शत्रूणाम् अनि-शान्तेन अनिशं नितान्तम् अन्तो यस्मात् स अनिशान्तः सन्ततमृत्युः तेन। पुनः किं लक्षणेन तेन? श्रितोत्तमनिशान्तेन श्रितम् उत्तमं निशान्तं गृहं येन सः तेन आश्रितश्रेष्ठगृहेण ॥३४॥

**दीपिका**—नृपधामनीति - तेन नलेन नृपधामनि श्वसुरो भीमः दृष्टः अवलोकितः। किं कृत्वा? भैमीसमागमनिशां रात्रिं व्यतीत्य समाप्य। किम्भूतेन तेन? शान्तेन शान्तियुक्तेन। पुनः किम्भूतेन? द्विषतां शत्रूणाम् अनिशं निरन्तरम् अन्तेन नाशेन। पुनः किम्भूतेन तेन? श्रितोत्तमनिशान्तेन समाश्रितोत्कृष्टहर्षेण ॥३४॥

**सुबोधिनी**—नृपेति- नृपस्य भीमस्य धामनि गृहे शान्तेन क्षमायुक्तेन श्रितोत्तमनिशान्तेन श्रितम् उत्तमं निशान्तं येन तादृशेन द्विषतां शत्रूणामनिशम् अन्तो नाशो यस्मात् तादृशेन नलेन भैमीसमागमनिशा भैमी दमयन्ती तस्याः समागमो यत्र तां निशां व्यतीत्य व्युत्क्रम्य श्वशुरो भीमो दृष्टः। भीमगृहे दमयन्तीसमागमरात्रिं व्यतीत्य प्रातर्भीममद्राक्षीदिति भावः। निशान्तवस्त्यसदनं भवनागारमन्दिरमित्यमरः। धामरश्मौ गृहे इति हेमचन्द्रः ॥३४॥

**अनुवाद**— उस शान्त, शत्रुओं के विनाशक, उत्तमभवन को प्राप्त करने वाले नल ने दमयन्ती के समागम की रात्रि को बिता कर प्रातः श्वशुर के दर्शन किया ॥३४॥

**धृतजडिमा नेहाऽऽसीद्‌तुपर्णोऽपि[1] प्रद्दश्यमाने हासी।**

---

१. ऋतुपर्णेऽस्मिन् इति 'ञ' पुस्तके।

**आत्मसमानेऽहासीदभिपूज्यैनं नलोऽरिमानेहासी ॥३५ ॥**

**अन्वयः**—हासी ऋतुपर्णः आत्मसमाने प्रदृश्यमाने धृतजडिमा (सन्) इह न आसीत् । अरिमाने हासी नलः अपि एनम् अभिपूज्य अहासीत् ॥३५ ॥

**विद्यावती**—धृतेति - हासी हासयुक्तः ऋतुपर्णः एतन्नामा नरेशः विपदि यस्य गृहे अयोध्यायां नल उवास । स राजा आत्मसमाने स्वसदृशे प्रदृश्यमाने नले ज्ञायमाने सति इह अत्र भीमपुरे धृतजडिमा धृता जडिमा येन सः तथाविधः सन् न आसीत् न अभूत् किन्तु गतः । बाहुकोऽयं मम सारथिर्न सारथिरपितु नलः दमयन्त्याः पतिः । पूर्वं तेन सह कृतव्यवहारादिकं संस्मृत्य जडो जातः प्रस्थितश्च अयोध्यां प्रति । अरिमाने हासी अरीणां द्विषतां मानोऽभिमानः तस्मिन् हासी रिपुमानहासकः नलः एनम् ऋतुपर्णम् अभिपूज्य सम्पूज्य अहासीत् अत्यजत् । तं तस्य नगरं प्रति स्नेहेन अगमयत् ॥३५ ॥

**यमकबोधिनी**—धृतेति- ऋतुपर्णः इह भीमपुरे अस्मिन् नले पुरे प्रदृश्यमाने सति धृतजडिमा न आसीत् । धृता जडिमा जडत्वं येन सः तथाविधो न बभूव धीरत्वात् । कि लक्षणेऽस्मिन् ? आत्मसमाने आत्मसदृशे राजवेषधारिणीत्यर्थः । नलश्च एनम् ऋतुपर्णम् अभिपूज्य बहुधाऽसकृत् अहासीत् अत्याक्षीत् प्रस्थापयामास इत्यर्थः । किं लक्षणो नलः ? हासी हास्ययुक्तः । पुनः किं लक्षणो नलः ? अरिमानेहासी अरीणां मानस्तस्येहा चेष्टा ताम् हसतीत्येवं शीलः शत्रुवर्गचेष्टाक्षेपी । अहासीदिति ओहाक् त्यागे इति धातोर्लुङि परस्मैपदे प्रथमपुरुषैकवचनम् ॥३५ ॥

**दीपिका**—धृतजडिमेति-ऋतुपर्णोऽपि दृश्यमाने आलोक्यमाने नले धृतजडिमा धृतजाड्यः न आसीत् न अभूत् । अत्यानन्दाज्जाड्यं परित्यज्य सम्यग् दृष्टवान् इत्यर्थः । किम्भूते ? इह आत्मसमाने निजतुल्ये हासी हास्ययुक्तः नलः एनम् ऋतुपर्णमभिपूज्य अर्चयित्वा अहासीत् तत्याज । किम्भूतो नलः ? अरिमानेहासी अहितानामभिमानचेष्टामस्यति सः ॥३५ ॥

**सुबोधिनी**— धृतेति - ना पुरुषः ऋतुपर्णोऽस्मिन्नात्मसमाने आत्मसदृशे प्रदृश्यमाने ज्ञायमाने सति इह भीमो रहसि धृतजडिमा धृतजडभाव आसीत् । यद्वा धृतजडिमा न आसीदपि तु जडोऽभूदित्यर्थः । काक्वर्थे नञ् । अरिमाने हासी अरीणां शत्रूणां माने हसितुं शीलमस्येति तादृक् । यद्वा अरिमानेहासी । षोऽन्तकर्मणीति धातोः प्रयोगः । अरिमानस्य शत्र्वभिमानस्य ईहा चेष्टा तस्या नाशक इत्यर्थः । हासी हासयुक्तो नल एनमृतुपर्णं सम्पूज्य व्यसर्जयत् । पृथ्वादिभ्य इमनिज्वेतीमनिच् । आसीदिति अस्तेर्लङि । यद्वा ऋतुपर्णः कथं भूतः ? अहासी हास्यरहितः । अथवा हा इति कृत्वा आसी । आसः आक्षेपः तद्युक्तः । हा त्वयि ममापराधो जात इत्याक्षेपयुक्तः इत्यर्थः ॥३५ ॥

**अनुवाद**—हास युक्त ऋतुपर्ण अपने समान (नल के दिखाई देने पर (जड़ होकर यहां नहीं ठहरा) शत्रुओं के मान के उपहासी नल ने भी इसे सादर विदा किया ॥३५ ॥

**सासुसमासामा सः स्वयमत्र पुरे[1] नलोऽयमासामास ।**

**स्त्रीणामाऽऽसामाऽऽस श्रममुनाऽनायि सुमुखमासा मासः ॥३६ ॥**

**अन्वयः**— सासुसमासामा सः अयं नलः स्वयम् अत्र पुरे आसामास । आसां स्त्रीणां (च) श्रमम् आस । (एवम्) अमुना सुमुखमासा मासः अनायि ॥३६ ॥

**विद्यावती**—सेति - सासुसमासामा असुभिः प्राणैः समातुल्या सदृशी वा सा असुसमा दमयन्ती सा एव साम सान्त्वनोपायः विपदुद्गतस्य नलस्य सान्त्वनेति तेन सहितः सासुसमासामा । स च नलोऽयं स्वयं पुरे अत्र भीमनगरे आसामास । आमन्तादनु प्रयुक्तादसधातोः लिटिरूपम् । दायायासश्चेति पाणिनिसूत्रं प्रमाणमिह । विविधसुखभोगपूर्वकमुवासेत्यर्थः । तत्र किं चकार ? आसाम् अमूषां स्त्रीणां नारीणां श्रमं स्वविरहजन्यं दुःखम् आस । असु क्षेपणे इति धातोर्लिटि । तासां दुःखं दूरीकृतवानित्यर्थः । एवं प्रकारेण अमुना राज्ञा नलेन । किं विधेन ? सुमुखमासा मुखमेव माः चन्द्रः इति मुखमाः । शोभनः मुखमाः यस्य सः तेन । 'मास्तु मासे निशाकरे' इति हैमः । भीमपुर्यां मासः मासात्मकः कलोऽनायि यापित इत्यर्थः ॥३६ ॥

**यमकबोधिनी**— सेति- सा दमयन्ती असुसमासामा आस बभूव । असुसमे प्राणतुल्ये नले आ समन्तात् साम यस्याः सा तथा । अथवा सोऽयं नल इह पुरे स्वैरं यथेच्छम् आसामास स्थितो बभूव । किं लक्षणः सः ? सासुसमा यः स तथा सासुसमासामा आसां स्त्रीणां भीमपुरवनितानां श्रमं च आस चिक्षेप । तद्दर्शनेन स्त्रीणां श्रमनाशात् । चकारस्याध्याहारः । अमुना नलेन पुरे भीमपुर्यां मासः पक्षद्वयम् अनायि नीतः । किं लक्षणेन अमुना ? सुमुखमासा शोभनं मुखचन्द्रेण अथवा सुमुखानां शोभनवदनानां मां शोभाम् अस्यति क्षिपतीति तथा तेन ॥३६ ॥

**दीपिका**—सासुसमेति- सोऽयं नलः स्वयम् अत्र पुरे कुण्डिननगरे आसामास स्वैरं निवसति स्म । किम्भूतोऽयम् ? सासुसमासामा प्राणसमा सामवाक्यैः सह वर्तमानः । स नलः आ समन्ततः पुरगतानां स्त्रीणां श्रमं दुःखम् आस नुनोद । अमुना नलेन अनेन प्रकारेण मासः अनायि नीतः । किम्भूतेनामुना ? सुमुखमासा शोभनमुखचन्द्रेण ॥३६ ।

**सुबोधिनी**— सेति -सः अयं नलः अत्र पुरे भीमपुर्यां स्वयमासामास तस्थौ । स्वयमित्यत्र स्वैरमिति पाठे स्वैरं स्वच्छन्दम् आसामासेत्यर्थः । कथं भूतः ? सासुसमासामा असुना प्राणेन समा असुसमा दमयन्ती तस्याः साम सान्त्वं तेन सहितो दमयन्तीकृतसान्त्वः । आसां स्त्रीणां स्वावरोधवधूनां श्रमम् आस चिक्षेप । चिरविरहजं दुःखं नुनोद । कीदृशेन ? मुखतुलितमासा मुखेन तुलितः समीकृतो

---

१. स्वैरमिह पुरे इति 'ञ' पुस्तके

माश्चन्द्रो येन तादृशेन अमुना नलेन मासोऽनायि निन्ये । स नलो विरहपीडितस्य स्त्रीगणस्य क्लेशमपाहार्षीत् । एवं मासो व्युच्चक्रामेति भावः । मास्तु मासे निशाकरे इति हैमः । आसेति असु क्षेपणे इत्यस्य लिटि । अगादितीणो लुङि । अत्रेयं पुराणवार्ता-स ऋतुपर्णस्तच्छ्रुत्वा नलं ज्ञात्वा सापराधः सन् नलमुवाच मम कृतमपराधं क्षमस्व । दिष्टया भार्यया सङ्गतोऽसि । नल उवाच-नापराधस्ते कलिकृतमेवैतत् । अश्वहृदयविद्यां गृहाण । स ततस्तां गृहीत्वा सारथिना अयोध्यां ययौ । नलस्तत्र मासमेकं स्थित्वा पुरं गत्वा पुष्करमुवाचेति तदेवाह ॥३६ ॥

**अनुवाद**— प्राणों के समान प्रिय वह दमयन्ती, जो सान्त्वना के उपाय से युक्त थी, के साथ वह नल स्वयं इस नगर में रहा । (अपने विरह से उत्पन्न) इन स्त्रियों के दु:ख को दूर किया । इस प्रकार इस सुन्दर मुख चन्द्रवाले ने यहां एक माह बिताया ॥३६ ॥

**अथ महादाऽऽराऽजितया चम्वा स्वपुरं नलस्तदा राजितया ।**

**सासिगदाराजितया पुष्करमभ्यधादुदाराजितया[१] ॥३७ ॥**

**अन्वयः**—अथ तदा नलः अजितया राजितया सासिगदाराजितया चम्वा महत् स्वपुरम् आर । उदाराजितया पुष्करम् अभितः अभ्यधात् ॥३७ ॥

**विद्यावती**—अथेति- कुण्डिनपुरात् नलः स्वपुरमागतः इति सविशेषं वर्णयति — अथ अनन्तरं तदा तस्मिन् समये मासात्मकं कालं भीमगृहे व्यतीत्येति भावः । नलः नैषधः काव्यनायकः अजितया न जिता इत्यजिता तया । पुनः किं विधया ? राजितया 'राजिः रेखायां पङ्क्तौ चेति हैमः' राजिः पङ्क्तिः तस्याः भावः राजिता तया । पुनः किं विधया ? सासिगदाराजितया 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः' इत्यमरः असयश्च गदाश्चेति असिगदाः तासाम् असिगदानां राजिः समूहः असिगदाराजिः तस्य भावस्तत्ता तया, चम्वा 'ध्वजिनी वाहिनी सेना पृतनानीकनी चमू'रित्यमरः । सेनया सहेत्यर्थः । महत् विशालं स्वपुरं स्वनगरम् आर प्राप । 'ऋ गताविति लिटि' । पुनः उदाराजितया 'उदारो दातृमहतोर्दक्षिणेऽप्यभिधेयवदिति' मेदिनी, उदारा महती आजिः सङ्ग्रामः यस्य सः तस्य भावः तया शोभितः पुष्करम् इत्याख्यं नरेशं, येन छलितो द्यूते पूर्वं नलः, तम् अभितः अभ्यधात्, युद्धाय पुष्करस्य समीपं गतवानित्यर्थः ॥३७ ॥

**यमकबोधिनी**—अथेति - अथानन्तरं स नलः तदा स्वपुरम् आर निजनगरं प्राप । कया ? चम्वा सेनया सह किं लक्षणया चम्वा ? अजितया केनापि न जितया । किं लक्षणं पुरम् ? महत् विशालम् । पुनः किं लक्षणया चम्वा ? सासिगदाराजितया असयश्च गदाश्च तेषां राजिस्तस्याः भावस्तत्ता तया खड्गगदापङ्क्तिः तया शोभितया अपि । पुनः

---

१. पुष्करमभ्यधायि इति ङ पुस्तके पाठः।

उदाराजितया उदारा चासौ आजिश्च तस्या भाव: तत्ता तया महासङ्ग्रामत्वेन पुष्करं भ्रातरम् अभ्यधात् अभियाति स्म ॥३७ ॥

**दीपिका**—अथेति - अथानन्तरं तदा तस्मिन् समये नल: सेनया सह विशालं स्वपुरं निजनगरम् आर प्राप। पुष्करं शत्रुम् अभ्यधायि उवाच। किम्भूतया चम्वा? अजितया शत्रुभिरपराजितया। पुन: किम्भूतया? राजितया शोभितया। पुन: किम्भूतया चम्वा? सासिगदाराजितया, असयश्च गदाश्च असिगदा असिगदानां राजि: तस्या: भाव: असिगदाराजिता तया सह वर्तमान: । पुन: किम्भूतया चम्वा? उदाराजितया उदारा उत्कृष्टा अजिता सङ्ग्रामता यस्यास्तया ॥३७ ॥

**सुबोधिनी**—अथेति- अथानन्तरं तदा नल आराजि अरीणां समूह आनन्ते अजितया अपराजितया सासिगदाराजितया असिसहिता: गदा: असिगदास्तासां राजि: पङ्क्तिस्तया सहिता सासिगदाराजिस्त्वेन राजितया शोभितया खड्गगदाराजि-युक्त्वेन शोभितया चम्वा सेनया महत् पुरं स्वनगरम् आगतवान्। उदाराजितया उदारा महती या आजि: सङ्ग्राम: तस्य भावस्तत्वेन पुष्करम् अभ्यधात्। अभिगत: स नल: तदनन्तरं महत्या सेनया पुष्करेण सङ्ग्रामं कर्तुं जगामेति भाव: । आरमिति तस्य समूह इत्यणि। भस्येति चेतील्लोपे रूपम्। पृतनानीकनी चमू: ।आरेति ऋगतावित्यस्य लिटि। वीथ्यालिरावलि: पङ्क्ति: । श्रेणीलेखास्तु राजय: । उदारो दातृमहतो: स्त्रियस्सम्पत्समित्याजिसमिद्युध: ॥३७ ॥

**अनुवाद**— तब उस समय नल विजयिनी झुण्ड की झुण्ड तलवारों और गदाओं के समूह वाली सेना के साथ अपने विशाल नगर में पहुंचा और उदार संग्राम वाली सेना के साथ पुष्कर के पास जाकर बोला ॥३७ ॥

**मयि गहना[१] मायाऽऽसि त्वया मनो नात्र मानिनामाऽऽयासि।**

**धनुरवनामायाऽसि द्यूतायाऽलं क्व चेतनामाऽऽयासि ॥३८ ॥**

**अन्वय:**—(हे पुष्कर !) त्वया मयि गहना माया आसि। अत्र मानिनां मन: न आयासि ? (त्वं) धनुरवनामाय द्यूताय अलम् असि। क्व चेतनाम् आयासि ? ॥३८ ॥

**विद्यावती**—मयीति- पुष्करम् उपगम्य नल: किमाहेति विवृणोति - हे पुष्कर ! त्वया मयि नले गहना विकटा माया छल: कपटपूर्वकं द्यूतं दिदेव पुष्करो नलेन सहेति वैशद्येन लभ्यते भारते, तदेव स्मारयति। आसि क्षिप्ता 'असु क्षेपणे धातो: कर्मणि लुङि। अत्र प्रसङ्गेऽस्मिन्नेवं कृत्वा मानिनां लब्धप्रतिष्ठानां मन: हृदयं न आयासि? आयासयुक्तं न कृतम्? अपि तु कृतमेव। काक्वर्थे नञ्। तथाविधस्त्वं धनुरवनामाय धनुष: आरोपणाय सङ्ग्रामार्थमिति भाव: । द्यूताय पणाय च अलमसि

---

१. नाना इति 'ङ', 'ज', 'ञ' पुस्तकेषु।

पर्याप्तमसि । त्वं वीरः द्यूतक्रीडाविच्च असि । एतयोः क्व कस्मिन् चेतनाम् आयासि मनः प्रवर्तयसि । किमप्येकं स्वीकुरु इति भावः ॥३८ ॥

**यमकबोधिनी**— मयीति- हे पुष्कर ! त्वया मयि गहना निविडा माया आसि अक्षेपि स्थापितेति । गहनं निविडे वने इति कोषान्तरात् । परम् अत्र मायाक्षेपे मानवताम् अभिमानवतां मनश्चित्तम् आयासि खेदयुक्तं न धीरत्वात् । त्वं धनुरवनामाय चापाकर्षणाय अलं समर्थोऽसि । अथवा द्यूताय समर्थोऽसि । क्व चेतनां बुद्धिमायासि आगच्छसि । उभयोस्ते बुद्धिः क्व वर्तते । मतिर्मनीषा बुद्धिर्धीधिषणाज्ञप्तिचेतना इत्यभिधानान्तरात् ॥३८ ॥

**दीपिका**— मयीति-पूर्वश्लोके उक्तं यन् नलः पुष्करमभ्यधात् । किमभ्यधादित्याह - हे नानामाय ! नानाकपट ! पुष्कर ! त्वमपि असि मत्स्थाने वर्तमानोऽसि । अतः कारणान् मानिना त्वया अत्र अस्मिन् विषये मनः चित्तः आयासि । खेदयुक्तं मानकार्यमित्यर्थः । त्वं धनुरवनामाय अलमसि समर्थोऽसि । द्यूताय च अलमसि । क्व चेतनाम् आयासि बुद्धिं प्राप्नोसि ॥३८ ॥

**सुबोधिनी**— नलः पुष्करमाह मयीति- हे पुष्कर त्वया मयि गहना निविडा माया व्याजः आसि क्षिप्ता । क्वचित्तु मयि नानामायासि इति पाठः । तत्र नानामानिनां मानो हृदयमायासि आयासयुक्तं दुःखितं कृतम् । नञ् काक्वर्थः । धनुरवनामाय धनुरारोपणाय द्यूताय वा अलमसि समर्थोऽसि । क्व वा कस्मिन् विषये चेतनां बुद्धिमायासि आगच्छसि । धनुरारोपणं वा द्यूतं वा त्वमेकं कुरु । येन ते मनोऽभिलाषः तद्वदित्यर्थः । असु क्षेपणे इत्यस्य चिणि लुङि यासीति यसूपतापेऽस्य । अस्तेरसीति । यातेरायासीति । अलं भूषणपर्याप्ति-शाक्तिवारणवाचकम् । द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि । यद्वा हे नानामाय ! त्वया मानिना मनः मम चित्तम् आसि क्षिप्तम् । मायया मम मनो भ्रामितमित्यर्थः । अतो मायासि मा अपलपस्व । आहतो न निवर्तेत द्यूतादपि रणादपि इति स्मृतेरिति भावः ॥३८ ॥

**अनुवाद**—(हे पुष्कर !) तुमने मुझ पर विकट माया का प्रयोग किया था । धनुष चढ़ाने और द्यूतक्रीडा (दोनो) तुम में समर्थ हो । इनमें से किसमे तुम अपनी बुद्धि स्थिर करते हो ॥३८ ॥

**इत्युक्तो देवनतः सोऽर्थ्यभवत् पुष्करः प्रमादे[१]ऽवनतः ।**

**येन स बिभिदेऽवनतः पुराऽवनेः श्रममपि प्रपेदे वनतः ॥३९ ॥**

**अन्वयः**—येन सः (नलः) पुरा अवनेः अवनतः बिभिदे, वनतः श्रममपि प्रपेदे इत्युक्तः प्रमादे अवनतः सः पुष्करः देवनतः अर्थी अभवत् ॥३९ ॥

---

१. प्रमोदे इति 'ञ' पुस्तके ।

**विद्यावती**—इत्युक्त इति - येन पुष्करेण पूर्वं स: नल: जित: स: नलोक्तिं श्रुत्वा प्रमादे अवनत: स्वकृतानवधानतायां नतोऽभूत्। पुन: किं कृतवान्? स: देवनत: अर्थी अभवत् देवनत: अक्षक्रीडाया: 'अक्षास्तु देवना: पाशकाश्च ते' इत्यमर:। अर्थी प्रयोजनवान् अभवत् जात:। स पुष्कर: अद्य पुन: द्यूतमेव अयाचतेत्यर्थ:। कीदृशेन पुष्करेण? येन स: नल: पुरा पूर्वसमये प्रथमद्यूतक्रीडायामित्याशय:, अवने: पृथिव्या: अवनत: अवनं रक्षणं तत: बिभिदे पृथक्कृत:, राज्याच्च्यावित इत्यभिप्राय:। पुन: किं कृत:? वनत: वनम् अरण्यं तत: पञ्चम्यर्थे तसिल्, श्रमं दु:खमपि प्रपेदे अधिगतवान् ॥३९॥

**यमकबोधिनी**—इतीति- स पुष्कर: इत्युक्ते सति देवनत: इति देवने क्रीडने अर्थी याचकोऽभवत्। स: द्यूतमभिलषति स्मेत्यर्थ:। किं लक्षण: स:? प्रमादे अनवधानतायाम् अवनतो नम्र:। स: क:? येन पुष्करेण पुरा पूर्वं स नल: अवने: पृथिव्या: अवनतो रक्षणात् बिभिदे विभिन्न: कृत:। अपि पुन: वनतोऽरण्यात् श्रमं प्रपेदे श्रमं प्राप ॥३९॥

**दीपिका**—इत्युक्त इति - इत्युक्त: सोऽपि पुष्करोऽपि प्रमादेऽनवधानतायाम् अवनतोऽभवत् युक्तोऽभूत् येन देवनेन नल: पुरा पूर्वम् अवने: पृथिव्या: अवनतो रक्षणात् बिभिदे भिन्नोऽभूत् वने बभ्रामेत्यर्थ:। अवनत: सन् दीन: सन् श्रममपि दु:खमपि प्रपेदे प्रापत्।३९॥

**सुबोधिनी**—इतीति - इत्यनेन प्रकारेण नलेनोक्ते गदिते प्रमादेऽनवधानतयाँ नत:। यद्वा अवनत: रत: सर्वं द्यूतेन पञ्चम्यास्तसिल्। अर्थी प्रयोजनवान् धनेच्छुर्वाऽभवत्। येन पुष्करेण स नल: पुरा पूर्वम् अवने: भूमेरवनतो रक्षणाद्बिभिदे भिन्न: कृत:। वनतोऽरण्यात् श्रममपि प्रपेदे प्राप्तवान् स पुष्करो द्यूतार्थे वाऽभूत्। येन पुष्करेण नलो भूरक्षणात् पृथक्कृतोऽरण्ये दु:खं च लब्धवान्। देवना: पाशकाश्च ते। प्रमादोऽनवधानता। अवाग्रेऽवनता नतम्। पदगतावित्यस्य लिटि प्रपेदे इति ॥३९॥

**अनुवाद**—जिसने उस नल को पूर्व मे पृथ्वी की रक्षा (राज्य) से अलग किया था वह पुष्कर इस प्रकार से कहे जाने पर अपने प्रमाद में अवनत, द्यूत क्रीडा के लिये राजी हुआ ॥३९॥

**स च राजाऽयततेन द्यूतेऽसुपणे जितो व्यजायत तेन।**
**निर्व्याजायततेन त्यक्तश्चाऽऽगस्सु गतरजा यतते न ॥४०॥**

**अन्वय:**— स च राजा अयततेन निर्व्याजायततेन असुपणे द्यूते जित: व्यजायत त्यक्त: च। गतरजा: आगस्सु न यतते ॥४०॥

**विद्यावती**—स इति - स: पुष्कर: नलेन द्यूतक्रीड़ायां पराजित इति वर्णयितुमुपक्रमते - स: राजा पुष्कर: येन पूर्वं द्यूते नलो जित इति पूर्वसम्बन्धद्योतनाय तच्छब्दप्रयोग:। स एव पुष्करोऽद्य अयततेन अय: शुभावहो विधिरित्यमर:। अय: शुभावहो विधि: तेन

विधिना ततं तनु विस्तारे इति धातोः क्तः, व्याप्तमित्यर्थः शुभावहविधिव्याप्तेन नलेन, पुष्करवत् नायं छद्मी न च छद्मसहायः सर्वथा छलादिदुष्टरहितेनेति विवक्षा कवेः। पुनः किं विधेन ? निर्व्याजायततेन व्याजश्छद्म तेन रहितो निर्व्याजः तादृशः आयः लाभः निर्व्याजायः तेन ततेन पूर्णेन इति निर्व्याजायततेन नलेन द्यूते द्यूतक्रीडायां कीदृशे द्यूते ? असुपणे । पुंसि भूम्न्यसवः प्राणाः इत्यमरः । असवः प्राणाः एव पणाः यस्मिन् तस्मिन्, पणोऽक्षेषु ग्लहः इत्यमरः । व्यजायत विपूर्वकात् जनी प्रादुर्भावे धातोर्लङि । त्यक्तश्च नलेन उन्मोचितश्च पुष्करः । कस्मात् ? गतरजाः रजस्त्रिषु गुणेष्वेको गुणः मात्सर्यद्वेषादिरूपः गतो रजः यस्य सः गतरजाः आगस्सु 'आगोऽपराधो मन्तुश्चेत्यमरः' अपराधेषु न यतते अपराधान्वेषणे सोत्साहो न भवति । यत्नमेव न करोततीति भावः ॥४० ॥

**यमकबोधिनी**—स इति - स च पुष्करः राजा स्वदेशाऽधिपतिरजायत अभूत् । नलस्तस्य पूर्वराज्यं तस्मै दत्तवान् इति भावः । चकारस्य पूर्वश्लोकेन सम्बन्धः । सः कीदृशः ? द्यूते तेन नलेन जितोऽपि वशीकृतोऽपि । किं लक्षणे द्यूते ? असुपणे प्राणग्लहे । किं लक्षणेन तेन ? आयततेन लाभविस्तृतेन । पुनः किं लक्षणेन ? निर्व्याजायततेन निर्व्याजा निष्कैतवा आयतता विशालता यस्य स तथा तेन । पुनः किं लक्षणः सः ? त्यक्तः नलेन मुक्तः । ननु अपराधी कथं न हतस्तत्राह - गतरजाः निर्मलः पुमान् आगस्सु अपराधेषु न यतते न यत्नं करोति ॥४० ॥

**दीपिका**—स च राजेति- च पुनः तेन नलेन द्यूते जितोऽपि सः पुष्करः राजा अजायत । राज्यम् अकरोत् । किम्भूते द्यूते ? अशुपणे प्राणव्यवहारे । किम्भूतेन तेन ? आयततेन शुभादृष्टयुक्तेन । पुनः किम्भूतेन निर्व्याजायततेन निष्कपटलाभभृतेन । किम्भूतः पुष्करः ? तेन नलेन त्यक्तः न मारित इत्यर्थः ॥४० ॥

**सुबोधिनी**—स चेति- स पुष्करो निर्व्याजायततेन निर्व्याजो निश्छल आयो धमागमस्तेन ततेन व्याप्तेन निर्व्याजधनागमव्याप्तेनेत्यर्थः । आयततेन शुभावहविधिव्याप्तेन तेन राज्ञा नलेन असुपणे असवः प्राणाः एव पणो ग्लहो यस्मिसस्तादृशे द्यूते जितः पराजितो व्यजायताऽजनिष्ट ।त्यक्तश्चोत्सृष्टश्च कुत इत्यत आह । गतरजाः गतं रजो गुणो मत्सरो यस्य तादृक् पुरुषः आगस्सु अपराधेषु पापेषु वा न यतते न यत्नं करोति । प्राणपणे द्यूते नलेन पुष्करः पराजितः उज्झितश्चेति भावः । पणोऽक्षेषु ग्लहः । जनी प्रादुर्भावे ज्ञा जनोर्जेति जादेशः अजायतेति। रजो गुणे स्त्री पुण्येऽपि। पापापराधयोरागः । यती प्रयत्ने लटि यतते इति । अत्रेयं पुराणवार्ता-नलो गत्वा पुष्करमुवाच - राज्यं त्यज नो चेद् युद्धं द्यूतं वा कुरु । इत्युक्तः द्यूतमकरोत् । तेन पराजितः प्राणात्यये पदानतः प्राणप्रार्थकोऽभवत् । ततो निष्कपटं ज्ञात्वा तेन सह सौहार्दमकरोत् ॥४० ॥

**अनुवाद**—वह राजा पुष्कर शुभविधियों से व्याप्त, निश्चछल धनागम वाले उस नल के द्वारा, प्राण ही पण थे जिसमें ऐसी द्यूतक्रीडा में जीत लिया गया और छोड़ दिया गया । रजोगुण से रहित लोग अपराधों में प्रयत्न नहीं करते ।

**[१] अयि भवनेऽत्राऽऽयस्व स्वभुवं[२] पुष्करं मुदं जने त्रायस्व ।**

**[३] युगबलनेत्राय स्वस्नेहाय पुरेव[४] विमलनेत्राय [५]स्वः ॥४१ ॥**

**अन्वयः**—अयि पुष्कर ! अत्र भवने आयस्व, जने मुदं स्वभुवं त्रायस्व । युगबलनेत्राय विमलनेत्राय स्वस्नेहाय पुरा इव स्वः ॥४२ ॥

**विद्यावती**—अयीति- अयि इति सम्बोधने । हे पुष्कर ! अत्र भवने स्वगृहे आयस्व आगच्छ, जने प्रजायां मुदं हर्षम् स्वभुवं स्वीयां भूमिं या मया नलेन जिता तां त्रायस्व । ननु जितामपि भूमिं विजितमपि राज्यं नलः पुनः कथं पुष्कराय ददाविति चेन्न गतरजा आगस्सु न यतत इति पूर्वोक्तेः । युगबलाय युगं च तद् बलं चेति युगबलं, युगबलस्य नेत्रः नायकः युगबलनेत्रः तस्मै 'युग्मं तु युगलं युगमित्यमरः' नल-पुष्करयोः सैन्यादेः नायकाय इति भावः । स्नेहाय प्रेम्णे । किं विधाय स्नेहाय ? विमलनेत्राय विगतं मलं विमलं कालुष्यरहितं तादृशं नेत्रं यस्य सः विलनेत्रः तस्मै । नलपुष्करयोः पूर्वमासीत् मैत्री । पश्चात् तु पुष्करछद्मना शत्रुत्वामागतम् । तच्छत्रुत्वमद्यप्रभृति मास्तु । युगबलनेत्राय विमलनेत्राय स्वस्नेहाय पुरा इव पूर्वसमय इव स्वः भवावः ॥४१ ॥

**यमकबोधिनी**— अपीति - हे पुष्कर ! स्वभुवं निजभूमिं त्रायस्व रक्ष । अपि पुनः अत्र मल्लक्षणे जने मुदं हर्षम् आयस्व आगच्छ । हे बलनेत्रायुत ! बलं नयतीति बलनेता तेन सेनापतिना युक्तः । हे विमलनेत्र ! हे निर्मलनेत्र ! स्व आत्मीयः आयो लाभः शुभावहविधिर्वा पुरा इव पूर्वमिव स्नेहाय प्रीत्यै भवतु । अथवा स पुष्करः अस्य नलस्य प्रीत्यै भवत्विति शेषः ॥४१ ॥

**दीपिका**—अयीति- अयि इति कोमलामन्त्रणे । हे बलनेत्रायुत । सेनापतिना युक्त पुष्कर ! भवने गृहे स्थित्वा उपविश्य स्वपुरं स्वनगरं त्रायस्व । अत्र मल्लक्षणे जने मुदं तोषम् आवह । स्वस्नेहाय आवां स्वः । आवयोः राष्ट्रादयः स्वज्ञातयः तेषां स्नेहाय भवाव इत्यर्थः ॥४१ ॥

**सुबोधिनी**—नलः पुष्करमाह अयीति- अयि कोमलाभिमन्त्रणे । हे पुष्कर ! भवने गृहे निवसन् स्वभुवं स्वभूमिम् असमद्दत्तं त्रायस्व क्षमस्व ।.अत्र जने जनपदलोके मुदं हर्षमायस्व प्राप्नुहि । युगबलनेत्राय निर्मललोचनाय स्वस्नेहाय स्वप्रम्णे पुरेव पूर्वमिव स्वः भवावः । हे पुष्कर ! त्वं स्वभूमिं रक्ष । लोके स्निग्धो भव । मम तव च स्नेहः पुरेव वर्धतामित्याहेति भावः । त्रेङ् पालन इत्यस्य लोटि त्रायस्व । आयस्वेति

---

१. अपि इति 'ग' 'घ' पुस्तकयोः।

२. स्वपुरम् इति 'ग' 'घ' पुस्तकयोः।

३. युतबलनेत्रायस्वः इति 'ग' 'घ' 'ञ' पुस्तकेषु ।

४. सदैव इति ग घ पुस्तकयोः।

५. रमितनेत्राय इति 'ञ' पुस्तके ।

अयगतावित्यस्य स्वः अस्तेर्लटि । यद्वा युगवलनेत्रा आवयोः सेनापतिभ्यां सह भवने आगच्छ । आवां पुरेव स्नेहाय स्वः भवावः । कथं भूताय ? विमलनेत्राय विमलानि नेत्राणि यस्मिंस्तस्मै । अन्यत्पूर्ववदित्यर्थः ।४१ ॥

**अनुवाद**—हे पुष्कर ! इस भवन में आओं । प्रजा में हर्ष पाते हुए अपने भूमि की रक्षा करो । दोनों के सेनानायकों और अपने पवित्र प्रेम के लिए हम पूर्व समय की तरह होंगे ।।४१ ।।

**[१] हरिपवनयमानस्य स्वबलादिति तुलयतोऽनुनयमानस्य ।**

**स्नेहानयमानस्य प्रणतिमधात् पुष्करः सुनयमानस्य[२] ।।४२ ।।**

**अन्वयः**—पुष्करः स्वबलाद् इति हरिएवनयमान् तुलयतः अस्य अनुनयमानस्य सुनयमानस्य स्नेहान् अयमानस्य प्रणतिम् अधात् ।।४२ ।।

**विद्यावती**—हरीति- एवमुक्तः पुष्करः नलं नमश्चकारेति निरूपयति - पुष्करः पुष्कराख्यो नृपः अस्य नलस्य स्नेहात् प्रणतिम् अधात् नलं प्रणनामेति भावः । कीदृशस्य नलस्य ? हरिपवनयमान् तुलयतः हरिः देवेन्द्रः पवनः वायुः यमो धर्मराजः हरिश्च पवनश्च यमश्चेति हरिपवनयमाः तान् तुलयतः तेषां तुलनां कुर्वतः, एभिः सदृशः इत्यभिप्रायः । कस्मात् तुलयतः ? स्वबलात् स्वशक्तेः । पुन; कीदृशस्य ? अनुनयमानस्य अनुनयं कुर्वतः । यद्वा अनु पश्चात् नयमानः पूजितः तस्य शत्रुत्वानन्तरं पूजितस्य नलस्येत्यर्थः । पुनः किं विधस्य ? सुनयमानस्य नयो नीतिः मानः अभिमानः स्वजनेषु वात्सल्यमिति यावत् । शोभनौ नयमानौ यस्य सः तस्य स्नेहान् अयमानस्य प्रेमाणि प्राप्नुवतः प्रणतिं नमस्कृतिम् अधात् चकार । तस्य नलस्य मैत्रीं स्वीचकारेति भावः ।।४२ ।।

**यमकबोधिनी**—हरिपेति - स पुष्करः अस्य नलस्य प्रणतिम् अधात् प्रणामम् चकार । किं लक्षणस्यास्य ? इत्यमुना प्रकारेण अनुनयमानस्य अनुनयं कुर्वतः । पुनः किं लक्षणस्य ? स्वबलात् हरिपवनयमान् इन्द्रवायुधर्मराजान् तुलयतः समानीकुर्वतः । पुनः किं लक्षणस्य ? सुनयमानस्य नयश्च मानश्च सुष्ठु शोभनौ नयमानौ यस्य सः तस्य शोभननीतिगर्वस्य । पुनः किं लक्षणस्य ? स्नेहान् प्रेमाणि अयमानस्य गच्छतः ।।४२ ।।

**दीपिका**—हरिपवमानेति - पुष्करः अस्य नलस्य प्रणतिं प्रणाममधाच्चकारेत्यर्थः । किम्भूतस्यास्य ? हरिपवमानयमान् इन्द्रवातान्तकान् बलादतितुलयतः तिरस्कुर्वतः । पुनः किम्भूतस्यास्य ? अनुनयमानस्य अनुनय एव विज्ञप्तिरेव मानं

---

१. हरिपवमानेति च पुस्तके पाठः।

२. सनयमानस्येति 'ञ' पुस्तके।

सन्मानं यस्य। पुनः किम्भूतस्यास्य? स्नेहान् प्रेमाणि अयमानस्य प्राप्यमाणस्य। पुनः किम्भूतस्यास्य? सनयमानस्य नयाभिमानाभ्यां सहितस्य ॥४२॥

**सुबोधिनी**—हरीति-हरिपवमानयमान् हरिरिन्द्रः पवमानो वायुः यमो धर्मराट् तान् स्वबलात् तुलयतः। अनुनयमानस्य अनुनयमानयतः स्नेहान् प्रीतीः। अयमानस्य गच्छतः। सुनयमानस्य शोभननीत्यभिमानस्यास्य नलस्य पुष्करः प्रणतिं प्रह्वत्वं नमस्कारं वा इत्यनेन प्रकारेण अधादकार्षीत्।एवं बहुधा स्नेहं दर्शयतोऽतिवत्सलस्य पुष्करः प्रह्वोऽभवदिति भावः। अधात् इति दधातेर्लुङि ॥४२॥

**अनुवाद**—पुष्कर ने अपनी शक्ति से इन्द्र, वायु, और धर्मराज की तुलना करने वाले, इस शत्रुता के पश्चात् पुनः (पुष्कर द्वारा) पूजित, सुन्दर नीति और अभिमान से युक्त, स्नेह पाने वाले नल को प्रणाम किया ॥४२॥

**अरिसेनानाशस्याऽऽश्रितवत्सल तेऽस्तु चेतना नाऽशस्या।**

**पूरितनानाशस्याऽस्तोकयशोभिः कदापि नाऽनाशः स्याः ॥४३॥**

**अन्वयः**—हे आश्रितवत्सल! अरिसेनानाशस्य, अस्तोकयशोभिः पूरितनानाशस्यस्य ते चेतना अशस्या न अस्तु। (त्वं) कदापि अनाशः न स्याः ॥४३॥

**विद्यावती**—अरीति- हे आश्रितवत्सल आश्रितः शरणागतः तस्मिन् वत्सलः स्नेहवान् स्निग्ध इत्याशयः। सम्बोधने प्रथमेह। अस्तोकयशोभिः स्तोकम् अल्पं न स्तोकम् इत्यस्तोकम् अनल्पम् इत्यर्थः तादृग्यशोभिः कीर्तिभिः पूरितनानाशस्य पूरिताः नाना आशाः दिशाः येन सः तस्य 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः। अरिसेनानाशस्य अरीणां शत्रूणां सेनाः अरिसेनाः तासां नाशः अन्तः कृतः येन सः अरिसेनानाशः तस्य ते तव नलस्य चेतना मतिः अशस्या न शस्या अशस्या निन्दायोग्या न अस्तु न भवतु। त्वं च कदापि कस्मिन्नपि समये अनाशः आशया हीनः न स्याः। तव मनोऽनुकूलमेव सर्वं भवत्विति भावः ॥४३॥

**यमकबोधिनी**—अरिसेनेति - हे आश्रित! मया सेवितनल! हे वत्सल! हे कृपालो! तव चेतना बुद्धिः अशस्या अप्रशस्या नास्तु मा भवतु। आश्रितवत्सलेति विशेष्यपूर्वं सम्बोनधम्। यथा हे कृपालो नः पाहि। किं लक्षणस्य ते? अरिसेनानाशस्य शत्रुबलान्तकस्य। हे अस्तोकयशोभिः बहुलकीर्तिभिः पूरितनानाशस्य पूरिताः नाना अनेकाः आशा येन सः तस्य मा भवेः ॥४३॥

**दीपिका**—अरिसेनेनेति - हे आश्रितवत्सल नल! ते चेतना बुद्धिः प्रशस्या अस्तु अस्तुत्या मास्तु मा भवतु। त्वं कदापि अनाशः आशारहितः न स्याः न भवेः। किम्भूतस्य ते? अरिसेनानाशस्य शत्रुचमूनाशकस्य। पुनः किम्भूतस्य ते? अस्तोकयशोभिः बहुतरकीर्तिभिः पूरितनानाशस्य पूरिताः नाना आशाः येन तस्य ॥४३॥

**सुबोधिनी**—पुष्करो नलमाह- अरीति - हे आश्रितवत्सल आश्रितेषु वत्सल: कारुणिक: । अस्तोकयशोभि: अनल्पयशोभि: पूरितनानाशस्य पूरिता नाना आशा दिशो येन तादृशस्य अरिसेनानाशस्य शत्रुबलान्तकस्य ते तव अशस्या न शस्या अशस्या स्तोतुमयोग्या चेतना बुद्धि: न अस्तु न भवतु । कदापि कस्मिन्नपि काले अनाश: आशारहितो न स्या: न भवे: । हे आश्रित ! कृपापात्र तवास्तव्याधिर्मा भवतु । कदापि आशाव्याघातस्तव मा स्यादित्यर्थ: । आशा तृष्णाऽपि चायता । स्तोकाल्पक्षुल्लका: । अस्तु अस्तेर्लोटि । स्निग्धस्तु वत्सल: ॥४३ ॥

**अनुवाद**— हे आश्रितों पर दया करने वाले ! हे शत्रुसेना के नाशक ! महान् यश से समस्त दिशाओं को पूर्ण करने वाले (नल) तुम्हारी बुद्धि निन्दा के योग्य न हो । तुम कभी निराश न होओ ॥४३ ॥

**इति स ननाम नलस्य प्रणतोऽङ्घ्री[1] फुल्लवक्त्रनामनलस्य ।**

**अहितानामनलस्य प्रययौ च समो बलेन[2] नाम नलस्य ॥४४ ॥**

**अन्वय:**— इति स: फुल्लवक्त्रनामनलस्य अहितानामनलस्य नलस्य प्रणत: नलस्य अङ्घ्री ननाम नाम । बलेन सम: प्रययौ ॥४४ ॥

**विद्यावती**—इतीति - एवं स पुष्करो नलस्य अङ्घ्री पादौ ननाम नमश्चकार । नामेति प्रसिद्धौ । नलं विशिनष्टि । किं विधस्य नलस्य ? फुल्लवक्त्रनामनलस्य फुल्लं विकसितं वक्त्रम् आस्यं यस्य स: फुल्लवक्त्र: नाम्ना नल: फुल्लवक्त्रश्चासौ नामनल: तस्य नलस्य । पुन: कीदृशस्य ? अहितानमनलस्य ? अहितानां रिपूणाम् अनलस्य अग्ने: शत्रुदाहकस्य नलस्य राज्ञो नलस्य प्रणत: प्रकृष्टेन नत: प्रह्व: तस्य नलस्य अङ्घ्री पादौ ननाम । नम धातोर्लिटि । तेन नलेन सार्धं प्रययौ जगाम । सहैव गतवन्तावुभौ इत्यर्थ: ॥४४ ॥

**यमकबोधिनी**— इतीति - इति अमुना प्रकारेण प्रीत: सन् स पुष्कर: नलस्याङ्घ्री चरणौ ननाम नमति स्म । किं लक्षणस्य नलस्य ? अहितानां शत्रूणाम् अनलस्य वह्ने: ! पुन: किं लक्षणस्य नलस्य फुल्लवक्त्रनामनलस्य फुल्लवक्त्राणां विकसितवदनानां नाम नमनं नमस्कारं लाति गृह्णाति इति तथा तस्य । च पुन: बलेन सेनया सह प्रययौ । नामेति प्रसिद्धौ । किं लक्षण: स: ? नलस्य तृणविशेषस्य । सम: सदृश: पराभूतत्वात् तुलोपमा । व्यतिरिक्तैस्तुल्यार्थयोगे तृतीयाषष्ठ्यौ स्याताम् ॥४४ ॥

**दीपिका**—इति स ननामेति- इत्युक्त्वा प्रीत: सन् तुष्ट: स पुष्कर: नलस्य अङ्घ्री चरणौ ननाम । प्रणतोऽभूत् । नामेति प्रसिद्धौ । नलस्य बलेन सार्धं स्वपुरमपि ययौ । किम्भूतस्य

---

१. प्रीतोऽङ्घ्रिषु इति 'ज' पुस्तके ।

२. प्रययौ च सार्धं तेन इति 'च' 'छ' पुस्तकयो: ।

नलस्य? फुल्लवक्त्रनामनलस्य फुल्लवक्त्रस्य नमनं प्रणति लाति स्वीकरोति तस्य। पुन: किम्भूतस्य? अहितानां शत्रूणाम् अनलस्य अग्नितुल्यस्य ॥४४॥

**सुबोधिनी**—इतीति - इत्यनेन प्रकारेण प्रणतो नम्र: स पुष्कर: नलस्याङ्घ्री चरणौ ननाम प्रणतवान्। नाम सम्भावनायाम्। कीदृशस्य नलस्य? फुल्लवक्त्रनाम नलस्य फुल्लं विकसितं हर्षस्मेरं वक्त्रनाम वक्त्रनामकं रूपं वा नलं कमलं तस्य विकसितमुखपद्मस्य। कीदृशस्य? नामनलस्य नमनं नामस्तस्मिन् नलस्य तृणस्य नतौ तृणप्रायस्य नमनं नमस्कारं लाति स्वीकरोति नाम नल: तस्य। ला आदाने ड प्रत्यये रूपम् इत्यर्थ:। एवमहितानामनलस्य शत्रूणामग्ने: तेन नलेन सार्धं सह प्रययौ। सार्द्धं बलेन ननाम नलस्येति वा।नलस्य बलेन सैन्येन सार्द्धं समं प्रययौ इत्यर्थ: ॥४४॥

**अनुवाद**— इस प्रकार वह पुष्कर विकसित मुखकमल तथा नल नाम वाले उस शत्रुओं के दाहक नल के चरणों में प्रणाम किया (और) उसकी सेना के साथ गया ॥४४॥

**मुदममुनाऽऽमुक्तेन प्राप्य[१] स्वराज्यं महात्मनामुक्तेन।**

**धृतनानामुक्तेन प्राशासि[२] चिरं राज्यं विघटनामुक्तेन[३] ॥४५॥**

**अन्वय:**—अमुना आमुक्तेन स्वराज्यं प्राप्य, महात्मनामुक्तेन विघटनामुक्तेन धृतनानामुक्तेन चिरं राज्यं मुदं प्राशासि ॥४५॥

**विद्यावती**—मुदमिति- अमुना अनेन आमुक्तेन आ समन्तात् मुक्तेन स्वतन्त्रेण विपद्रहितेन, पुष्करं विजित्य स: स्वतन्त्र:, तादृशेन नलेन महात्मनामुक्तेन महांश्चासौ आत्मेति महात्मा तेषां महात्मनामुक्तेन वचनेन ऋषिवचनानुसारेणेति भाव:। विघटनामुक्तेन विघटना वियोगादिभीतिस्तन्मुक्तेन रहितेन। पुन: किं विधेन? धृतनानामुक्तेन धृता: नाना नानाविधा: मुक्ता: रत्नविशेषा: येन तथा विधेन नलेन। स्वराज्यं प्राप्य अधिगम्य चिरं बहुकालं यावत् राज्यं मुदं हर्षं यथा स्यात् तथा प्राशासि शासनम् अकारीति भाव: ॥४५॥

**यमकबोधिनी**—मुदमिति - स पुष्कर: राज्यं प्राप। परं यत: अमुना नलेन स पुष्कर: प्राशासि पालित:। केन? महात्मनामुन्नतचित्तानाम् उक्तेन वचनेन। किं लक्षणेन नलेन मुदं हर्षम् अमुक्तेन अमुक्तवता। पुन: किं लक्षणेन? धृतनानामुक्तेन धृता: नानाप्रकारा: मुक्ता: मुक्ताफला येन स:। धृतानेकमुक्ताफलेन। पुन: किं लक्षणेन? विघटनामुक्तेन विशेषघटनया अमुक्तो युक्त इत्यर्थ: तेन ॥४५॥

---

१. प्राप स राज्यमिति 'ग' 'घ' 'ञ' पुस्तकेषु पाठ:।

२. राज्यं चिरं प्राशासि इति क्रमेणापि पाठ:।

३. विघट्टनामुक्तेन इति 'छ' पुस्तके।

**दीपिका**—मुदममुनेति - स पुष्करः स्वकीयं राज्यं प्राप । अमुना तेन नलेन प्राशासि रक्षितो न तु मारितः । किम्भूतेन नलेन ? महात्मनां सताम् उक्तेन वचनेन मुदं तोषम् असक्तेन अत्यजत् । पुनः किम्भूतेन ? धृतनानामुक्तेन धृताः नानाविधाः मुक्ताः येन । किम्भूतः सः ? विघट्टनामुक्तेन विघट्टनां चेष्टां मुञ्चतीति विघट्टनामुक्तः कपटमुक्त इत्यर्थः ॥४५ ॥

**सुबोधिनी**—मुदिति-आमुक्तेन बद्धकवचेन युक्तेन वा अमुना पुष्करेण सह मुदं प्राप लेभे । महात्मनां महाशयानामुक्तेन वचनेन विघट्टनामुक्तेन धृताः नाना मुक्ताः मौक्तिकं येन तादृशेन नलेन तदनन्तरं स कवचेन पुष्करेण सह हर्षं लेभे । महात्मनां वाक्येन निजराज्यं वियोगहीनेनाऽनुशिष्टम्, नलेनेति भावः । मुत्रीतिः आमुक्तः प्रतिमुक्तश्चापि नद्धापि नद्धवत् । शासु अनुशिष्टौ इत्यस्य चिणि लुङि प्राशासीति । उक्तं भाषितमुदितम् ॥४५ ॥

**अनुवाद**—इस स्वतंत्र नल ने अपना राज्य पाकर ऋषियों के कथनानुसार, विपत्तियों से रहित, अनेक प्रकार के माणिक्य आदि धनधान्यों से परिपूर्ण होकर हर्ष पूर्वक चिरकाल तक राज्य किया ॥४५ ॥

**अरिसंहतिरस्य वनेषु शुचां पदमाऽऽपदमाऽऽपदमाऽपदमा ।**

**सुखदं च यथैव[१] जनाय हरिं यतमायतमाय तमाऽऽयत मा ॥४६ ॥**

**अन्वयः**—अस्य अमा अपदमा च अरिसंहतिः वनेषु शुचां पदम् आपदम् आपत् । तं यतं जनाय सुखदं आयतमाय एव हरिं यथा मा आयत ॥४६ ॥

**अन्वयदीपिका**—अरीति- अस्य नलस्य अमा न मा लक्ष्मीः यस्या सा अमा अरिसंहतिः शत्रुसमूहः वनेषु शुचां पदं स्थानम् आपदं दुःखम् आपत् प्राप । कथं भूता अरिसंहतिः ? अपदमा न विद्यते पदं स्थानं यस्याः सा अपदा अस्थिरा मा लक्ष्मीः यस्याः सा अपदमा अस्थिरलक्ष्मीका । मा लक्ष्मीः राज्यलक्ष्मीः तं नलम् आयत प्राप । यद्वा अपदमा अरीणां स्थानरहिता मा लक्ष्मीः तं नलम् आयतमाय अतिशयेन आयः आयतः तस्मै श्रेष्ठलाभाय आयत प्राप । का कमिव ? मा लक्ष्मीः हरिं यथा हरिमिव यथा मा लक्ष्मीः हरिं प्राप । कथं भूतं हरिम् ? जनाय भक्तजनाय सुखदम् । कथं भूतो नलः ? जनाय प्रजालोकाय सुखदं सुखप्रदमित्यर्थः । पुनः कथं भूतम् ? यतं यत्नं कुर्वाणं परार्थमिति शेषः ॥४६ ॥

**यमकबोधिनी**— अरिसंहतिरिति - अस्य नलस्य अरिसंहतिः शत्रुवृन्दः वनेषु अरण्येषु आपदं विपदम् आपत् प्राप । किं लक्षणाम् आपदम् ? शुचां शोकानां पदं स्थानम् । किं लक्षणा अरिसंहतिः ? अमाः अश्रीका । पुनः किं लक्षणा ? अपदमा उपशमरहिता च पुनः मा लक्ष्मीः तं नलम् आयत आगच्छत् । कस्मै जनाय? लोकाय

---

१. सुखदं च जनाय इति 'ञ' पुस्तके ।

परोपकारायेत्यर्थः । यथैव दृष्टान्तः - मा लक्ष्मीर्यथा हरिं विष्णुं श्रयते तद्वत् । किं लक्षणं हरिं नलं च? सुखदं शर्मदम्। पुनः किंलक्षणम्? आयतमाय उत्कृष्टलाभाय यतं कृतयत्नमुपरतं वा पूर्णमनोरथत्वात् ॥४६ ॥

**दीपिका**—अरिहसंहतिरिति- नलस्य अरिसंहतिः शत्रुसमूहः वनेषु अरण्येषु शुचां शोकानां पदं स्थानमाप विपदम् आप प्राप किम्भूता अरिसंहतिः शत्रु समूहः अमा शोभा-रहिता । पुनः किम्भूता अरिसंहतिः ? अपदमाऽस्थिरलक्ष्मीका मा राज्यलक्ष्मीः तं नलम् आप प्राप । कस्मै प्रयोजनाय ? आयतमाय श्रेष्ठतमाय । किम्भूतं तम् ? यतम् सावधानम्। कमिव? जनाय लोकाय सुखदं हरिं विष्णुं यथैव यथा शिष्टोऽत्र ॥४६ ॥

**सुबोधिनी**—अरीति -अस्य नलस्य अरिसंहतिः शत्रुपङ्क्तिः शत्रुसमूहो वनेषु अरण्येषु शुचां शोकानां पदं स्थानम् आपदं विपत्तिमापल्लेभे । कीदृशी ? अमा निश्श्रीका एवम् अपदमा अपदा स्थानरहिता मा लक्ष्मीर्यस्याः सा अस्थिरलक्ष्मीका इत्यर्थः । अपदा अपगतो पदो यस्याः सा इत्यर्थः । यतमायतमा यता गता माया कापट्यं यस्य स यतमायः। अतिशयेन यतमायः यतमायतमः तस्मै जनाय सुखदं तं नलं मा राज्यलक्ष्मीरायत गता । यथैव तादृशाय जनाय सुखदं हरिं कृष्णं मायागमाय यततम् आयतेत्यर्थः। नलशत्रुर्वने वसन् दुःखितो बभूव निर्व्याजलोकसुखदं तं नलं लक्ष्मीरागतवतीति भावः । आयतेति अय गतावित्यस्य लङि । इन्दिरा लोकमाता मा। पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु। विपत्यं विपदापदौ। यमानिलेऽर्कचन्द्रेन्द्रविष्णुसिंहाशुवाजिषु। शुकाहिपिकभेकेषु हरिर्ना कपिले त्रिषु ॥४६ ॥

**अनुवाद**—इसकी (नल की) लक्ष्मीहीन और अस्थिरलक्ष्मी वाली शत्रुसंहति वनों में शोक के स्थान और आपत्ति को प्राप्त हुई । उस प्रजा के सुख देने वाले अतिशय लाभ के लिये प्रयत्नशील (नल) को विष्णु की तरह लक्ष्मी प्राप्त हुई ॥४६ ॥

**नलेन[१] पूर्यता यताऽऽयता यता चिराय[२] सा ।**

**सदाऽयमुन्महा महामहामहास्त सम्पदम् ॥४७ ॥**

**अन्वयः**— अयतायता नलेन चिराय सा पुरी यता । अयम् उन्महाः सदा महामहां सम्पदम् अहास्त ॥४७ ॥

**अन्वयदीपिका**— नलेनेति - नलेन सा पुरी चिराय चिरकालम् अतायत् विस्तारिता विस्तारयुक्ता कृता । कथं भूता पुरी ? अयतायता अयस्य भावः अयता तया अयतया शुभावहविधित्वेन आयता विशाला । यद्वा नलविशेषणम् अयस्य

१. पुनश्चेति 'ग''घ''ङ' पुस्तकेषु पाठः।

२. पुरेव इति 'च' ' छ' पुस्तके पाठः।

भाव:अयता दैवत्वम् अयताम् एतीति अयतायत्तेन अयतायता । किं च अयं नलः सदा सम्पदम् अहास्त, ओहाङ्गतौ इत्यस्य प्रयोगः । ये गत्यर्थास्ते प्राप्त्यर्थाः ज्ञानार्थाश्च । समृद्धिं प्राप । कथं भूतां सम्पदम्? महामहाम् महान् उत्सवः यस्यां सा महामहा तां महैश्वर्ययुक्तामित्यर्थः । कथं भूतोऽयं नलः? उन्महाः उदितो महः उत्सवो यस्य स उन्महाः ॥४७ ॥

**॥इति श्रीकालिदासकृतस्य नलोदयकाव्यस्य नृसिंहाश्रमविरचिता टीका समाप्ता ।।**

**यमकबोधिनी**—पुन इति - नैषधेन नलेन कृत्वा पूर्वनगरी निषधा । आयतायतायता आयता शुभावहविधित्वम् आयता लाभता च आयतायते ताभ्याम् आयतता दीर्घा बभूवेति विशेषः । किं लक्षणेन नैषधेन? पुनश्च भूयोऽपि यता गच्छता प्रवासानन्तरं नगरीं प्राप्तवता इत्यर्थः । पुनरयं नलः सम्पदं लक्ष्मीम् अहास्त अगच्छत् । किं लक्षणोऽयम्? सदा उन्महाः उत्कृष्टतेजाः । किं लक्षणां सम्पदम्? महामह उत्सवो यस्यां सा तथा ताम्। पुनर्नगरीमेत्य नलो लक्ष्मीं प्राप्तवान् इत्यर्थः । नलेन पुर्यतायतायतायता चिराय सेति पाठे नलेन सा पुरी नगरी चिराय अतायत विस्तारिता । तनु विस्तारेऽस्य द्वे रूपे भवतः तायत तन्यात । किं लक्षणा पुरी? आयतायता आयस्य शुभावहविधेर्भावः आयता आयता दीर्घता विशालता वा आयता शुभावहविधिता यस्याः सा तथा। किम्भूतेन नलेन? आयतायता अयतामेतीति अयतायत् तेन अयतायता । अन्यत् तथैव ॥४७ ॥

**श्रीडिण्डवाणनगरे किल वत्सगोत्रो व्यासो बभूव फलदःफलदोऽनुगानाम् ।**
**प्रीत्या सदा पुरजनैः परिपूज्यमानः शुभ्रैर्यशोभिरमलीकृतचन्द्रविम्बः ।१ ॥**

**बभूव भूमौ भवभूतितुल्यः श्रीकेल्हणो नाम तदात्मजश्च ।**
**येन स्वबुद्धेः किल वैभवेन वशीकृता राजसभासु सर्वे ॥२ ॥**

**तस्यात्मजः सर्वगुणैकधामा श्रीरङ्गनामा क्षितिदेववर्यः ।**
**बभूव भूपालकलब्धमानः सदा सितस्नानविधूतपापः ॥३ ॥**

**तस्यात्मजौ कीर्तिकरौ पितृणां कौजूस्तथा वृद्ध इति प्रसिद्धौ ।**
**गोविन्दपादाम्बुजसेवानोत्कौ वेदागमाचारपरावभूतौ ॥४ ॥**

**श्रीभागवतभावार्थव्याख्याने श्रीधरोपमः ।**
**वृद्धव्यासोऽभवद्वृद्धो माननीयो दिने दिने ॥५ ॥**

**वैस्वदेवविशुद्धात्मा तीर्थाटनपरायणः ।**
**वृद्धव्यासोऽभवद्योग्यो लोककल्याणकारकः ॥६ ॥**

तस्यात्मजास्त्रयो जाता निम्बादित्यो विदांवरः ।
तथा रामऋषिर्धीमान् हरिवंशस्तथावरः ॥७ ॥

तेषां माता महाभागा नामतो गोमती बभौ ।
हेमदानपरा नित्यं विप्राणां भोजनप्रदा ॥८ ॥

चक्रे रामऋषिः धीमान् वृद्धव्यासात्मजः सुधीः ।
नालोदयीमिमां टीकां शुद्धां यमकबोधिनीम् ॥९ ॥

टीकां विना बुधा व्याख्यां कृत्वा नालोदयीमिमाम् ।
व्याख्याने यमकानां तु श्रमं ज्ञास्यथ मामकम् ॥१० ॥

यद्विस्मृतं भ्रान्तिवशात् कृतं वाऽविचार्य तन्मे सुधियो महान्तः ।
कृपालवः कीर्तिकृतः कवीनां परोपकाराः किल शोधयन्तु ॥११ ॥

केतकानां सुपुष्पाणां बुधाः कण्टकिनामपि ।
सौरभं न त्यजन्त्येव महान्तो हि गुणग्रहाः ॥१२ ॥

वेदाङ्गरसचन्द्राद्ये वर्षे मासे तु माधवे ।
शुक्लपक्षे तु सप्तम्यां गुरौ पुण्ये तथोडुनि ॥१३ ॥

सुरत्राणे तथा साहि सलेमे शासति क्षितौ ।
पत्तनाख्ये महादुर्गे राजशल्ये च राजनि ॥१४ ॥

युवराजे भोजराजे टीकेयं पूर्णतामगात् ।
कृता रामर्षिमिश्रेण वृद्धव्याससूनुना ॥१५ ॥

॥इति श्रीवृद्धव्यासात्मजरामऋषिविरचितायां महाकाव्यनलोदयटीकायां यमकबोधिन्यां नलराज्यप्राप्तिर्नाम चतुर्थ आश्वासः ॥

**दीपिका**—पुनश्चेति- नैषधेन नलेन सा पूः स्वीया नगरी पुरेव यथापूर्वम् अतायत विस्तृता। किम्भूता पूः ? अयतायता शुभावहविधित्वेन दीर्घा । अयं नलः सम्पदं सम्पत्तिम् अहास्त प्राप। ओहाङ् गतावित्यस्य धातोः प्रयोगः। सर्वे गत्यर्थाः ज्ञानार्थाः। किम्भूतोऽयम्? सदा सर्वदा उल्लसन् विराजमानः। किम्भूतां सम्पदम्? महामहाम् महान्तो महा उत्सवा यस्यां सा ताम् ॥४७ ॥

ब्राह्मस्यैकगृहं बभूव भगवत्पादारविन्दद्वयो-
रालम्बेऽत्रिकुले सुभाषितजुषां मान्यः स पीताम्वरः ।
तस्माद् द्रव्यनिभातिभव्यभवता चातुर्यनव्यस्फुरद्
बुद्धिश्श्रीर्वच[१] –नैरनल्पतपसां श्रीनागनाथाऽभिधः ॥

---

१. द्विद्विरमितिवत् किमप्यस्पष्टम्

ततस्तस्यापत्यं प्रथितबहुविद्यापरिचयो
महादेवो देवं त्रिपुररिपुमाराध्य विधिवत्।
फलं लेभे लीला विलसितकवित्वं सुतजनिम्[१]
तयोर्गोविन्दाख्यो व्यरचयदिमां श्रेष्ठपदभाक् ॥

**॥ इति श्रीगोविन्दभट्टविरचितायां कालिदासविरचितनलोदयदीपिकायां चतुर्थ आश्वासः ॥**

**सुबोधिनी**—अथाशीर्वादव्याजेन नलोदयकाव्यसमाप्तिं सूचयति। नलेनेति- नलेन नैषधेन सा पुरी स्वीया नगरी पुरेव पूर्वमिव अतायत विस्तारिता। कीदृशी पुरी? आयः प्रभुर्दैवम्। नलस्येति शेषः। तस्य भावोऽयता तया आयता विशाला। यदा राज्ञौ नलस्य शुभदैवमभूत्तदा यथापूर्वं स्वनगरी विशालाऽभूदिति भावः। यद्वा कीदृशेन नलेन? अयता अयेन शुभदैवेन तायति पालयति देवब्राह्मणादीनिति शेषः। अयता यन्। यद्वा अयं तायति विस्तारयति तेन सर्वदा शुभशंसकेन। तायृसंतानपालनयोरित्यस्मात् कर्तरि शतृ। यद्वा अयो विद्यते यस्यासौ। अयः अर्श आदिभ्योऽच् तस्य भावोऽयता शुभदैवत्वं तामेति प्राप्नोतीत्यतान् तेन। इणगतौ कर्तरि शतरि। इणो यणिति यण्। अयं नलः उन्महाः उद्गततेजाः सदा सर्वकालं सम्पदं लक्ष्मीमहास्त प्राप। कीदृशीं सम्पदम्? महामहाम् महान्तो महा उत्सवा यस्यां सा ताम्। सदैवात् सर्वपरिपूर्णां सम्पदं लेभे इति भावः। अतायतेति तनु विस्तारे इत्यस्माद्धातोः कर्मणि लङि आत्मनेपदे यकि च कृते तनोतेर्यकीति विकल्पेनात्वे रूपम्। अहास्तेति ओहाङ्गतौ इत्यस्माद् ये गत्यर्थास्ते प्राप्त्यर्था ज्ञानार्थश्चेति वचनेन प्राप्त्यर्थाल्लुङि आत्मनेपदे ते परे सिचि कृते रूपम्। पूर्यतेति दीर्घपाठे पूः पुरी यता प्राप्ता। कथं भूतां? आयता विशाला इत्यर्थः ॥४६ ॥

**॥इति कालिदासेति कविनामकथनम्। सत्काव्य इति महाकाव्यभिन्नत्ववचनम्। उच्छ्वासः श्वाससाध्यः परिच्छन्दः समाप्त इत्यर्थः ॥**

मिश्रानन्दाकरस्त्वासीन्महोपाध्यायलक्षितः।
पुण्यग्रामसभाजेता यष्टा वाणीमयः सुधीः ॥
वेदेनैव विधिं कविं नयरुतैस्तर्केण वाचस्पतिम्।
वेदान्तेन शिवमनुस्मृतिपरैर्ज्योतिश्चयैर्भास्करम् ॥१ ॥
व्याकृत्येन फणाधरं क्षितिधरं नानाधिपं च सदा।
तत्सूनुः सुकृती क्षितीश्वरकृपापात्रः सुहृत्पालको।

---

१. अत्र च कवित्वौतरुजनेति पाठः। उभयत्र संयोजिते पदे सम्पदकस्य।

नानाशास्त्ररतो महापदयुतोपाध्यायसंज्ञान्वितः ।
सत्तर्कायतकाननोद्यतवलद्वादीन्द्रदन्तावल–
श्रेणीमर्दनचातुरीचणहरो विद्याकरो मैथिलः ॥२ ॥
तस्यात्मजोऽभूद्विबुधाग्रगन्ता प्रज्ञाकरः सज्जनतापहन्ता ।
गुणालयश्रीशपदानुमन्ता शास्त्रेषु दक्षः कुधियां नियन्ता ॥४ ॥
स्वल्पेन वयसा तेन कृता टीका सुबोधिनी ।
पूर्वाचार्यकृतीर्वीक्ष्य सुधियां पश्यतां मुदे ॥५ ॥

॥इति श्री मैथिलप्रज्ञाकरमिश्रप्रणीतायां नलोदयटीकायां सुबोधिन्यां चतुर्थ उच्छवासः ॥
॥समाप्तेयं सुबोधिनी टीका ॥

**अनुवाद**— सौभाग्यशाली नल ने चिरकाल तक उस पुरी का विस्तार किया। इस महान् तेजस्वी नल ने सदैव अति ऐश्वर्य से युक्त समृद्धि को प्राप्त किया ॥४७ ॥

॥श्रीरस्तु ॥

॥समाप्तोऽयं ग्रन्थः ॥

# अकाराद्यनुक्रमेण नलोदयश्लोकानां सूची

| क्र. | श्लोक: | उल्लास: | श्लोकसङ्ख्या |
|---|---|---|---|
| १. | अकृत मुदा यन्तारं | ३ | २३ |
| २. | अगुरतिमहिमानीत: | २ | ५ |
| ३. | अजनि जला पास्यन्तम् | १ | ३५ |
| ४. | अतिरुचिमानस्तवक: | २ | २९ |
| ५. | अथ कामानलिनीनां | २ | ४३ |
| ६. | अथ तरसा रङ्गेयं | १ | ४४ |
| ७. | अथ तुङ्गोपायस्य | ४ | १ |
| ८. | अथ नयनेत्रा सादिप्रचुरा | ४ | ३ |
| ९. | अथ निजराज्यन्तेन | १ | १० |
| १०. | अथ नीरात् सारसत: | २ | ४५ |
| ११. | अथ नुन्नाश्वस्तेन | ४ | २५ |
| १२. | अथ पवनाशमयन्तं | ३ | १७ |
| १३. | अथ महदाऽऽराऽजितया | ४ | ३७ |
| १४. | अथ रतिरेकान्तेन | २ | १ |
| १५. | अथ रथमाराऽवन्तं | ४ | १८ |
| १६. | अथ शबरो हास्यन्तं | ३ | ३७ |
| १७. | अथ ससमुद्रागस्य | १ | २९ |
| १८. | अथ सहसा दमयन्त्या | ३ | २४ |
| १९. | अथ सुरवृषभा: स्वरत: | ३ | १ |
| २०. | अथोद्यतोऽम्बुराजत: | २ | ५१ |

| | | | |
|---|---|---|---|
| ५०. | इत्युक्तो देवनतः | ४ | ३९ |
| ५१. | इह मणितारावलय | २ | ६० |
| ५२. | इह रुचिरामा | २ | २४ |
| ५३. | इह ललनाशोकालि | २ | ९ |
| ५४. | उच्चशिरोदारा | ३ | ३४ |
| ५५. | ऋतौ बभुः | २ | ८ |
| ५६. | कमितुः कलुषाक्षि | २ | ३२ |
| ५७. | करमाकर माकर | ३ | ४५ |
| ५८. | कर्तुं मानन्ते न | ४ | २७ |
| ५९. | कलिमिति नानामायं | ४ | २४ |
| ६०. | का क्षतिरस्ति | २ | ४१ |
| ६१. | का ललना दिवसं तं | २ | २१ |
| ६२. | किमपः सरसीमा | २ | ३९ |
| ६३. | कुरवाप च | २ | ४ |
| ६४. | कृतकर्माऽनेन | ४ | ११ |
| ६५. | कृतभावा सा | १ | ४९ |
| ६६. | कोऽप्यूचे तनयायाः | ४ | ७ |
| ६७. | क्रुधि कान्तवशं | २ | १८ |
| ६८. | क्व भवान् | ३ | १६ |
| ६९. | क्षरत्तुषारशीकरा | २ | ५३ |
| ७०. | क्षिप्तलसन्नालीका | १ | ३४ |
| ७१. | खलसेना नावेद्यः | १ | ९ |
| ७२. | गतपङ्का सारस्य | २ | ४० |
| ७३. | गतमत्र च येन | २ | १७ |
| ७४. | गुरुमहिमा परमाया | १ | ५३ |
| ७५. | चकमे सा | १ | १९ |
| ७६. | छादितरविता | २ | ५० |
| ७७. | जनादसोः समानतः | २ | ३६ |

| | | | |
|---|---|---|---|
| १०६. | धृतवनमह्यन्तेन | ३ | ३९ |
| १०७. | नभसो विवरं | २ | १९ |
| १०८. | नयमानयमा | ३ | ४८ |
| १०९. | नलेन पुर्यतायता | ४ | ४७ |
| ११०. | नवकुसुमानमनागा | २ | २५ |
| १११. | न स मानसमान | २ | १६ |
| ११२. | नात्तिर्नोद्यानेन | १ | २० |
| ११३. | नास्य रमा नावास: | ३ | १० |
| ११४. | निजधामेतं समया | ४ | ८ |
| ११५. | निशि च दिवा च | ४ | २ |
| ११६. | नुन्नमना मधुना | २ | ११ |
| ११७. | नृपधामनि | ४ | ३४ |
| ११८. | पतितमलसमेतस्या | ४ | २३ |
| ११९. | पदवाऽपदवा | ३ | ४२ |
| १२०. | पदापदा परिभ्रमन् | ३ | ५४ |
| १२१. | परकृतमेतत्वेन | ३ | २९ |
| १२२. | पिकोऽपि कोऽपि | २ | १२ |
| १२३. | प्रतिषिद्धान्यायस्य | ३ | ५२ |
| १२४. | प्रथिततमाया मायां | ४ | २९ |
| १२५. | प्रबलतमानबलत | ३ | ५ |
| १२६. | प्रीतिरसादनवनत: | ३ | २२ |
| १२७. | फलगणनादक्षस्य | ४ | २० |
| १२८. | बभौ स सारसागर: | २ | २ |
| १२९. | बभ्रामाऽनस्तेन | ३ | १३ |
| १३०. | बलजितदेवार्याभ्यां | ४ | २१ |
| १३१. | भुव्यतनोदन्तेन | १ | १४ |
| १३२. | भ्रमरैर्द्रागस्तानि | २ | ५६ |
| १३३. | मददम्भावरमस्यज् | १ | ५२ |

| | | | |
|---|---|---|---|
| १६२. | व्युधरवनामान्येषु | १ | ४५ |
| १६३. | व्याकुलयेवारितया | ३ | ५१ |
| १६४. | व्रज सुखमायाहीन | ३ | २१ |
| १६५. | व्रततीनामालीनां | २ | ३३ |
| १६६. | शशिना समहासमहा | १ | ५४ |
| १६७. | शुचमकरोदन्यस्य | ३ | ९ |
| १६८. | शोकभरोदस्तेन | ३ | १५ |
| १६९. | श्रय कलनामाऽऽनन्ते | ३ | ३३ |
| १७०. | श्रितलसदारामाभिः | २ | ३८ |
| १७१. | श्रितेति गामनागत | २ | २० |
| १७२. | श्रीरापि कलापेन | २ | १३ |
| १७३. | श्रीसङ्काशास्यस्य | १ | २५ |
| १७४. | स कथं मानवनानां | ३ | २८ |
| १७५. | स कृतसामान्येन | ४ | १३ |
| १७६. | स च धृतनाग | ३ | १८ |
| १७७. | स च राजा | ४ | ४० |
| १७८. | सचिवगिरा | १ | १५ |
| १७९. | स चोदयावलीनतः | २ | ४६ |
| १८०. | सज्जनतामहितस्य | ४ | २२ |
| १८१. | स जनस्ते | ४ | ६ |
| १८२. | सञ्छन्ना मात्रा | ३ | ५३ |
| १८३. | सत्सदसोमाननया | १ | ५१ |
| १८४. | सनयासनया | ३ | ४९ |
| १८५. | समनिन्दानवना | १ | ४ |
| १८६. | समुदधिताऽऽशा | २ | ३ |
| १८७. | सरः श्रियोऽन्तरं | २ | ४४ |
| १८८. | ससमुद्रमहेलाभि | २ | ५९ |
| १८९. | सहकारवृते समये | २ | १४ |

परिशिष्टम्-२

# ग्रन्थानुक्रमणिका

**आंग्लभाषाग्रन्थाः**


Dasgupta, S.N., De S.K. — A History of Sanskrit Literature Classical Period, Vol. I (Second Ed.) Calcutta, 1962.

De, Sushilkumar — Sanskrit Poetics, Calcutta 1988

Gerow Edwin — A Glossory of Indian Figurs of Speech, Mouton, 1971.

Jha, Kalanatha — Figurative Poetry in Sanskrit Literature, Motilal Banarasidass, Delhi-1175.

Kane, P.V. — History of Sanskrit Poetics, Delhi-1961.

Keith, A.B. — A History of Sanskrit Literature, Oxford, 1958.

Krisnamcariar, M. — History of Classical Sanskrit Literature, Motilal Banarasidass, Delhi 1977.

Macdonel, Arthur, A. — A History of Sanskrit Literature, Motilal Banarasidass, Delhi, 1986.

Menon, K.P.A. — Nine Gems of Sanskrit Literature, 3 Vols., Nag Publishers, Delhi, 1996.

Raja,K. Kunjani — Contribution of Kerala to Sanskrit Literature, Madras, 1980.

Unni, N.P. — 1. Dramas of Kulsekhara : A study, Trivendrum, 1977.
2. Nala Episode in Sanskrit Literaure, Trivendrum, 1977.

Upadhyaya, Ramaji — Sanskrit Kavya Literature, Vol. V, Motilal Banarasidass, Delhi-1988.

**हिन्दीग्रन्थ**

त्रिपाठी, राधावल्लभ — १ कालिदास की समीक्षा परंपरा
२. कालिदास परिशीलन, संस्कृतपरिषद्, संस्कृतविभाग, डा. हरिसिंह गौर वि. वि., सागर, १९८८

त्रिपाठी,रुद्रदेव — संस्कृत साहित्य में शब्दालंकार, लालबहादुर शास्त्री केन्द्रीय संस्कृतविद्यापीठ, दिल्ली ।

पाण्डेय, सत्यनारायण — संस्कृतसाहित्य का आलोचनात्मक इतिहास, साहित्यभंडार, मेरठ, १९७५.

**संस्कृतग्रन्थाः**

अलङ्कारसर्वस्वम् — (जयरथप्रणीतटीकासहितम्) सं० रेवाप्रसादद्विवेदी, चौखम्भा संस्कृतसीरीज आफिस, वाराणसी, १९७१.

अलङ्कारकौस्तुभम् — सं. शिवदत्त शर्मा, काशीनाथ शर्मा, चौखम्भा संस्कृतप्रतिष्ठानम्, दिल्ली, १९७८.

काव्यप्रकाशः (बालबोधिनीसहितः) — सं. रामभट्टझलकीकरः, भण्डारकरप्राच्यविद्यासंशोधनमन्दिरम्, पुणे, १९५०.

काव्यप्रदीपः (प्रभाव्याख्यासहितः) — सं. दुर्गाप्रसादलक्ष्मणशास्त्रीपणशीकरौ, निर्णयसागरप्रेस, बाम्बे, १९३३.

काव्यादर्शः — धर्मेन्द्रकुमारगुप्तः, १९७३.

काव्यानुशासनम् (वाग्भटस्य) — सं. वासुदेवशर्मा, निर्णयसागरप्रेस, बाम्बे, १९१५.

काव्यानुशासनम् (हेमचन्द्रस्य) — सं. वासुदेवशर्मा, निर्णयसागरप्रेस, बाम्बे, १९३४.

काव्यालङ्कारः (भामहस्य) — सं. बटुकनाथशास्त्री खिस्ते, बलदेवोपाध्यायश्च, चौखम्भा संस्कृतसंस्थानम्, २०३८ वि.

काव्यालङ्कारः (नमिसाधुटीकासहितः) — सं. वासुदेवशर्मा, निर्णयसागरप्रेस, बाम्बे, १९२८.

काव्यालङ्कारसङ्ग्रहः (उद्भटस्य) — भण्डारप्राच्यविद्यासंशोधनमन्दिरम्, पुणे, १९८२.

| | |
|---|---|
| त्रिपुरदहनम् (हृदयग्राहिणीटीकासहितम्) | सं. शूरनाडुकुञ्जनपिलाई:, त्रिवेन्द्रम् सं. सी. न. १८१, १९५६. |
| ध्वन्यालोक: (लोचनसहित:) | सं. जगन्नाथपाठक:, चौखम्भा विद्याभवनम्, वाराणसी १९५५. |
| नलोदय: | १. सुबोधिनीसहित:, १८१३.<br>२. लैटिन व्याख्यासहित: १८३०.<br>३. सुबोधिनी सहित:, काव्यसङ्ग्रहे प्रकाशित:, १८४७<br>४. Completes de Kalidasa, Vol. II, फ्रेञ्चभाषानुवादसहित:, १८५९-६०.<br>५. कृष्णविरचितया सुबोधिनीटीकया सहित:, (ग्रन्थाक्षरे मुद्रित:) १९६९.<br>६. सुबोधिनीसहित:, १९६९.<br>७. सुबोधिनीसहित:, कलकत्ता, १९७०.<br>८. जीवाननन्दविद्यासागरसम्पादित:, कलकत्ता, १८७३.<br>९. आंग्लानुवादसहित:, कलकत्ता, १८९४.<br>१०. Collected works of Kalidasa, Vol. II, कलकत्ता, १८९५.<br>११. सुबोधिनीसहित:, कलकत्ता, १८९६.<br>१२ नन्दलालशास्त्रिणा सम्पादित:, बाम्बे, १८९९.<br>१३. प्रज्ञाकरकृतया सुबोधिन्या भास्करानन्दसरस्वतीकृतया च टीकया सनाथित:, वाराणसी, १९०२.<br>१४. कृष्णविरचितया सुबोधिनीटीकया सहित: (तेलुगुभाषाक्षरे मुद्रित:)<br>१५. कविहृदयदर्पणटीकया सहित:, दिल्ली, १९९५ |
| नलोपाख्यानम् | सं. मोनियरविलयम्स, चौखम्भासंस्कृतसीरीज, वाराणसी, १९६५. |
| युधिष्ठिरविजयम् राजानकरत्नकण्ठकृत टीकया सहितम् | १. काव्यामाला ६०, सं. प. शिवदत्तशर्मा, काशीनाथपरवश्च, भारतीयविद्याप्रकाशनम्, दिल्ली, १९८३.<br>२. हिन्दी व्याख्या, वृजेशचंद्रश्रीववास्तव, वाराणसी, १९६८. |
| वाग्भटालङ्कार: | सं. रमानाथमजूमदार:, कलकत्ता, १९७१. |
| सरस्वतीकण्ठाभरणम्, | हिन्दीव्याख्या, चौखम्भा वाराणसी |
| साहित्यदर्पण: (लक्ष्मीसहित:) | सं. श्रीकृष्णमोहनशास्त्री, चौखम्भा संस्कृतसंस्थानम्, वाराणसी, १९८५. |

**Articles:**

| | |
|---|---|
| Ayyar, A.S. Ramanath, | The Authorship of Nalodaya, Journal of Royal Asiatic Society , 1925. |
| Pandey, Ramakant | Yamaka in Nalodaya, Lokaprajñā, Vol. III. |
| Raja, K. Kunjani | Vasudeva Author of Yudhiṣṭhiravijaya, Dr. C.Kunjan Raja Presentation Volume, Madras, 1946. |
| Sharma, V. Venkatarama, | Yamaka Kavi Vasudeva, Proceedings of the tenth All India, Oriental Confrerence, Tirupati, 1940-41. |
| Unni, N.P. | Yamaka Kāvyas in Kerala, Prof. A.V. Sharma felicitation Volume of Viśveśvarānanda Indological Journal, Hoshiarpur, 1980. |